प्रसादेनापितृव्यस्यतयोःकिल ॥ ४४ ॥ अन्वेषणेमतिर्जाताग तौश्रीपतिगोपती ॥ निर्गतौक्वंगतौदेशंवसतःक्वेत्यचिंतयत् ॥ ४५ ॥ लोकान्निंदंतिमांकुर्वंस्तयोरन्वेषणेमतिम् ॥ दिदृक्षुस्तौततःसोपिनिर्जगामानिजात्पुरात् ॥ ४६ ॥ किंचित्सनगरंप्रापद्विजोबालौगवेषयन् ॥ तदेवनगरंप्राप्तोविवेकाख्योद्विजोत्तमः ॥ ४७ ॥ सशिष्यःकन्ययासार्द्धंक्रमन्मार्गंशनैःशनैः ॥ तत्रतेषांसमजनिसंगमोमुनिपुंगवाः ॥ ४८ ॥ विदांचकारतौकृच्छ्रान्मध्यमेवयसिस्थितौ ॥ श्रीपतिस्तुपितृव्यायतत्तत्सर्वंन्यवेदयत् ॥ ४९ ॥ तंदृष्ट्वाताहृशंविप्रंविवेकोब्राह्मणोत्तमः ॥ प्रणम्यविधिनाभ्यर्च्यततःप्रोचेवचोमुदा ॥ ५० ॥ भ्रातुस्तवसुतावेतौपालितौपाठितौमया ॥ प्रयातस्तौप्रापयितुंभवतांग्राममुत्तमम् ॥ ५१ ॥ इतिश्रुत्वाविवेकस्यवचनंमुदितोभवत् ॥ आलिलिंगचतौबालौमूर्धिजिघ्रेपुनःपुनः ॥ ५२ ॥ पादानतांगुणवतींविवेकेनप्रणोदिताम् ॥ आशीर्भिरभिनंद्याथसहर्षोभूद्द्विजोत्तमः ॥ ५३ ॥ विवेकंवचनंप्रोचेत्वत्प्रसादादिमौसुतौ ॥ दृष्टौमत्तोनधन्योस्तिसुहृत्त्वंयस्यहिद्विज ॥ ५४ ॥ अथतेमुदिताःसर्वेभृगुक्षेत्रंययुर्मुदा ॥ ज्ञातिभिःसहसंगम्यशृण्वद्भिस्तद्विचेष्टितम् ॥ ५५ ॥ तौपितृं[1]व्यगृहेस्थित्वाहायनान्यष्टसत्तच ॥ लब्ध्वापितृधनंगेहंनिजंश्रीपतिगोपती ॥ ५६ ॥ ईयतुस्तदनुज्ञातोविवेकःस्वांपुरींययौ ॥ श्रीपतिर्गोपतेस्तत्रविवाहमकरोत्तदा ॥ ५७ ॥ तावेकचेतसौतत्रचक्रतुर्द्विजतर्पणम् ॥श्रीपतिःश्रद्धयायुक्तः[2]कनीयान्व्ययशंकितः ॥ ५८ ॥ विचार्यभार्ययासाकंविभक्तःश्रीपतेरभूत् ॥ सभोगान्विविधान्भुंजन्प्रमत्तोबहुसंपदा ॥ ५९ ॥ नदेव्याराधनंचक्रेगोपतिःसुखलंपटः ॥ अथस्वल्पेनकालेननष्टंतस्ययशनैर्धनम् ॥६०॥अकिंचनोगताश्चिंतां



१ स्वपितृव्यगृहेकांश्चिदुषित्वादिवसांस्तदेतिपाठान्तरम् ।    २ आसीदितिशेषः ।

भार्ययाश्वासितस्तदा ॥ तवभ्रातृगृहेविप्राभुंजतेबहवःसदा ॥ ६१ ॥ गच्छावोनुदिनंकांततत्रभोक्तुमुभावपि ॥ एवंभोजनवेलायामागत्याग
त्यतद्गृहम् ॥ ६२ ॥ भुंजन्भुंजन्निजगृहंगतौतौबहुवासरम् ॥ कदाचिदागतोयावद्गोपतिर्भार्ययासह ॥ ६३ ॥ उपविष्टेषुविप्रेषुभोक्तुंनोविंददा
सनम् ॥ अथान्नराशेरभ्याशेभोजनायक्षुधातुरः॥६४॥उपविष्टःश्रीपतेस्तुभार्ययासनिवारितः॥अस्मादुत्तिष्ठवैतूर्णंत्वमुच्छिष्टंकरिष्यसि ॥६५॥
तिष्ठतिष्ठक्षणंचैवपश्चाद्भुंक्ष्वेतिसाब्रवीत् ॥ गोपतेःकांतयादृष्टंततोविमनसावुभौ ॥ ६६ ॥ अभुक्तावेवनिष्क्रांतौजग्मतुर्निजमंदिरम् ॥ ततःस्व
जायांप्रोवाचनिजमार्गंविचिंतयन् ॥ ६७ ॥ भ्रात्रामयासमंवित्तंसंविभक्तमपिप्रिये ॥ दुर्गतोहंधनोन्मत्तःश्रूयतामत्रकारणम् ॥ ६८ ॥ पुरा
ऽऽवाभ्यांगुरुगृहेव्रतमाचरितंशुभम् ॥ उपांगललितादेव्याविद्यादिसकलंततः ॥ ६९ ॥ प्राप्तंमयातत्सकलंपरित्यक्तंप्रमादतः ॥ ज्येष्ठआचर
तेनित्यंतस्माच्छ्रीस्तंतुसेवते ॥ ७० ॥ तस्मादहंतदाभोक्ष्येयदाद्रक्ष्यामितांशिवाम् ॥ इत्युक्त्वानिर्गतस्तस्माद्गृहादकृतभोजनः ॥ ७१ ॥
तद्भार्याचिंतयाविष्टासापितस्थावनश्नती ॥ भुक्तवत्सुब्राह्मणेषुश्रीपतिःपर्यपृच्छत ॥७२॥ क्वगतोगोपतिरिरितितच्छ्रुत्वासोपिदुःखितः ॥ गोपति
स्तुसरिद्दुर्गवनानिबहुशोभ्रमन् ॥ ७३ ॥ पृच्छंश्चपथिकान्मार्गेनदेव्याःपदमभ्यगात् ॥ पंचमेवासरेप्रातःक्षुत्पिपासार्दितोवने ॥ ७४ ॥
अलब्धदर्शनोदेव्यादुःखितोनिपपातह ॥ तंकृच्छ्रगतमालोक्यभवानीभक्तवत्सला ॥ ७५ ॥ कृतापराधमपितमनुजग्राहवैतदा ॥ गत
मूर्च्छःसमुत्थायदिगंतान्प्रविलोकयन् ॥ ७६ ॥ ददर्शदूरतोगोपंचारयंतंगवांगणम् ॥ तंदृष्ट्वाकिंचिदाश्वस्तोययौतस्यांतिकंशनैः ॥ ७७ ॥

१ भुक्त्वाभुक्त्वानिजगृहमीयतुर्बहुवासरमित्यपिपाठः । २ गोपतिर्भार्ययादुःखंगतोइत्यपिपाठः ।

अपृच्छत्क भवान्यातः कुत्रत्यः कुतआगतः ॥ कोयंदेशः कश्चभूपः किंपुरंनामतद्वद ॥ ७८ ॥ निशम्यवचनंतस्यवक्तुंगोपः प्रचक्रमे ॥ गोपउवाच ॥ उपांगंनामनगरमुपांगोनामभूपतिः ॥ ७९ ॥ उपांगललितादेव्याविद्यतेयत्रमंदिरम् ॥ तत्रत्योहंसमायातः पुनस्तत्रव्रजाम्यहम् ॥ ८० ॥ इत्याकर्ण्यवचस्तस्यविप्रः प्रमुदितोभवत् ॥ सगोपसहितः सायंविवरंप्रविवेशह ॥ ८१ ॥ दूराद्ददर्शभवनंपुरमध्येतपोधनाः ॥ उपांगललितादेव्याः स्फाटिकंगगनंलिहम् ॥ ८२ ॥ सौवर्णेनविचित्रेणकलशेनोपशोभितम् ॥ यथोदयाचलः शैलोदधानोभानुमंडलम् ॥ ॥ ८३ ॥ त्वरितोगोपमामंत्र्यप्रासादंसययौमुदा ॥ प्रणम्यदंडवद्भूमौबद्धांजलिपुटस्तदा ॥ ८४ ॥ उपांगललितांदेवीमथस्तोतुंप्रचक्रमे ॥ गोपतिरुवाच ॥ नमस्तुभ्यंजगद्धात्रिभक्तानांहितकारिणि ॥ जगद्भीतिविनाशिन्यैसर्वमंगलमूर्तये ॥ ८५ ॥ हत्वानिशुंभमहिषप्रभृतीन्सुरारीनिंद्रादयोनिजपदेषुययाभिषिक्ताः ॥ लोकत्रयावनगृहीतमहावतारेमातः प्रसीदसततंकुरुमेऽनुकंपाम् ॥ ८६ ॥ त्वांमुक्तयेनिजजनाकुटिलीकृतांगींगौरींनिजेवपुषिकुंडलिनींभजंति ॥ मुक्त्यैचदेवमनुजाः कनकारविंदबद्धासनामविरतंकमलांस्तुवंति ॥ ८७ ॥ देवींचतुर्भुजांचैकहस्तेचैवगदाधराम् ॥ शार्ङ्गखड्गधरांचैवसौम्याभरणभूषिताम् ॥ ८८ ॥ सरस्वतींपद्मिनींचपद्मकेसरवासिनीम् ॥ नमामित्वामहंदेवींतथामहिषमर्दिनीम् ॥ ८९ ॥ अपराधाः कृताः पूर्वंमयाजन्मनिजन्मनि ॥ तत्सर्वंक्षम्यतांदेविमातर्मेसुविशारदे ॥ ९० ॥ सापराधोस्मिशरणंप्राप्तस्त्वांजगदंबिके ॥ इदानीमनुकंप्योहंयद्वांछामिकुरुष्वतत् ॥ ९१ ॥ इतिस्तुत्वाथशर्वाणींप्रणिपत्यपुनः पुनः ॥ कृतसंध्याविधिस्तत्रसुष्वापाकृतभोजनः ॥ ९२ ॥ स्वप्नेमूर्तिमतीदेवीविप्रमेवंसमादिशत् ॥ गोपतेवत्सतुष्टास्मिगच्छोपांगंमहीप

तिम् ॥ ९३ ॥ मत्पूजनकरंडस्यप्रार्थयस्वापिधानकम् ॥ तत्पूजयन्निजगृहेपरामृद्धिमवाप्स्यसि ॥ ९४ ॥ स्वप्नइत्याप्तसंदेशःप्रभातेगोप
तिस्तदा ॥ राजदर्शनवेलायांनृपद्वारंसमभ्यगात् ॥ ९५ ॥ प्रविष्टोसौनृपसभांप्रतीहारैर्निवेदितः ॥ राज्ञासंभावितस्तत्रनिषसादासनेशुभे
॥ ९६ ॥ पृष्टोगमनेहेतुंश्चययाचेनृपपुंगवम् ॥ देव्यर्चनकरंडस्यपिधानंदेहिमेनृप ॥ ९७ ॥ इत्यार्थितःसविप्रेणजातादेशोनृपोददौ ॥ पिधा
नकंनमस्कृत्यतस्मैचाभ्यर्चनादिकम् ॥ ९८ ॥ आशीर्भिरभिनंद्याथतमामंत्र्यचभूपतिम् ॥ उपांगललितादेव्याःप्रासादंपुनरागमत् ॥ ९९ ॥
प्रणिपत्यांबिकांविप्रस्त्वरितोनिर्ययौबिलात् ॥ समीपेस्वपुरंदृष्ट्वाहृष्टोगृहमुपागमत् ॥ १०० ॥ सुहृद्भिःसहसंगम्यसर्वंतत्कथयन्मुदा ॥ पूज
यित्वापिधानंतद्विदधेपारणंद्विजः ॥ १ ॥ एवमाराध्यमानस्तुससमृद्धोभवत्पुनः ॥ सोपिसत्रंसमारेभेद्विजाग्र्योबहुवासरम् ॥ २ ॥ एका
तस्याभवत्कन्याललितानामसुंदरी ॥ सातत्पिधानमादायविहर्तुंयातिसर्वदा ॥ ३ ॥ प्रमत्तत्वात्प्रियत्वाच्चापितृभ्यामनिवारिता ॥ कदाचि
त्स्ववयस्याभिःसाकंगंगाजलेशुभे ॥ ४ ॥ क्रीडंतीददृशेतोयेनीयमानंकलेवरम् ॥ पिधानहस्तासासिंचदन्याश्चांजलिभिस्तदा ॥ ५ ॥ सस
र्पदष्टउत्तस्थौततोदेव्याःप्रसादतः ॥ सातिक्रांतंद्विजंदृष्ट्वामनसाचकमेपतिम् ॥ ६ ॥ जुहावाभ्यवहारायजनकस्यनिकेतनम् ॥ मार्गेचपरि
पप्रच्छकुलंशीलंचतस्यसा ॥ ७ ॥ सोपिसर्वंसमाचख्यौगुणराशीतिनामच ॥ ललितामंत्रयामासगुणराशिंद्विजोत्तमम् ॥ ८ ॥ परिविष्टेषु
चान्नेषुपितृवेश्मनिमेद्विज ॥ गृहीतापोशनोभूत्वाभार्यार्थंमांत्वमर्थय ॥ ९ ॥ मयानुमोदितस्तातःसमांतुभ्यंप्रदास्यति ॥ तयोक्तोगुणरा

१ वाणोधनादिचेत्यपिपाठः।

शिस्तुतथासर्वंचकारह ॥ ११० ॥ गोपतिर्भार्ययाभ्रात्रासमालोच्यस्वबांधवैः ॥ परीक्षितायविप्रत्वेविद्यायांकुलशीलयोः ॥ ११ ॥ प्रतिजज्ञे
ततःकन्यांललितांगुणराशये ॥ शुभेमुहूर्तेचतयोर्विवाहंकृतवान्प्रभुः ॥१२॥ वरायब्राह्मणेभ्यश्चददौबहुधनंमुदा ॥ विदधेचतयोर्गेहंनातिदूरंस्व
वेश्मतः॥१३॥तत्रोषतुःसानुरागौमिथस्तौदंपतीचिरम् ॥ पिधानकंतयानीतंनिजंललितयागृहम्॥१४॥शनैरथधनंसर्वंगोपतेरगमद्गृहात्॥ गुण
राशिर्धनीजातोमहादेव्याःप्रसादतः॥१५॥करंडस्यपिधानंतज्जनन्याबहुवासरम् ॥ याचितापिनवैप्रादाल्ललितापूजितंगृहे ॥१६॥अथसागोपते
र्भार्यातस्यैवानर्चनाद्व्रतम्॥इत्थंविचिंत्यपापात्माजामातरमघातयत् ॥१७॥ समिदर्थंवनंयातंस्वयंतद्गेहमाययौ ॥ शोचंतींकिलतांकन्यांसतुदे
व्याःप्रसादतः॥१८॥उत्थायविपिनादेत्यभुक्त्वाशेतेसुखंगृहे॥पादसंवाहनंतस्यकुरुतेललितातदा॥१९॥तंदृष्ट्वादुःखिताभूमौप्रणिपत्यपुनःपुनः॥
लज्जिताकृच्छ्रतःपृष्टानिजपापंन्यवेदयत्॥१२०॥स्कंदउवाच ॥ गुणराशिस्तदातस्यैप्रायश्चित्तंददौबहु ॥ सात्मानंबहुकालेनपूतंकृच्छ्रैश्चकारह
॥२१॥श्रीपतेस्त्वचलांलक्ष्मींसमालोक्यतपोधनाः॥गोपतिस्तमथापृच्छद्भ्रातस्त्वंवर्तसेकथम् ॥२२॥किमाचरसिकल्याणंयेनश्रीरनपायिनी॥
इतितस्यवचःश्रुत्वाश्रीपतिर्विस्मितःपुनः ॥ २३ ॥ आस्मारयद्व्रतंदेव्यायत्कृतंगुरुमंदिरे ॥ सोपिभक्त्याव्रतंचक्रेपुनर्भ्रात्रोपदेशितम् ॥ २४ ॥
लेभेसपरमामृद्धिंपुत्रांश्चमुदितोभवत्॥उपांगललितादेव्याःकुर्यादाराधनंततः ॥२५॥ एवमेतत्पुरावृत्तंमाहात्म्यंकथितंमया ॥ कृतमन्यैश्चबहुभि
स्तेपिलब्धमनोरथाः ॥ २६ ॥ व्रतमेतत्तुयःकुर्यादपुत्रःपुत्रवान्भवेत् ॥ इदंतुललितादेव्याःकृत्वाव्रतमनुत्तमम् ॥ २७ ॥ पूज्योभवतिलोक
स्यसत्यंसत्यंनचान्यथा ॥ विधानमस्यवक्ष्येहंतच्छृणुध्वंतपोधनाः ॥ २८ ॥ शुक्लपक्षेतुपंचम्यामिषेमासिचरेद्व्रतम् ॥ गर्जितंसंध्ययोस्त्या

ज्यंदिनवृद्धिक्षयौतथा ॥ ॥ २९ ॥ निर्वर्त्यावश्यकंकर्मशुचीरागविवर्जितः ॥ ततोगत्वावनंविप्राःप्रार्थयेच्चवनस्पतिम् ॥ १३० ॥ आयुर्बलंय
शोवर्चःप्रजाःपशुवसूनिच ॥ ब्रह्मप्रज्ञांचमेधांचत्वन्नोदेहिवनस्पते ॥ ३१ ॥ वनस्पतिप्रार्थना ॥ अपामार्गसमुद्भूतैर्दंतकाष्ठैःकरोम्यहम् ॥
दंतानांधावनंमातःप्रसन्नाभवसर्वदा ॥ ३२ ॥ दंतकाष्ठग्रहणम् ॥ चत्वारिंशत्तथाष्टौचकल्पयित्वाविधानतः ॥ दंतकाष्ठान्युपादायतडागंवा
नदींव्रजेत् ॥३३ ॥ मुखदुर्गंधिनाशायदंतानांचविशुद्धये ॥ ष्ठीवनायचगात्राणांकुर्वेहंदंतधावनम् ॥ ३४ ॥ इतिदंतधावनम् ॥ दंतधावनपूर्वा
णिमज्जनानिसमाचरेत् ॥ ततोयथाविधिस्नात्वाशुक्लवासागृहंव्रजेत् ॥३५॥ शुचौदेशेमंडपिकांकृत्वातीवमनोहराम् ॥ सौवर्णींप्रतिमांशक्त्या
कल्पयेन्मंत्रपूर्विकाम् ॥ ३६ ॥ उपचारैःषोडशभिरेभिर्मंत्रैःसमाहितः ॥ कुर्यात्पूजांप्रयत्नेनदूर्वाभिश्चविशेषतः ॥३७ ॥ द्विजायवाणकंदद्याद्वि
शत्यावटकादिभिः ॥ ततः कथांसमाकर्ण्यवाणकान्नस्यसंख्यया ॥ ३८ ॥ स्वयमद्यात्तदेवान्नंवाग्यतःसहबांधवैः ॥ रात्रौजागरणंकुर्यान्नृत्य
गीतादिमंगलैः॥ ३९॥ प्रभातेपूजयेद्देवींततःकुर्याद्विसर्जनम्[1] ॥ सवाहनाशक्तियुतावरदापूजितामया ॥ १४० ॥ मातर्मामनुगृह्याथगम्यतांनिज
मंदिरम् ॥ तमर्चांगुरवेदद्याद्दानानिचसभूरिशः ॥४१॥ व्रतमेवंचयःकुर्यात्पुत्रबान्धववान्भवेत् ॥ विद्यावान्रोगनिर्मुक्तःसुखीगोधनवान्भवेत् ॥
॥ ४२ ॥ अवैधव्यंचलभतेस्त्रीकन्यावरमुत्तमम् ॥ विजयंपुष्टिमायुष्यंयच्चान्यदपिवांछितम् । ॥ ४३ ॥ इत्येतद्व्रतमाख्यातंसे
तिहासंमहर्षयः ॥ शृण्वन्नपिनरोभक्त्यासुखमाप्नोतिनिश्चितम् ॥ ४४ ॥ निर्मुक्तःससुखीधीमान्व्रतराजप्रसादतः ॥ वित्तमारोग्यमायुष्यंप्रा

१ निशिवास्याद्विसर्जनमित्यपिपाठः ।

प्नोतिचनसंशयः ॥ ४८ ॥ इतिश्री० उपांगल० क० सं० ॥ अथोद्यापनम् ॥ आचार्यंवरयेत्पश्चादृत्विजोविंशतिंतथा ॥ उपलिप्तेशुचौदेशे
विलिखेन्मंडलंततः ॥ १ ॥ ब्रह्मादींश्चततःस्थाप्यपूजयेद्विधिमंत्रतः ॥ अव्रणेकलशेशुद्धेललितांस्थापयेत्तथा ॥ रात्रौजागरणंकृत्वाप्रभातेहो
ममाचरेत् ॥ इक्षुदंडतिलैःशुद्धैःपायसेनापिवाव्रती ॥ अष्टोत्तरशतंहुत्वाबलिदानंसमाचरेत् ॥ वायनंचततोदद्याद्वंशपात्रेनिधायच ॥ वटकान्विं
शतिसंख्यान्निर्मलान्घृतपाचितान् ॥ आचार्यंपूजयेत्पश्चाद्वस्त्रालंकारधेनुभिः ॥ ऋत्विजश्चतथादद्यात्कुंभंवस्त्रंसदक्षिणम् ॥ विसृज्यचततःपीठ
माचार्यायनिवेदयेत् ॥ भोजयेच्चततोविप्रान्पायसान्नेनभक्तितः ॥ विप्राज्ञांचततोगृह्यस्वयंभुंजीतबंधुभिः ॥ इतिश्रीस्कंदपु० उपांगललि०
व्रतोद्यापनंसंपूर्णम् ॥ अथमाघशुक्लपंचम्यांवसंतप्रवृत्तिः ॥ सामध्याह्नव्यापिनीग्राह्या ॥ दिनद्वयेतद्व्याप्तावव्याप्तौवापूर्वा ॥ तत्रविष्णोःपू
जाकार्या ॥ माघेमासितेपक्षेपंचम्यांपूजयेद्धरिम् ॥ पूर्वविद्धाप्रकर्तव्यावसंतादौतथैवच ॥ तैलाभ्यंगंततःकृत्वाभूषणानिचधारयेत् ॥ नित्यंनैमि
त्तिकंकृत्वापिष्टातेनार्चयेद्धरिम् ॥ गंधपुष्पैश्चधूपैश्चनैवेद्यैःपूजयेत्सदा ॥ नारीनरोवाराजेंद्रसंतर्प्यपितृदेवताः ॥ स्रक्चंदनसमायुक्तान्ब्राह्मणा
न्भोजयेत्ततः ॥ इतिहेमाद्रौवसंतपंचमीविधिः ॥ ॥ अथ षष्ठीव्रतानि ॥ ॥ तत्रभाद्रशुक्लषष्ठ्यांललिताव्रतंहेमाद्रौभविष्ये ॥ सामध्याह्नव्या
पिनीग्राह्या ॥ तद्व्याप्तावव्याप्तौवापूर्वाजागरणप्रधानत्वात् ॥ इदंगुर्जरदेशेप्रसिद्धम् ॥ कृष्णउवाच ॥ भद्रेभाद्रपदेमासिशुक्लेषष्ठ्यांसुसंयुता ॥
नारीस्नात्वाप्रभातेतुशुक्लमाल्यांबराशुचिः ॥ सुवेषाभरणोपेताभूत्वासंगृह्यवालुकाम् ॥ कृत्वातस्यावंशपात्रेपंचपिंडाकृतिंशुभाम् ॥ ध्यात्वा

१ गुलालेतिप्रसिद्धेन ।

तुललितांदेवींतपोवननिवासिनीम् ॥ पंकजंकरवीरंचनेवालींमालतींतथा ॥ नीलोत्पलंकेतकंचसंगृह्यतगरंतथा ॥ एकैकाष्टशतंग्राह्य
मष्टाविंशतिरेववा ॥ अक्षताःकलिकाग्राह्यास्ताभिर्देवींसमर्चयेत् ॥ प्रार्थयेदग्रतोभूत्वादेवींतांगिरिशप्रियाम् ॥ गंगाद्वारेकुशावर्ते
बिल्वकेनीलपर्वते ॥ स्नात्वाकनखलेतीर्थेहरंलब्धवतींपतिम् ॥ ललितेललितेदेविसौख्यसौभाग्यदायिनि ॥ अनंतंदेहिसौभाग्यं
पुत्रपौत्रप्रवर्धनम् ॥ मंत्रेणानेनकुसुमैश्चंपकैर्बकुलैःशुभैः ॥ एवमभ्यर्च्यविधिनानैवेद्यंपुरतोन्यसेत् ॥ त्रपुसैरपिकूष्मांडैर्नारिकेरैःसुदा
डिमैः ॥ बीजपूरैःसतुंडीरैःकारवेल्लैःसचिर्भटैः ॥ फलैस्तत्कालसंभूतैःकृत्वाशोभांतदग्रतः ॥ विरूढैर्धान्यसंभूतैर्दीपिकाभिःसमंततः ॥
सार्धंसगुडकैर्धूपैःसोहालककरंजकैः ॥ घृ[1]तपक्वैःकर्णवेष्टैर्मोदकैरुपमोदकैः ॥ बहुप्रकारैर्नैवेद्यैर्यथाविभवसारतः ॥ एवमभ्यर्च्यवि
धिवद्रात्रौजा[2]गरणोत्सवम् ॥ गीतवाद्ययुतैर्नृत्यैःप्रेक्षणीयैरनेकधा ॥ सखीभिःसहितासार्धंतांरात्रिंप्रश[3]मंनयेत् ॥ नचसंमीलयेन्ने
त्रेनारीयामचतुष्टयम् ॥ दुर्भगादुःखितावंध्यानेत्रसंमीलनाद्भवेत् ॥ एवंजागरणंकृत्वासप्तम्यांसरितंनयेत् ॥ गंधपुष्पैरथाभ्यर्च्यगी
तवाद्यपुरःसरम् ॥ तच्चदद्याद्द्विजेंद्रायनैवेद्यादिनृपोत्तम ॥ स्नात्वावस्त्रंपरीधायधृत्वासौभाग्यकुंकुमम् ॥ ततोगृहंसमागत्यहुत्वावैश्वानरं
क्रमात् ॥ देवान्पितॄन्ब्राह्मणांश्चपूजयित्वासुवासिनीः ॥ कन्यकाश्चैवसंभोज्यदी[4]नानाथांश्चभोजयेत् ॥ भक्ष्यभोज्यैर्बहुविधैर्दत्वादाना
निभूरिशः ॥ ललितामेऽस्तुसुप्रीताइत्युक्त्वातुविसर्जयेत् ॥ यःकश्चिदाचरेदेतद्व्रतंसौभाग्यदंपरम् ॥ षष्ठ्यांतुललितासंज्ञंसर्वपापनिवर्हं

---

१ गुडपुष्पैरित्यपिपाठः । २ कुर्यादितिशेषः । ३ समापयेदित्यर्थः । ४ ब्राह्मण्योदशपंचचेत्यपिपाठः ।

णम् ॥ नरोवायदिवानारीतस्यपुण्यफलंशृणु ॥ यत्तुलभ्यंव्रतैश्चान्यैर्दानैर्वातपसत्तम ॥ तपोभिर्नियमैर्वापितद्देतेनहिलभ्यते ॥ इहचै वातुलासंपत्सौभाग्यमनुभूयच ॥ कृत्वामूर्ध्निपदंपार्थसपत्नीनांयशस्विनी ॥ मृताशिवपुरंप्राप्यदेवैरसुरपन्नगैः ॥ प्राप्नोतिदर्शनंदे व्यास्तयातुसहमोदते ॥ पुण्यशेषादिहागत्यपुण्यसौख्यैकभाजनम् ॥ साध्वीत्रेतायुगेसाध्वीसीतेवप्रियवल्लभा ॥ इदंयः शृणुया त्पार्थपठेद्वासाधुसंसदि ॥ सोपिपापविनिर्मुक्तःशक्रलोकेमहीयते ॥ षष्ठ्यांजलांतरगतांवरवंशपात्रेसंगृह्यपूजयतियासिकतांक्रमेण ॥ नक्तं चजागरमनुद्धतवेशशीलाकुर्यादसौत्रिभुवनेललितेवभाति ॥ इतिहेमाद्रौललिताषष्ठीव्रतंसंपूर्णम् ॥ ॥ अथभाद्रपदकृष्णषष्ठ्यांक पिलाषष्ठीव्रतम् ॥ ॥ तच्चयोगविशेषेणपूर्वविद्धायांपरविद्धायांवाकार्यम् ॥ तेचयोगाःपुराणसमुच्चयेदर्शिताः ॥ भाद्रेमास्यसितेपक्षे भानौचैवकरेस्थिते ॥ पातेकुजेचरोहिण्यांसाषष्ठीकपिलास्मृता ॥ संयोगेतुचतुर्णांचनिर्दिष्टापरमेष्ठिना ॥ ॥ अथव्रतविधिर्हेमाद्रौ स्कांदे ॥ विक्रांतउवाच ॥ रूपसंपदमारोग्यंसंततिंचातिपुष्कलाम् ॥ प्राप्नुवंतिनरायेननियमंतंवदस्वमे ॥ १ ॥ अगस्त्यउवाच ॥ साधुसाधुमहाप्राज्ञयत्पृष्टोहंत्वयानघ ॥ तत्सर्वंकथयिष्यामिततःश्रेयोभविष्यति ॥ शृणुपार्थिववक्ष्यामिस्वर्गमोक्षप्रदंनृणाम् ॥ २ ॥ यच्चगुप्तंपुराराजन्ब्रह्मरुद्रेन्द्रदैवतैः ॥ असुराणांचसर्वेषांराक्षसानांतथैवच ॥ ३ ॥ शंकरेणपुराचैतत्षण्मुखायनिवेदितम् ॥ षण्मुखेनम माख्यातंमहापातकनाशनम् ॥४॥ यच्छ्रुत्वाब्रह्महागोघ्नःसुरापोगुरुतल्पगः ॥ अगारदाहीगरदःसर्वपापरतोपिवा ॥ ५ ॥ मुच्यतेसर्वपापेभ्यः स्वर्गलोकंचगच्छति ॥ यच्चपुण्यंपवित्रंचनृणामद्भुतनाशनम् ॥ ६ ॥ उपकारायलोकानांतथातवनृपोत्तम ॥ शृणुभूपमहापुण्यंषष्ठीमाहा

त्म्यमुत्तमम् ॥ ७ ॥ प्रौ[1]ष्ठपदासितेपक्षेषष्ठीभौमेनसंयुता ॥ व्यतीपातेनरोहिण्यासाषष्ठीकपिलास्मृता ॥ ८ ॥ आ[2]श्विनस्यासितेपक्षेमहा
पुण्यप्रवर्धिनी ॥ षष्टिसंवत्सरस्यांतेसापुनस्ते[3]नसंयुता ॥ ९ ॥ चैत्रवैशाखयोर्मध्येसितेपक्षेशुभोदया ॥ वैशाखेपिचराजेंद्रद्वारवत्यांपरा
स्मृता ॥ १० ॥ यदिहस्तेसहस्रांशुस्तदाकार्यंव्रतंबुधैः ॥ अस्यांचैवहुतंदत्तंयत्किंचित्प्रतिपादितम् ॥ ११ ॥ तस्यसर्वस्यपुण्यस्य
संख्यावक्तुंनशक्यते ॥ यस्मिन्कालेभवेदेतैर्गुणैःषष्ठीयुतातदा ॥ १२ ॥ पंचम्यामेकभक्तंचकुर्यात्तत्रविचक्षणः ॥ षष्ठ्यांप्रातःसमुत्थायकृत्वा
दौदंतधावनम् ॥ जलपूर्णांजलिंकृत्वाइमंमंत्रमुदीरयेत् ॥ १३ ॥ निराहाराद्यदेवेशत्वद्भक्तस्त्वत्परायणः ॥ पूजयिष्याम्यहंभक्त्याशरणंभव
भास्कर ॥ १४ ॥ अर्घ्यंदत्वेतिसंकल्पंकृत्वायत्नाच्छुचिस्ततः ॥ स्नानंकृत्वाप्रयत्नेननद्यांतीर्थेथवाह्रदे ॥ १५ ॥ तडागेदीर्घिकायांवागृह
वानियतात्मवान् ॥ देवदारुंतथोशीरंकुंकुमैलामनःशिलम् ॥ १६ ॥ पद्मकंपत्रकं[4]षष्टिमधुगव्येनपेषयेत् ॥ क्षीरेणालोड्यकल्केनस्नानंकुर्या
त्समंत्रकम् ॥ १७॥ आपस्त्वमसिदेवेशज्योतिषांपतिरेवच ॥ पापंशमयदेवेशमनोवाक्कायकर्मजम् ॥ १८ ॥ पंचगव्यकृतस्नानःपंच[5]भंगैस्तुमा
र्जयेत् ॥ आनयेन्मृत्तिकांशुद्धांस्नानार्थंवैप्रयत्नतः ॥ १९ ॥ मृत्तिकेब्रह्मपूतासिकाश्यपेनाभिमंत्रिता ॥ पवित्रंकुरुमांनित्यंसर्वपापात्समुद्धर ॥
॥२०॥अनेनमृत्तिकास्नानम्॥मंत्रेणानेनवरुणंप्रार्थयेद्भक्तिमान्नरः॥२१॥पाशाग्रहस्तवरुणसर्ववारीश्वरप्रभो ॥ अद्याहंप्रार्थयामित्वांपूतंकुरुसु
श्वर॥२२॥आदित्योभास्करोभानूरविःसूर्योदिवाकरः॥प्रभाकरोवितिमिरोदेवःसर्वेश्वरोहरिः ॥ २३ ॥ इतिजपित्वा ॥ गोमयेनोपलितायांभूम्यां

१ भाद्रपदः । २ हेमाद्रौतु एतदर्धस्थाने द्वितीयातुमहापुण्यादुर्लभात्रातिनःक्वचित् इत्यर्धमस्ति । ३ पूर्वोक्तयोगेन । ४ षष्टिकतंडुलाः । ५ पंचपल्लवैः ।

वैकुंकुमेनतु ॥ मंडलंसर्वतोभद्रमालिखेद्बुद्धिमान्नरः ॥ तत्रमध्येलिखेत्पद्ममष्टपत्रंसकर्णिकम् ॥ २४ ॥ पूर्वपत्रेन्यसेत्सूर्यमाग्नेयेतपनंन्यसेत् ॥ सुवर्णरेतसंयाम्येनैर्ऋत्येचन्यसेद्रविम् ॥ २५ ॥ आदित्यंवारुणेपत्रेवायव्येचदिवाकरम् ॥ सौम्येप्रभाकरंतत्रसूरमीशानपत्रके ॥ २६ ॥ तीव्ररश्मिधरंदेवंब्रह्माणंचैवविन्यसेत् ॥ आधाररूपिणंदेवंमध्येचैवारुणंन्यसेत् ॥ २७ ॥ सहस्ररश्मिंसूर्यंचसूक्ष्मस्थूलगुणान्वितम् ॥ सर्वंगंसर्वरूपंचमध्येभास्करमेवच ॥ सप्ताश्वरथमारूढंपद्महस्तंदिवाकरम् ॥ अक्षसूत्रधनुष्पाणिंकुंडलैर्मुकुटेनच ॥ रत्नैर्नानाविधैर्युक्तंसौवर्णंतत्रकारयेत् ॥ शक्तितस्तुपलादूर्ध्वंतदर्धकर्षतोपिवा ॥ सौवर्णमरुणंकुर्याद्रज्जुंचैवतथाविधाम् ॥ सप्ताश्वैर्भूषितंकृत्वारथंतस्याग्रतःस्थितम् ॥ अरुणंविनतापुत्रंगृहीताश्वमनूरुकम् ॥ एवंरूपंरथंकृत्वापद्मस्योपरिविन्यसेत ॥ तस्योपरिन्यसेद्देवंरक्तवस्त्रविभूषितम् ॥ रक्तचंदनमाल्यादिमंडितंचातिशोभनम् ॥ अग्रतःसारथिंकृत्वा पूजयेदरुणंशुचिः ॥ रक्तपुष्पैस्तुगंधैश्चतथान्यैरपिशक्तितः ॥ विनतातनयोदेवःकर्मसाक्षीतमोनुदः ॥ सप्ताश्वः सप्तरज्जुश्चअरुणोमेप्रसीदतु ॥ मंत्रेणानेनसंपूज्यसारथिंतदनंतरम् ॥ देवस्यत्वासनंकल्प्यंप्रभूतादिकपंचकम् ॥ प्रभूतंविमलंसारमाराध्यंपरमंशुभम् ॥ दीप्तादिशक्तिभिश्चैवततोभानुंप्रपूजयेत् ॥ दीप्तासूक्ष्मातथाभद्राबिंबिनीविमलानघा ॥ अमोघावैद्युताचेतिनवमीसर्वतोमुखी ॥ अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरेद्भास्करंदेवंसबाह्याभ्यंतरःशुचिः ॥ शिखायांभास्करंन्यस्यललाटेसूर्यमेवच ॥ चक्षुर्मध्येन्यसेद्भानुंमुखेतत्ररविंन्यसेत् ॥ कंठेन्यसेद्भानुमंतंपद्महस्तंद्विहस्तयोः ॥ तिमिरक्षयकृद्देवंस्तनयोरेवविन्यसेत् ॥

१ अत्रमध्येपूज्यंभास्करमनूद्यतत्रध्येयागुणाविधीयंते । २ विनतेत्यपि पाठः ।

जातवेदोभिधंनाभ्यांकट्यांभानुंतथान्यसेत् ॥ उग्ररूपंगुह्यदेशेतेजोरूपंद्विजंघयोः ॥ पादयोःसर्वरूपंतुसूक्ष्मस्थूलगुणान्वितम् ॥ एवंय थोक्तंविन्यस्य[1]पात्रंगृह्यततोर्चयेत् ॥ करवीरार्ककुसुमैरक्तचंदनमिश्रितैः ॥ पुष्पैःसुगंधैर्धूपैश्चकुंकुमैरुपशोभितम् ॥ मार्तंडंभानुमादित्यंभा स्करंतपनंरविम्॥हंसंदिवाकरंचेतिपादतोमुकुटावधि॥पादौजंघेतथाजानुद्वयमूरूकटींतथा॥नाभिर्वक्षःस्थलंशीर्षमेतेष्वंगेषुपूजयेत् ॥ आनयेद र्घ्यपात्रंचेद्[2]द्रौप्यंवाताम्रमेवच॥ अर्घ्यार्थं[3]दैवतंपात्रमुदकेनप्रपूरयेत् ॥ पूजयेत्तत्रप्रागादिदेवतास्ताःसमाहितः ॥ दिग्देवतास्ततःपूज्यागंधपुष्पानुले पनैः॥पात्रेतोयंसमादायसपुष्पफलचंदनम्॥ जानुभ्यामवनिंगत्वासूर्यायार्घ्यंनिवेदयेत् ॥ वेदगर्भनमस्तुभ्यंदेवगर्भनमोस्तुते ॥ अव्यक्तमूर्तये तुभ्यमर्घ्यंगृह्णनमोस्तुते॥ब्रह्ममूर्तिंधरायेशचतुर्वक्रसनातन॥सृष्टिस्थितिविनाशायगृहाणार्घ्यंनमोस्तुते॥विष्णुरूपधरोदेवः पीतवस्त्रश्चतुर्भुजः॥ प्रभवःसर्वलोकानामर्घ्यंगृह्णनमोस्तुते ॥ तंरुद्ररूपिणंवंदेभगवतंत्रिशूलिनम् ॥ योदहेच्चत्रिलोकंवैअर्घ्यंगृह्णनमोस्तुते ॥ उदयस्थमहाभूतते जोराशिसमुद्भव ॥ तिमिरक्षयकृद्देवह्यर्घ्यंगृह्णनमोस्तुते ॥ मंत्रपूतगुडाकेशनृगतेव्याधिनाशन ॥ सप्ताभिश्चैवजिह्वाभिरर्घ्यंगृह्णनमोस्तुते ॥ त्वंब्रह्माचत्वंचाविष्णूरुद्रस्त्वंचप्रजापतिः ॥ त्वमेवसर्वभूतात्माअर्घ्यंगृह्णनमोस्तुते ॥ [4]कालात्मासर्वभूतात्मावेदात्मासर्वतोमुखः ॥ जन्ममृत्यु

---

१ पात्रमित्यर्चनांतर्गतार्घ्यसमयएववक्ष्यमाणद्वादशार्घ्यसाधारणपात्रपरिग्रहोविधीयते ॥ शोभितमित्यर्चयेदितिक्रियाविशेषणम् ॥ ( कौ० )। २ चेदित्यनेनवक्ष्यमाणद्वादशार्घ्येषुपूजांतर्गतार्घ्यपात्रात्पात्र भेदपक्षोज्ञाप्यते ॥ ( कौ० )। ३ अर्घ्याविक्ष्यमाणास्तदर्थम् ॥ दैवतंदैवकर्मार्हंताम्रादिजातीयम् ॥ प्रपूरयेदितिवक्ष्यमाणार्घ्यपर्याप्तंपूरणंकार्यमित्याशयः ॥ पूरितपात्रेष्टदिक्षुदिशांपूजनंततोदिक्पालानामिंद्रादीनां ततःपूर्वार्घ्यपात्रेपात्रान्तरेवातत्तोयंसमादायेतिक्रियावीप्सयासमादायसमादायार्घ्यानिवेदयेदित्यर्थः ॥ ( कौ० )। ४ अत्रहरिदश्वइत्यर्धस्यकालात्मेत्याद्यर्द्धचतुष्टयांतेषुप्रत्येकमनुषंगान्मंत्रचतुष्टयंबोध्यम् ॥ अतएवदा रिद्र्येत्यर्धद्वये दिवाकरपदपाठानिमित्तपौनरुक्त्यभावः ॥ एवंसतिद्वादशमंत्राःसंपद्यंते ( कौ० )।

जराशोकसंसारभयनाशनः ॥ दारिद्र्यव्यसनध्वंसीश्रीमान्देवोदिवाकरः ॥ सुवर्णःस्फाटिकोभानुःस्वर्णरेतादिवाकरः ॥ हरिदश्वोंशुमालीच
अर्घ्यंगृह्णनमोस्तुते॥चतुर्भिर्मूर्तिभिःसंस्थात्वष्टाभिःपरिगीयते॥सामध्वनिस्तुतोयज्ञअर्घ्यंगृह्णनमोस्तुते॥अथगंधंचपुष्पंचतथाधूपंप्रदीपकम्॥
नैवेद्यंचयथाशक्त्याप्रार्थयेत्सूर्यदेवताम्॥अग्निमीळेनमस्तुभ्यंनमस्तेजातवेदसे॥इषेत्वैवनमस्तुभ्यमग्नेचैवनमोनमः ॥ शन्नोदेवीनमस्तुभ्यंजग
ज्जन्मनमोनमः॥आत्मरूपिन्नमस्तुभ्यंविश्वमूर्तेनमोनमः॥त्वंधातात्वंचवैविष्णुस्त्वंब्रह्मात्वंहुताशनः॥ मुक्तिकाममभीप्सामिप्रार्थयामिसुरेश्वर ॥
विश्वतश्चक्षुराख्यातोविश्वतश्चरणाननः॥विश्वात्मासर्वतोदेवःप्रार्थयामिसुरेश्वर ॥ इतिमंत्रंसमुच्चार्यनमस्कुर्वीतभास्करम्॥संवर्चसेतिपाणिभ्यां
तोयेनविमृजेन्मुखम् ॥ हंसःशुचिषदित्यृचासूर्यस्यैवावलोकनम् ॥ उदुत्यंचित्रमित्येतत्सूक्तंदेवाग्रतोजपेत्॥ [2]पद्मकेसरकोणेतुफलकंचैवकारये
त् ॥ [3]फलैःपुष्पैरक्षतैश्चभक्ष्यैर्नानाविधैरपि ॥ शय्यांतत्रचदेवस्यशुभेदेशेप्रकल्पयेत्॥षड्धान्यंषड्रसंचैवरौप्यंचैवमहाप्रभुम् ॥ पुरुषंखड्गहस्तं
चकारयेच्चैवबुद्धिमान् ॥ वस्त्रयुग्मेनसंछन्नंलवणोपरिविन्यसेत् ॥ अनेनैवतुमंत्रेणस्नानमर्घ्यार्चनंततः ॥ नमस्तेक्रोधरूपायखड्गहस्ताजिघां
सवे ॥ जिघांसकंचत्वांदृष्ट्वादुद्रुवुःसर्वदेवताः ॥ त्वयाव्याप्तंमेरुपृष्ठंचंडभास्करसुप्रभम् ॥ अतस्त्वांपूजयिष्यामिअर्घ्यंगृह्णनमोस्तुते ॥ क्षप
यित्वातुतांरात्रिंगीतवादित्रनिःस्वनैः ॥ ततस्त्वभ्युदितेसूर्येहोमंकुर्यात्स्वशक्तितः ॥ [4]पूजयेत्तत्रशक्त्याचदेवांश्चविधिवद्गुरुम् ॥ होमोर्कस्यस

१ दत्त्वेतिशेषः । २ प्रशस्तेचैवकोणेचेत्यपिपाठः ॥ (कौ०)। ३ अत्रास्तप्रारंभसमयेकोणफलकोपरिऐशानदिशिशय्यांनिधायतत्समीपेफलपुष्पाक्षतनानाविधभक्ष्यैः सहषड्रसषड्धान्यानिनिधायशय्यायाअधोलवणंनिधायराजतंखड्गहस्तंपुरुषंशय्योपरिनिधायत त्रनमस्तइतिमंत्रेणपंचोपचारपूजनंतदंतर्गतार्घ्यदानंत्वयाव्याप्तमितिमंत्रेणेतिबोध्यम् ॥ (कौ०) ४ तत्रहोमारंभे ॥ देवानावाहितान् । शक्त्यापंचोपचारैरपि ।

सर्वैंभूतसंघामहर्षयः ॥ आकाशस्थाः प्रनृत्यंतिपुण्येऽस्मिन्दिवसागमे ॥ पात्रभूतायऋषयेश्रोत्रियायकुटुंबिने ॥ एवंयःकपिलां
दद्याद्विधिदृष्टेनकर्मणा ॥ सयातिपरमंस्थानंयावन्नच्यवतेपुनः ॥ इतिहेमाद्र्युक्तोव्रतविधिः ॥ स्कांदेप्रभासखंडेतुसंक्षेपेणोक्तोव्रतविशे
षः ॥ उपलिप्तेशुचौदेशेपुष्पाक्षतविभूषिते ॥ स्थापयेदव्रणंकुंभंचंदनोदकपूरितम् ॥ पंचरत्नसमायुक्तंदूर्वापुष्पाक्षतान्वितम् ॥
रक्तवस्त्रयुगच्छन्नंताम्रपात्रेणसंयुतम् ॥ रथंरौप्यपलस्यैवएकचक्रंसुचित्रितम् ॥ सौवर्णींपलसंयुक्तांमूर्तिंसूर्यस्यकारयेत् ॥ कुंभस्योप
रिसंस्थाप्यगंधपुष्पैस्तथार्चयेत् ॥ आदित्यंपूजयेद्देवंनामाभिःस्वैर्यथोदितैः ॥ आदित्यभास्कररवेभानोसूर्यदिवाकर ॥ प्रभाकरनमस्तुभ्यं
संसारान्मांसमुद्धर ॥ भुक्तिमुक्तिप्रदोयस्मात्तस्माच्छांतिंप्रयच्छमे ॥ नमोनमस्तेवरदऋक्सामयजुषांपते ॥ नमोस्तुविश्वरूपायविश्वधात्रेनमो
स्तुते ॥ एवंसंपूज्यविधिवद्देवदेवंदिवाकरम् ॥ पूजयेत्कपिलांधेनुंवस्त्रमाल्यानुलेपनैः ॥ दानमंत्रः ॥ दिव्यमूर्तिर्जगच्चक्षुर्द्वादशात्मादिवाकरः ॥
कपिलासहितोदेवोममभुक्तिंप्रयच्छतु ॥ यस्मात्त्वंकपिलेपुण्येसर्वलोकस्यपावनी ॥ प्रदत्तासहसूर्येणममभुक्तिप्रदाभव ॥ ॥ इतिस्कांदेप्रभा
सखंडोक्तंकपिलाषष्ठीव्रतंसंपूर्णम् ॥ ॥ अथकार्तिकेस्कंदषष्ठीव्रतम् ॥ सापूर्वयुताग्राह्या ॥ कृष्णाष्टमीस्कंदषष्ठीशिवरात्रिश्चतुर्दशी ॥ एता
पूर्वयुताःकार्यास्तिथ्यंतेपारणंभवेदितिभृगूक्तेः ॥ हेमाद्रौभविष्ये ॥ श्रीकृष्णउवाच ॥ षष्ठ्यांफलाशनोराजन्विशेषात्कार्तिकेनृप ॥ राज्यच्युतो
विशेषेणस्वंराज्यंलभतेऽचिरात् ॥ षष्ठीतिथिर्महाराजसर्वदासर्वकामदा ॥ उपोष्यासाप्रयत्नेनसर्वकालंजयार्थिना ॥ कार्तिकेयस्यदयिताएषा

षष्ठीमहातिथिः ॥ देवसेनाधिपत्यंहिप्राप्तमस्यांमहात्मना ॥ अस्यांहिश्रीसमायुक्तोयस्मात्कंदोभवत्पुरा ॥ तस्मात्षष्ठ्यांनभुंजीतप्राप्नुयाद्भार्गवीं
सदा॥दत्वार्घ्यंकार्तिकेयायस्थित्वावैदक्षिणामुखः॥दध्नाऽक्षतोदकैःपुष्पैर्मंत्रेणानेनसुव्रत॥सप्तर्षिदारजस्कंदसेनाधिपमहाबल ॥ रुद्रोमाग्निजषड्व
क्त्रगंगागर्भनमोस्तुते ॥ प्रीयतांदेवसेनानीःसंपादयतुहृद्गतम् ॥ दत्वाविप्रायचामान्नंयच्चान्यद‍पिवर्तते ॥ पश्चाद्भुक्त्वसौराग्यांभूमिंकृत्वातुभाज
नम्॥एवंषष्ठीव्रतस्थस्यउक्तंस्कंदेनयत्फलम्॥तन्निबोधमहाराजप्रोच्यमानंमयाखिलम् ॥ षष्ठ्यांफलाशनोयस्तुनक्ताहारोभविष्यति॥शुक्लायाम
थकृष्णायांब्रह्मचारीसमाहितः॥ तस्यसिद्धिंधृतिंपुष्टिंराज्यमायुर्निरामयम् ॥ पारत्रिकंचैहिकंचदद्यात्स्कंदोनसंशयः॥अशक्तश्चोपवासेवैसचनक्तं
समाचरेत् ॥ तैलंषष्ठ्यांनभुंजीतनदिवाकुरुनंदन ॥ यस्तुषष्ठ्यांनरोनक्तंकुर्याद्भरतसत्तम ॥ सर्वपापैर्विनिर्मुक्तोगांगेयस्यप्रसादतः ॥
स्वर्गेचनियतंवासंलभतेनात्रसंशयः ॥ इहचागत्यकालेनयथोक्तफलभाग्भवेत् ॥ देवानामपिवंद्योसौराजराजोभविष्यति ॥ इतिस्कंदषष्ठीव्र
तंभविष्योक्तंसंपूर्णम् ॥ अथभाद्रपदेवामार्गशीर्षेशुक्लेचंपाषष्ठीव्रतंहेमाद्रौस्कांदे ॥ सोत्तरयुताग्राह्या ॥ षण्मुन्योरितियुग्मवाक्यात् ॥ स्कंद
उवाच ॥ प्राप्तराज्यंचराजानंधर्मपुत्रंयुधिष्ठिरम् ॥ कदाचिदाययौद्रष्टुंदुर्वासामुनिसत्तमः ॥ तंपप्रच्छमहातेजाधर्मसूनुःकृतांजलिः ॥ राज्य
लाभःकथंजातोममविप्रतपोनिधे ॥ तद्व्रतंश्रोतुमिच्छामिकर्तुंचमुनिसत्तम ॥ दुर्वासाउवाच ॥ शृणुराजन्महाभागव्रतानामुत्तमंव्रतम् ॥ अ
स्तीहयच्चीर्णमात्रंसर्वकामांस्तुपूरयेत् ॥ षष्ठीभाद्रपदेशुक्लावैधृत्याचसमन्विता ॥ विशाखाभौमयोगेनसचंपाइतिविश्रुता ॥ देवासुरमनुष्या

१ लक्ष्मीम् ।

मिद्भिश्चघृतमिश्रैस्तिलैस्तथा ॥ संसिद्धंचचरुद्रव्यंघृतंचजुहुयाद्द्विजः ॥ आकृष्णेनेतिमंत्रेणशतमष्टोत्तरंक्रमात् ॥ होमोव्याहृतिभिर्वाथस्विष्ट
कृत्तदनंतरम् ॥ कपिलांपूजयेद्देवींसवत्सांपापनाशिनीम् ॥ वस्त्रयुक्तांसघंटांचस्वर्णशृंगविभूषिताम् ॥ तां[1]म्रपृष्ठींरौप्यखुरांकांस्यदोहनकान्वि
ताम् ॥ मंत्रेणा[2]नेनतांदद्याद्ब्राह्मणायचशक्तितः ॥ कपिले[3]सर्वभूतानांपूजनीयासिरोहिणी ॥ सर्वतीर्थमयीयस्मादतःशांतिंप्रयच्छमे ॥ यालक्ष्मीः
सर्वदेवानांयाचदेवेष्ववस्थिता ॥ धेनुरूपेणसादेवीममशांतिंप्रयच्छतु ॥ देहस्थायाचरुद्राणांशंकरस्यचयाप्रिया ॥ धेनुरूपेणसादेवीममपापं
व्यपोहतु ॥ विष्णोर्वक्षसियालक्ष्मीःस्वाहाचैवविभावसोः ॥ चंद्रार्कानलशक्तिर्याधेनुरूपास्तुमेश्रिये ॥ चतुर्मुखस्ययालक्ष्मीर्यालक्ष्मीर्ध
नदस्यच ॥ लक्ष्मीर्यालोकपालानांसाधेनुर्वरदास्तुमे ॥ स्वधात्वंपितृमुख्यानांस्वाहायज्ञभुजामपि ॥ वषड्याप्रोच्यतेलोकेसाधेनुस्तु
ष्टिदास्तुमे ॥ गावोमेअग्रतःसंतुगावोमेसंतुपृष्ठतः ॥ गावोमेहृदयेसंतुगवांमध्येवसाम्यहम् ॥ गावःस्पृष्ट्वानमस्कृत्ययोवैकुर्यात्प्रदक्षिणम् ॥
प्रदक्षिणीकृतातेनसप्तद्वीपावसुंधरा ॥ नमस्तेकपिलेदेविसर्वपापप्रणाशिनि ॥ संसारार्णवमग्नंमांगोमातस्त्रातुमर्हसि ॥ हिरण्यगर्भ
गर्भस्त्वंहेमबीजंविभावसोः ॥ अनंतपुण्यफलदमतःशांतिंप्रयच्छमे ॥ रक्तवस्त्रयुगंयस्मादादित्यस्यचवल्लभम् ॥ प्रदानात्तस्यमे

---

१ सुवर्णास्यामित्यपिपाठः ॥ २ अस्यपूजयेदितिपूर्वक्रिययान्वयः ॥ ३ कपिलेइत्यादिभिःषण्मंत्रैःक्रमेणगंधपुष्पधूपदीपनैवेद्यतांबूलानिदेयानि ॥ गावोमेइत्यनेनतुस्पर्शनमस्कार
प्रदक्षिणाआवृत्त्याकार्या ॥ ततोब्राह्मणंसंपूज्यनमस्तेकपिलेइतिमंत्रेणगांदद्यात् ॥ हिरण्यगर्भेत्यनेनहेमरूपांदक्षिणांरक्तवस्त्रयुगमित्यनेनरक्तवस्त्रयुग्मंचदद्यात् ॥ ततोभास्करःप्रतिगृह्णातीतिमंत्रेणसूर्यप्रतिमांसदक्षिणांदद्यात्॥
( कौ० ) ४ देवानामित्यपिपाठः ।

सूर्योह्यतःशांतिंप्रयच्छतु ॥ सुवर्णवस्त्रयुग्मंचपरिधानंचकारयेत् ॥ एतैःप्रकारःसंयुक्तांदद्याद्धेनुंद्विजातये ॥ भानुंसदक्षिणंदद्यान्मंत्रेणानेनयत्नतः ॥ भास्करःप्रतिगृह्णातिभास्करोवैददातिच ॥ भास्कररस्तारकोभाभ्यांतेनवैभास्करोमम ॥ ब्राह्मणान्भोजयेत्पश्चात्पायसेनगुडेनच ॥ शक्त्याचदक्षिणांदद्यात्तेभ्यश्चैवविशेषतः ॥ अल्पवित्तोपियःकश्चित्सोपिकुर्यादिमंविधिम् ॥ आत्मशक्त्यनुसारेण सोपितत्फलमाप्नुयात् ॥ आचार्यस्यततोभक्त्यासर्वंपाणौविनिक्षिपेत् ॥ गोभूहिरण्यवासांसिव्रीहयोलवणंतिलाः ॥ एतत्सर्वंप्रदत्त्वातुकपिलांप्रार्थयेत्ततः ॥ कपिलेपुण्यकर्मासिनिष्पापेपुण्यकर्माणि ॥ मांसमुद्धरदीनंचददतोह्यक्षयंकुरु ॥ दिविवादित्रशब्दैश्चसेव्यसेकपिलासदा ॥ तथाविद्याधराःसिद्धाभूतनागगणाग्रहाः ॥ कपिलारोमसंख्यातास्तत्रदेवाःप्रतिष्ठिताः ॥ पुष्पवृष्टिंप्रमुंचंतिनित्यमाकाशसंस्थितः ॥ ब्राह्मणोत्पादितेदेविअग्निकुंडात्समुत्थिते ॥ नमस्तेकपिलेपुण्येसर्वदेवनमस्कृते ॥ जयनित्यंमहासत्त्वेसर्वतीर्थादिमंगले ॥ दातारंस्वजनोपेतंब्रह्मलोकंनयाशुवै ॥ ततःप्रदक्षिणांकृत्वानत्वाब्राह्मणपुंगवान् ॥ आशीर्वादान्वदेयुस्तेपुत्रपौत्रधनागमान् ॥ आरोग्यंरूपसौभाग्यंसर्वदुःखविवर्जितः ॥ अंतेगोलोकमासाद्यचिरायुः सुखभाग्भवेत् ॥ यदास्वर्गात्प्रपतातिराजाभवतिधार्मिकः ॥ सप्तद्वीपवतींभुंक्तेसदाराज्यमकंटकम् ॥ अहोव्रतमिदंपुण्यंसर्वदुःखविनाशनम् ॥ अतःपरंप्रवक्ष्यामिदानस्यफलमुत्तमम् ॥ महावेदमयेपात्रेसद्वृत्तेचाक्षयंभवेत् ॥ कपिलाख्यायदाषष्ठीजायतेभुविमानद ॥ व्रतंसर्वव्रतश्रेष्ठमिदमग्र्यंमहाफलम् ॥ उद्धरिष्यतिदातारंनूनमक्षय्यमव्ययम् ॥ एवंदेवगणाः

१ सुवर्णमलंकारंवस्त्रयुग्मंचपरिधानंयथास्थानधृतंकारयेत्परिग्राहकेण ( हे० )।

णांदुर्लभाषष्टिहायनैः ॥ कृतेत्रेतायांपंचाशद्धायनीद्वापरेपुनः ॥ चत्वारिंशत्कलौत्रिंशद्धायनीदुर्लभाततः ॥ आदौकृतयुगेपूर्वंयाचीर्णाविश्व
कर्मणा ॥ तत्फलंविश्वकर्तृत्वंप्राजापत्यमवाप्तवान् ॥ पृथुनाकार्तवीर्येणभुवानारायणेनच ॥ ईश्वरेणोमयासार्द्धमितरेतरलिप्सया ॥ यश्चैनांवि
धिवत्कुर्यात्सोनंतंफलमश्नुते ॥ युधिष्ठिरउवाच ॥ तद्विधिंश्रोतुमिच्छामिविस्तराद्वदतोमुने ॥ केमंत्राःकेचनियामाःसापिकिंलक्षणाभवेत् ॥
दुर्वासाउवाच ॥ द्विदैवत्यर्क्षभौमेनवैधृतेनसमन्विता ॥ भाद्रेमासिसितेषष्ठीसाचंपेतिनिगद्यते ॥ पंचम्यांनियमंकुर्यादेकभक्तंसमाचरेत् ॥ चंपा
षष्ठीव्रतंकुर्याद्यथोक्तंवचनाद्गुरोः ॥ ततःप्रभातेविमलेदंतधावनपूर्वकम् ॥ कृत्वास्नानंशुचिर्भूत्वासंकल्प्यचयथाविधि ॥संकल्पमंत्रः ॥ निराहा
रोद्यदेवेशत्वद्भक्तस्त्वत्परायणः ॥ पूजयिष्याम्यहंभक्त्याशरणंभवभास्कर ॥ ततःस्नानंप्रकुर्वीतनद्यादौविमलेजले ॥ मृदमालभ्यमंत्रैश्चति
लैःशुक्लैश्चमंत्रवित् ॥ सावित्रःपरमस्त्वंहिपरंधामजलेमम ॥ त्वत्तेजसापरिभ्रष्टंपापंयातुसहस्रधा ॥ प्रार्थना ॥ आपस्त्वमसिदेवेशज्योतिषां
पतिरेवच ॥ पापंनाशयमेदेववाङ्मनःकर्मभिःकृतम् ॥ स्नानमंत्रः ॥ ततःसंतर्पयेद्देवानृषीन्पितृगणानपि ॥ ततश्चैत्यगृहंमौनीपाखंडालाप
वर्जितः ॥ स्थंडिलंकारयेच्छुद्धंचतुरस्रंसुशोभनम् ॥ स्थापयेदव्रणंकुंभंपंचरत्नसमन्वितम् ॥ रक्तवस्त्रयुगच्छन्नंरक्तचंदनचर्चितम् ॥ तस्यो
परिन्यसेत्सूर्यंसौवर्णंसरथारुणम् ॥ शक्त्यावावित्तसारेणवित्तशाठ्यविवर्जितः ॥तमर्चयेद्गंधपुष्पैर्विधिमंत्रपुरःसरम् ॥ पंचामृतेनस्नपनंकुर्यादर्क
स्यसंयतः ॥ ततस्तुगंधतोयेनपरांपूजांसमारभेत् ॥ गंधैर्नानाविधैर्दिव्यैःकर्पूरागुरुकुंकुमैः ॥ फलैर्नानाविधैर्दिव्यैःकुंकुमैश्चसुगंधिभिः ॥ मंडपं

१ फलैस्तदनुसंभूतैरनेकैश्चसुगंधिरित्यपिपाटः ।

कारयेत्तत्रपुष्पमालाविभूषितम् ॥ यथाशोभंप्रकुर्वीतअधश्चोपरिसर्वतः ॥ ततःसंपूजयेद्देवंभास्करंकमलोपरि ॥ मध्येदलेषुपूर्वादिष्वादित्या
दीन्सुपूजयेत् ॥ ओंआदित्यायनमः तपनाय० पूष्णेन० भानुमतेन० भानवेन० अर्यम्णेन० विश्वचक्राय० अंशुमतेन० सहस्रांशवेन० खना
यकाय० सुराय० सूर्यायन० खगायन० ॥ १३ ॥ जन्मांतरसहस्रेषुदुष्कृतंयन्मयाकृतम् ॥ तत्सर्वंनाशमायातुत्वत्प्रसादाद्दिवाकर ॥
विनतातनयोदेवःकर्मसाक्षीतमोनुदः ॥ सप्ताश्वःसप्तरज्जुश्चअरुणोमेप्रसीदतु ॥ रथपूजामंत्रः ॥ ततःसंपूजयेद्देवमच्युतंतद्रथास्थितम् ॥
अष्टाक्षरेणमंत्रेणगंधपुष्पादिभिःक्रमात् ॥ ओंघृणिःसूर्यआदित्यइतिमंत्रःसंप्रदायादवगंतव्यः ॥ कालात्मासर्वभूतात्मावेदात्माविश्वतोमुखः ॥
जन्ममृत्युजरारोगसंसारभयनाशनः ॥ उदयेर्घ्यमंत्रः ॥ ततःसंपूजयेच्छुक्लांसवत्सांगांपयस्विनीम् ॥ सवस्त्रघंटाभरणांकांस्यपात्रेचदोहि
नीम् ॥ ब्रह्मणोत्पादितेदेविसर्वपापविनाशिनि ॥ संसारार्णवमग्नंमांगोमातस्त्रातुमर्हसि ॥ सुरूपाबहुरूपाश्चमातरोलोकमातरः ॥ गावोमामु
पसर्पंतुसरितःसागरंयथा ॥ यालक्ष्मीःसर्वदेवानांयाचदेवेषुसंस्थिता ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥ यालक्ष्मीर्लोकपालानां
यालक्ष्मीर्धनदस्यच ॥ चंद्रार्कशक्रशक्तिर्यासाधेनुर्वरदास्तुमे ॥ धेनुपूजामंत्रः ॥ तिलहोमंततःकुर्यात्सावित्र्याष्टोत्तरंशतम् ॥
ततस्तांकल्पयेद्धेनुमर्कोमेप्रीयतामिति ॥ आचार्यायततोदद्यादादित्यंसरथारुणम् ॥ सकुंभरत्नवस्त्रैश्चसर्वोपस्करसंयुतम् ॥ ददा
मिभानुंभवतेसर्वोपस्करसंयुतम् ॥ मनोभिलषितावाप्तिंकरोतुममभास्करः ॥ दानमंत्रः गृह्णामिभास्कररवेभवंतंविश्वतोमुखम् ॥

१ एषुप्रथमेनमंत्रेणमध्येपूजनमितरैर्द्वादशभिःपूर्वादिदलक्रमेणपूजनमितिहेमाद्रौ । २ विश्वचक्रायेतिपाठांतरम् । ३ दिवाकरतवार्चनादितिपाठः ।

मनोभिलषितावाप्तिमुभयोःकर्तुमर्हसि ॥ प्रतिग्रहणमंत्रः ॥ सर्वतीर्थमयींधेनुंसर्वयज्ञमयींशुभाम् ॥ सर्वदानमयींदेवींब्राह्मणायददाम्य
हम् ॥ गोदानमंत्रः ॥ गृह्णामिसुरभिंदेवींसर्वयज्ञमयींशुभाम् ॥ उभौपुनीहिवरदेउभयोस्तारिकाभव ॥ प्रतिग्रहमंत्रः ॥ तत
स्तुभोजयेद्विप्रान्द्वादशैवस्वशक्तितः ॥ दद्याच्चदक्षिणांतेभ्यःप्रणिपत्यविसर्जयेत् ॥ ततस्तुस्वयमश्नीयाद्विजानामवशिष्टकम् ॥ सहपुत्रैः
कलत्रैश्चअन्यैर्बहुजनैर्वृतः ॥ एवंयःकुरुतेचंपांसोऽत्यंतंपुण्यमश्नुते ॥ प्रभूणांचविधिःप्रोक्तस्ततप्रभणांचगोचरः ॥ सर्वैश्चैतद्व्रतंकार्यंस्वशक्त्या
दुःखभीरुभिः ॥ प्रभुःप्रथमकल्पस्ययोनुकल्पेनवर्तते ॥ विफलंतत्तुतस्यस्यादनीशस्त्वानुकल्पिकः ॥ अथनिर्धनस्याविधिः ॥ ॥ पंच
म्यांनियमंकुर्यादाचार्यवचनाद्व्रती ॥ षष्ठ्यांस्नानंप्रकुर्वीतसंतर्प्यपितृदेवताः ॥ अभ्येत्यस्वगृहंमौनीसूर्यमनासिचिंतयेत् ॥ स्थापयेदव्रणं
कुंभंमृत्पात्रंचतथोपरि ॥ तस्योपरिन्यसेत्सर्यंपलैकेनविनिर्मितम् ॥ सौवर्णभक्तिसंयुक्तंरथंसारथिनायुतम् ॥ तमर्चयेज्जगन्नाथंगृहीत्वाज्ञांगुरोः
स्वयम् ॥ षडक्षरेणमंत्रेणगंधपुष्पाक्षतादिभिः ॥ ॐनमःसूर्यायेतिमंत्रः ॥ संपूज्यविधिवद्देवंफलपुष्पादिकंचयत् ॥ सूर्यायावेदयेत्सर्वंसूर्यो
मेप्रीयतामिति ॥ ततःप्रभातेविमलेगत्वागुरुगृहंव्रती ॥ सर्वोपकरणैःसूर्यमाचार्यायनिवेदयेत् ॥ धान्यंपुष्पंफलंवस्त्रंरत्नधेन्वादिकंचयत् ॥
गवांकोटिसहस्रंतुकुरुक्षेत्रेर्कपर्वाणि ॥ चंपादानस्यराजेंद्रकलांनार्हतिषोडशीम् ॥ सर्वतीर्थप्रदानानितथान्यान्यपिषोडश ॥ चंपयातुलितानी
हचंपैकात्वतिरिच्यते ॥ इति श्रीस्कंदपु० चंपाषष्ठीव्रतंसंपूर्णम् ॥ अथमार्गशीर्षशुक्लषष्ठीचंपाषष्ठी ॥ [१]मार्गेमासेशुक्लपक्षेषष्ठीवैधृतिसंयुता ॥

१ मार्गेभाद्रपदेशुक्लेतिपाठः ( कौ० )

रविवारेणसंयुक्तासाचंपाइतिकीर्तिता॥इतिमल्लारिमाहात्म्ये॥मार्गशीर्षेऽमलेपक्षेषष्ठ्यांवारेंऽशुमालिनः ॥ शततारागतेचंद्रेलिंगस्याद्दृष्टिगोचर
मिति॥इयंयोगविशेषेणपूर्वायोगाभावेपराग्राह्या॥इतिचंपाषष्ठी॥ **अथ सप्तमीव्रतानि** ॥तत्रवैशाखशुक्लसप्तम्यांगंगोत्पत्तिस्तत्पूजाचोक्ताpृ
थिवीचंद्रोदयेब्राह्मे ॥ वैशाखशुक्लसप्तम्यांजह्नुनाजाह्नवीपुरा ॥ क्रोधात्पीतापुनस्त्यक्ताकर्णरंध्रात्तुदक्षिणात् ॥तांतत्रपूजयेद्देवींगंगांगगनमेखला
मिति ॥ हरिवंशेपुण्यकव्रतांतेअब्दंप्रातःस्नानमभिधाय ॥ गंगयाव्रतकंदत्तंतदेवौमं[2]यशस्करि ॥ स्नानमभ्यधिकंत्वत्रप्रत्यूषस्यात्मनो[3]जले ॥
अन्यत्रवाजलेमाघशुक्लपक्षेहरिप्रिये ॥ एतद्गंगाव्रतंनामसर्वकामप्रदंस्मृतम् ॥ सप्तसप्तचसप्ताथकुलानिहरिवल्लभे ॥ स्त्रीतारयातिधर्मज्ञागंगाव्रत
ज्ञचारिणी ॥ देयंकुंभसहस्रंतुगंगायाव्रतकेशुभे॥[4]तारणंपारणंचैवतद्व्रतंसार्वकामिकामिति॥अन्यत्रोक्तम्॥वैशाखशुक्लपक्षेतुसप्तम्यांपूजयेद्धरिम् ॥
गंगायांविधिवत्स्नात्वाभोजयेद्ब्राह्मणान्दश॥पूजयेत्सूक्ष्मवस्त्रैश्चपुष्पस्रक्चंदनैःशुभैः॥पूजकःसर्वपापेभ्योमुच्यतेनात्रसंशयः ॥ इयंचशिष्टाचा
रान्मध्याह्नव्यापिनीग्राह्या॥दिनद्वयेतद्व्याप्तावव्याप्तावेकदेशव्याप्तौवापूर्वायुग्मवाक्यात्॥इतिगंगासप्तमीव्रतम् ॥ अथशुक्लादिश्रावणकृष्णसप्त
म्यांशीतलाव्रतम्॥तच्चमध्याह्नव्यापिन्यांकार्यम्॥तथाचमाधवीयेहारीतः॥पूजाव्रतेषुसर्वेषुमध्याह्नव्यापिनीतिथिरिति॥अथव्रतविधिःस्कांदे॥
वंदेहंशीतलांदेवींरासभस्थांदिगंबराम् ॥ मार्जनीकलशोपेतांशूर्पालंकृतमस्तकाम् ॥ कुंभेसंस्थापयेद्देवींपूजयेन्नाममंत्रतः ॥ शीतलेपंचपक्वा
न्नदध्योदनयुतंशुभम् ॥ नैवेद्यंगृह्यतांदेविघृतमिश्रंचसुंदरि ॥ शीतलेदहमेपापंपुत्रपौत्रसुखप्रदे ॥ धनधान्यप्रदेदेविपूजांगृह्णनमोस्तुते ॥ शीत

१ शिवलिंगदर्शनंकार्यमित्यर्थइति ( कौ० ) २ उमासंबंधीत्यर्थः । ३ गंगायाः । ४ तारणंदुःखानांपारणंमनोरथानाम् ।

लेशीतलाकारेअवैधव्यसुतप्रदे ॥ श्रावणस्यासितेपक्षेअर्घ्यंगृह्णनमोस्तुते ॥ संपूज्यसत्तगौरीश्चभोजयेच्चप्रयत्नतः ॥ मासपक्षाद्युल्लिख्यममइह जन्मनिजन्मांतरेचअवैधव्यप्राप्तयेअखंडितभर्तृसंयोगपुत्रपौत्रादिधनधान्यप्राप्तयेचशीतलाव्रतंकरिष्ये ॥ तथायथामिलितोपचारैःशीतलांपूजयिष्येइतिसंकल्प्य ॥ अष्टदलयुतेपीठेअव्रणंकलशंसंस्थाप्यतदुपरिसौवर्णींशीतलांसंस्थाप्य ॥ वंदेहंशीतलांदेवीमितिमंत्रेणध्यात्वा ॥ ॐशीतलायैनमःइतिनाममंत्रेण आवाहनम् आसनम् पाद्यम् अर्घ्यम् आचमनम् स्नानम् वस्त्रम् उपवस्त्रम् विलेपनम् अलंकारान् पुष्पाणि धूपम् दीपम् शीतलेपंचपक्वान्नमितिमंत्रेण नैवेद्यम् करोद्वर्तनम् फलम् तांबूलम् दक्षिणाम् नीराजनम् पुष्पांजलिंचसमर्प्य प्रदक्षिणाम् नमस्करान् शीतलेदहमेपापमितिमंत्रेणप्रार्थनां चकृत्वाशीतलेशीतलाकारेइतिमंत्रेणविशेषार्घ्यंदद्यात् ॥ ततोव्रतसंपूर्णफलावाप्तयेब्राह्मणायवायनंदद्यात ॥ तत्रमंत्रः ॥ दध्यन्नंदक्षिणायुक्तंवाणकंफलसंयुतम् ॥ शीतलाप्रीतयेतुभ्यंब्राह्मणायददाम्यहम् ॥ इतिपूजनम् ॥ अथ कथाभविष्ये ॥ कृष्णउवाच ॥ प्रसिद्धंश्रूयतांरम्यंनगरंहस्तिनापुरम् ॥ इंद्रद्युम्नश्चराजाभून्नृपतिर्लोकपालकः ॥ १ ॥ धर्मशीलाभिधाचासीत्तस्यभार्यायशस्विनी ॥ क्रियाकांडरतासाध्वीदानशीलाप्रियंवदा ॥ २ ॥ बभूवप्रथमःपुत्रोमहाधर्मेतिनामतः ॥ नंदते पितृवात्सल्यात्कालेन्यस्मिस्ततोभवेत् ॥ ३ ॥ द्वितीयाचतथापुत्रीतस्यजातागुणोत्तमा[1] ॥ पुत्रीलक्षणसंपन्नाशुभकारीतिनामतः ॥ ॥ ४ ॥ ववृधेसापितुर्गेहेसर्वांगगुणसुंदरी ॥ नाम्नारूपेणसाबालासर्वासांचगुणाधिका ॥ ५ ॥ सामुद्रिकगुणोपेतापद्महस्ताप्रियं

१ तस्यपुत्रीअभवत्साचगुणोत्तमाजातेतिनामद्वयम् ।

वदा ॥ कौंडिन्यनगरेराजासुमित्रोनामनातः ॥ ६ ॥ तत्पुत्रोगुणवान्नामशुभकार्याःपतिर्बभौ ॥ वरोहिदेहमानेनलक्ष्मीवान्रूपवान्गुणैः
॥ ७ ॥ गुणवाञ्छुभकारिण्याःपाणिजग्राहधर्मवित् ॥ गृहीत्वापारिबर्हाणिगतोसौनगरंप्रति ॥ ८ ॥ पुनःसमाययौराजागुणवान्हस्तिनापुरम् ॥
वृतःपरिजनैःसर्वैस्तत्पुत्र्यानयनोत्सुकः ॥ ९ ॥ तंदृष्ट्वाशुभकारीसासहर्षाजातसंभ्रमा ॥ प्रणम्यचपितुःपादौतमूचेचारुहासिनी ॥ १० ॥
मयाताताप्तरिज्ञातंयदुक्तंपद्मयोनिना ॥ पातिव्रत्यसमोधर्मोनास्तीहभुवनत्रये ॥ ११ ॥ तस्मादाज्ञांदेहिराजन्प्रहृष्टेनांतरात्मना ॥ रथमारुह्य
यास्यामिस्वामिनास्वपुरंप्रति ॥१२॥ तस्यास्तद्वचनंश्रुत्वापितोवाचसुतांप्रति ॥ स्थित्वैकंवासरंपुत्रिशीतलाव्रतमुत्तमम् ॥१३॥ सौभाग्यारो
ग्यजनकमवैधव्यकरंपरम् ॥ कृत्वायाहिमतंह्येतत्त्वन्मातुर्ममचैवहि ॥ १४ ॥ इत्युक्त्वाव्रतसामग्रींपूजोपकरणंतथा ॥ संपाद्यराजातां
सद्यःशीतलामर्चितुंनृपः ॥ १५ ॥ प्रेषयामाससरसिब्राह्मणंवेदपारगम् ॥ सपत्नीकंतयासार्धंगतासातद्वनांतरे ॥ १६ ॥ भ्रमंतीतत्सरस्त
त्रनापश्यद्विधिसाधनम् ॥ श्रांताभ्रमंतीविजनेस्मरंतीशीतलांमुहुः ॥ १७ ॥ ददर्शसाततोनारींवृद्धांरूपगुणान्विताम् ॥ विप्रस्तुसभ्रमञ्छ्रांतः
सुप्तोनिद्रावशंगतः ॥ १८ ॥ दष्टोहिनामृतस्तस्यभार्यातन्निकटेस्थिता ॥ शुभकारींततोवृद्धासोवाचकरुणार्द्रधीः ॥ १९ ॥ भवि
ष्यतिचिरंजीवीभर्तातेराजकन्यके ॥ आगच्छपूजनार्थायदर्शयामिसरोवरम् ॥ २० ॥ तयासहगतासाध्वीतडागंविधिपूर्वकम् ॥ पूज
यामासहर्षेणतोषयामासशीतलाम् ॥ २१ ॥ तस्यावरंप्राप्यमुदास्वमार्गंगंतुमुद्यता ॥ ततःसाददृशेरण्येब्राह्मणंदष्टसर्पकम् ॥ २२ ॥
भार्यांतुतस्यनिकटेरुदतींब्राह्मणींमुहुः ॥ राजपुत्रीलब्धवराशीतलायाःपतिव्रता ॥ २३ ॥ तयोस्तरुणदंपत्योर्योग्यसौभाग्यदर्श

नात् ॥ रुदतीकरुणंसापिशुशोचचमुहुर्मुहुः ॥ २४ ॥ आश्वास्यब्राह्मणीसातुराजपुत्रीमुवाचह ॥ तिष्ठतिष्ठक्षणंसुभ्रुप्रविशामिहुताश
नम् ॥ २५ ॥ अनेनसहगच्छामिस्वर्गलोकंसुखावहम् ॥ तस्यास्तद्वचआकर्ण्यराजपुत्रीदयान्विता ॥ २६ ॥ सस्मारशीतलांदेवीं
महावैधव्यभंजनीम् ॥ आगच्छच्छीतलातत्रवरंदातुंशुचिस्मिता ॥ २७ ॥ शीतलोवाच ॥ वरंवरयवत्सेत्वंकिंदुःखंचारुहासिनि ॥ शीत
लाव्रतजंपुण्यंदेहित्वंब्राह्मणींशुभाम् ॥ २८ ॥ तेनपुण्यप्रभावेणभर्तास्यानिर्विषोभवेत् ॥ इतिदेव्यावचःश्रुत्वाअददद्ब्राह्मणींततः ॥ २९ ॥
बुबोधाशुततोविप्रश्चिरंसुप्तोयथापुनः ॥ शीतलायाव्रतेबुद्धिर्ब्राह्मण्याश्चाभवत्तदा ॥ ३० ॥ अकरोत्सापितत्पूजांभक्तिभावपुरःसरा ॥
तत्रांतरेराजपुत्र्याःपतिरागाद्वनांतिकम् ॥ ३१ ॥ सोपिदष्टोथसर्पेणगच्छंत्यग्रेददर्शतम् ॥ विललापततःसाध्वीसख्यासहवनांतरे ॥ ३२ ॥
॥ शीतलोवाच ॥ वत्सेमयापूर्वमुक्तंस्मरतद्वरवर्णिनि ॥ शीतलाव्रतचारिण्यावैधव्यंनैवजायते ॥ ३३ ॥ स्वयमुत्थायकल्याणिपतिं
सुतंगृहेयथा ॥ बोधयाशुतथाभीरुव्रतंवैधव्यनाशनम् ॥ ३४ ॥ इत्युक्ताबोधयामासभर्तारंसापतिव्रता ॥ भर्तापिमुदितोदृष्ट्वास्त्रांप्रियांप्रीतिमान
भूत् ॥ ३५ ॥ दृष्ट्वातुमहदाश्चर्यंतद्ग्रामस्थायिनोजनाः ॥ सर्वेतेविस्मयंजग्मुर्ब्राह्मणीपतिरक्षणात् ॥ ३६ ॥ ब्राह्मणीहर्षितावृद्धांप्रणि
पत्यपतिव्रता ॥ देहिमातर्नमस्तेस्तुअवैधव्याविवियोगते ॥ ३७ ॥ अन्यापिशीतलायास्तुव्रतंनारीकरिष्यति ॥ अवैधव्यमदारिद्र्यम
वियोगंस्वभर्तृतः ॥ ३८ ॥ तथेत्यंतर्दधेदेवीशीतलाकामरूपिणी॥शीतलायावरंलब्ध्वाजगामात्मीयवेश्मनि ॥ ३९ ॥ पद्माकरावासिसुविश्ववं
द्यासमर्हणासादितविश्वमंगला॥प्रसादमासाद्यचशीतलायाराज्ञःसुतापार्वतिवद्बभूव ॥४० ॥ इतिभविष्येशीतलाव्रतंसंपूर्णम् ॥ अथभाद्रशुक्ल

सतम्यांमुक्ताभरणव्रतंहेमाद्रौभविष्ये ॥ सा[1]मध्याह्नव्यापिनीग्राह्या ॥ तद्व्याप्तावप्याप्तौवापरा॥ममइहजन्मनिजन्मांतरेवाअखंडितसंततिपुत्रपौत्रवृद्ध्येमुक्ताभरणव्रतउमामहेश्वरपूजनंकरिष्येइतिसंकल्प्याशिवाग्रेदोरकंविन्यस्याशिवंपूजयेत् ॥ अथपूजा॥देवदेवमहेशानपरमात्मञ्जगद्गुरो ॥ प्रतिपादितयासोमपूजयापूजयाम्यहम् ॥ आवाहनम् ॥ अनेकरत्नखचितंसौवर्णंमणिसंयुतम् ॥ मुक्ताचितंमहादेवगृहाणासनमुत्तमम् ॥ आसनम् ॥ पाद्यंगृहाणदेवेशसर्वविघ्नापरायण ॥ ध्यानगम्यसतांशंभोसर्वेश्वरनमोस्तुते ॥ पाद्यम् ॥ इदमर्घ्यमनर्घ्यैत्वममराधिशशंकर ॥ किंकरीभूतयासोममयादत्तंगृहाणभोः ॥ अर्घ्यम् ॥ गंगादिसर्वतीर्थेभ्यःसमानीतंसुशीतलम् ॥ जलमाचमनीयार्थंगृहाणेशोमयासह ॥ आचमनीयम् ॥ मध्वाज्यदधिसंमिश्रंमधुनापरिकल्पितम् ॥ शंकरप्रीतयेतेऽहंमधुपर्कंनिवेदये ॥ मधुपर्कम् ॥ पयोदधिघृतंचैवशर्करामधुसंयुतम् ॥ पंचामृतेनस्नपनंकरोमिपरमेश्वर ॥ पंचामृतस्नानम् ॥ गंगाचयमुनाचैवगोदावरीसरस्वती ॥ एताभ्यआहृतंतोयंस्नानार्थंप्रतिगृह्यताम् ॥ शुद्धोदकस्नानम् ॥ स्नानादूर्ध्वंमहादेवप्रीत्यापापप्रणाशन ॥ वस्त्रयुग्मंमयादत्तमहतंप्रतिगृह्यताम् ॥ वस्त्रम् ॥ उपवीतंसोत्तरीयंनानाभूषणभूषितम् ॥ गृहाणसोमविमलंमयादत्तमिदंशुभम् ॥ उपवीतम् ॥ मलयाचलसंभूतंसुगंधिघनसारयुक् ॥ चंदनंपंचवदनगृहाणवनितायुत ॥ चंदनम् ॥ जातीचंपकपुन्नागबकुलैःपारिजातकैः ॥ शतपत्रैश्चकह्लारैरर्चयेहमुमापतिम् ॥ पुष्पाणि ॥ त्रैलोक्यपावनानंतपरमात्मञ्जगद्गुरो ॥ चंदनागुरुकर्पूरधूपंदास्यामिशंकरम् ॥ धूपम् ॥ शुभवर्तियुतंसर्पिःसहितंवह्निनायुतम् ॥ दीपमेकमनेकार्कप्रतिमाकलयात्विमम् ॥ दीपम् ॥

[1] सापूर्वयुताग्राह्या षण्मुन्योरितियुग्मवाक्यादितिनिर्णयसिंधौ ।

पायसापूपक्कसरंदुग्धान्नंसगुडौदनम् ॥ दिव्यान्नंषड्रसोपेतंसुधारससमन्वितम् ॥ दधिक्षीराज्यसंयुक्तंनैवेद्यार्थंप्रकल्पितम् ॥ समर्पयामिदे
वाहंकिंकरीशंकरायते ॥ नैवेद्यम् ॥ पुनराचमनंशुद्धंकुरुसोमांबुनामुना ॥ मुखशुद्धिकरंतोयंकृपयात्वंगृहाणभोः ॥ आचमनीयम् ॥ कस्तू
रिकासमायुक्तंमलयाचलसंभवम् ॥ गृहाणचंदनंसोमकरोद्वर्तनहेतवे ॥ करोद्वर्तनम् ॥ नालिकेरफलंजंबूफलंनारिंगमुत्तमम् ॥ कूष्मांडपुरतो
भक्त्याकल्पितंप्रतिगृह्यताम् ॥ फलम् ॥ पूगीफलमितितांबूलम् ॥ हिरण्यगर्भेतिदक्षिणाम् ॥ नीराजनम् ॥ पुष्पांजलिम् ॥ प्रदक्षिणाम् ॥
नमस्कारान् ॥ महादेवमहाराजप्रीत्यापापंप्रणाशय ॥ अस्माकंकुर्वतांपूजांसाधुवासाधुयोजिताम् ॥ ज्ञानतोज्ञानतोवापिभवतोवि
हिताचया ॥ संपूर्णयतुतांपूजांविश्वेशोविमलोभवान् ॥ इतिप्रार्थना ॥ देवदेवजगन्नाथसर्वसौभाग्यदायक ॥ गृह्णीयांदोररूपंत्वांपुत्रपौत्रप्रवर्द्ध
नम् ॥ दोरकग्रहणम् ॥ सप्तसामोपगीतंत्वांधारयामिजगद्गुरो ॥ सूत्रग्रंथिस्थितंनित्यंधारयामिस्थिरोभव ॥ इतिदोरकबंधनम् ॥ हर
पापानिसर्वाणितुष्टिंकुरुदयानिधे ॥ प्रसन्नःसन्नुमाकांतदीर्घायुःपुत्रदोभव ॥ इतिजीर्णदोरकोत्तारणम् ॥ अथवायनम् ॥ मंडकान्वेष्टकान्वाथस
घृतान्दक्षिणायुतान् ॥ एकादशशतंकृत्वाब्राह्मणायकुटुंबिने ॥ वेदशास्त्रप्रवीणायदद्यात्सोमस्यतुष्टये ॥ शंकरःप्रतिगृह्णातिशंकरोवैददाति
च ॥ शंकरस्तारकोभाभ्यांशंकरायनमोनमः ॥ इतिवायनम् ॥ एवंयापूजनंकुर्यात्सोमस्यसुखदस्यच ॥ सर्वान्कामानवाप्नोतिपुत्रपौत्रैश्चमो
दते ॥ इतिपूजा ॥ अथकथा ॥ ॥ श्रीकृष्णउवाच ॥ मुनींद्रोलोमशोनाममथुरायांगतःपुरा ॥ सोर्चितोवसुदेवेनदेवक्याचयुधिष्ठिर ॥ १ ॥

उपविष्टःकथाःपुण्याःकथयित्वामनोरमाः ॥ ततःकथयितुंभूयःकथामेतांप्रचक्रमे ॥ २ ॥ कंसेनतेहताःपुत्रांजाताजाताःपुनःपुनः ॥ मृतव
त्सादेवकित्वंपुत्रदुःखेनदुःखिता ॥ ३ ॥ यथाचंद्रमुखीदीनाबभूवनहुषप्रिया ॥ पश्चाच्चीर्णव्रताचैवबभूवामृतवत्सका ॥ ४ ॥ त्वमपिदेवकि
तथाभाविष्यसिनसंशयः ॥ देवक्युवाच ॥ कासाचंद्रमुखीब्रह्मन्बभूवनहुषप्रिया ॥ ५ ॥ किंचचीर्णव्रतंपुण्यंतथासंततिवर्धनम् ॥ सपत्नीदर्प
दलनंसौभाग्यारोग्यदंविभो ॥ ६ ॥ लोमशउवाच ॥ अयोध्यायांपुराराजानहुषोनामविश्रुतः ॥ तस्यासीद्रूपसंपन्नादेवीचंद्रमुखीप्रिया ॥ ७ ॥
तथातस्यैवनगरेविष्णुगुप्तोभवाद्द्विजः ॥ आसीद्गुणवतीतस्यपत्नीभद्रमुखीतथा ॥ ८ ॥ तयोरासीदतिप्रीतिःस्पृहणीयापरस्परम् ॥ अथतेद्वे
अपिसख्यौस्नानार्थंशरयूजले ॥ ९ ॥ प्रातेप्राताश्चतत्रैवबह्व्योवैनगरांगनाः ॥ ताःस्नात्वामंडलंचक्रुस्तन्मध्येव्यक्तरूपिणम् ॥ १० ॥ लेख
यित्वाशिवंशांतमुमयासहशंकरम् ॥ गंधपुष्पाक्षतैर्भक्त्यापूजयित्वायथाविधि ॥ ११ ॥ प्रणम्यगंतुकामास्ताःपप्रच्छतुरुभेस्त्रियौ[3] ॥ आर्याः
किमेतत्क्रियतेकिंनामव्रतमीदृशम् ॥ १२ ॥ ताऊचुःशंकरोस्माभिःपार्वत्यासहपूजितः ॥ बद्धासूत्रमयंतंतुंशिवस्यात्मानिवेदितः ॥ १३ ॥
धारणीयमिदंतावद्यावत्प्राणविधारणम् ॥ मुक्ताभरणकंनामव्रतंसंतानवर्धनम् ॥ १४ ॥ अस्माभिःक्रियतेसख्यौसुखसौभाग्यदायकम् ॥
तासांतद्वचनंश्रुत्वासख्यौतेचापिदेवकि ॥ १५ ॥ कृत्वाचसमयंतत्रबद्धादोर्भ्यांसुदोरकम् ॥ ततस्ताश्चगृहंजग्मुःस्वसखीभिःसमावृताः॥ १६॥
कालेनमहतातस्यास्तद्व्रतंविस्मृतंशुभम् ॥ चंद्रमुख्याःप्रमत्तायाविस्मृतःसतुदोरकः ॥ १७ ॥ भद्रमुख्यास्तथाभद्रेविस्मृतंसर्वमेवतत् ॥

१ पुत्रिइत्यपिपाठः । २ पिसख्यौवैइतिप्रचुरःपाठःतत्रसंधिरार्षः । ३ वरस्त्रियइविबहुषुपुस्तकेषुपाठः तत्रवरस्त्रीःप्रतीत्यर्थः ।

मृतेकैश्चिदहोरात्रैःसाबभूवप्लवंगमी ॥ १८ ॥ भद्राख्याकुक्कुटीजाताव्रतभंगाच्छुभानने ॥ संभूयभूयःसमयंप्राक्कृतंचक्रतुःसदा ॥ १९ ॥
कालेनपंचतांप्राप्तेसखीभावात्सहैवते ॥ अदेवमातृकेदेशेजातेगोकुलसंज्ञके ॥ २० ॥ ब्राह्मणीब्राह्मणीजाताक्षत्रियाक्षत्रियातथा ॥ राज्ञी
जायाबभूवाथपृथ्वीनाथस्यवल्लभा ॥ २१ ॥ ईश्वरीनामविख्यातायासीच्चंद्रमुखीपुरा ॥ नाम्नाभद्रमुखीयासीद्भूषणानामसाभवत् ॥२२॥ अग्नि
मीढस्यसादत्तापित्रातस्यपुरोधसः ॥ अतीववल्लभाचासीद्भूषणाभूषणप्रिया ॥ २३ ॥ भूषिताभूषणवैरैरूपेणालंकृतास्वयम् ॥ तस्यांबभूवुरष्टौ
चपुत्राःसर्वगुणान्विताः ॥ २४ ॥ मातृवद्रूपसंपन्नाःपितृवद्धर्मशीलिनः ॥ सख्यौतेचैवतद्वच्चजातेजातिस्मरेकिल ॥ २५ ॥ पुनर्निरंतराप्रीति
स्तयोरासीद्यथापुरा ॥ कालेबहुतिथेयातेत्यक्ताशात्यक्तयौवना ॥ २६ ॥ मध्येवयसिराज्ञीसापुत्रमेकमजीजनत् ॥ ईश्वरीरोगिणंमूकंप्रज्ञाही
नंचविस्वरम् ॥ २७ ॥ तादृशोपिमहाभागेमृतोसौनववार्षिकः ॥ ततस्तांभूषणाद्रष्टुमीश्वरीपुत्रदुःखिताम् ॥ २८ ॥ सखिभावादतिस्नेहा
त्पुत्रैःस्वैःपरिवारिता ॥ असुक्ताभरणाभद्रास्वरूपेणैवभूषिता ॥ २९ ॥ ( सांहिभद्राद्विजस्याभूद्भार्याभूषणनामिका ॥ पुरोहितस्यकालेनकुक्कु
टीबहुपुत्रिणी ) तांदृष्ट्वातादृशींभव्यांप्रजज्वालेश्वरीरुषा ॥ ३० ॥ ततोगृहंप्रेषयित्वाब्राह्मणींतीव्रमत्सरा ॥ चिंतयामाससाराज्ञीतस्याः
पुत्रवधंप्रति ॥ ३१ ॥ निश्चित्यचेतसाक्रूराघातयामासतत्सुतान् ॥ कस्मिंश्चिद्दिवसेसाचतानाहूयगृहंप्रति ॥ ३२ ॥ भोजनस्यामिषात्तेषामन्नम
ध्येविषंददौ ॥ तत्पुत्राहृष्टवदनाभुक्त्वान्नंगृहमागताः ॥ ३३ ॥ सामर्थ्याद्व्रतराजस्यमातुर्नेनिधनंगताः ॥ पुनस्तान्प्रेषयामासयमुनायाह्रदंप्र

१ आयातेतिशेषः । २ अयमाधिकःश्लो० ।

ति ॥ ३४ ॥ तच्छिक्षिताह्रदे भृत्याः पातयंतिस्मपुत्रकान् ॥ जानुदघ्नाऽभवत्सातुयमुनातत्प्रभावतः ॥ ३५ ॥ पुनःसापापचित्तास्वान्भृ
त्यानाहूययत्नतः ॥ शस्त्रैःकृत्वाथतानूचेवधस्तेषांविधीयताम् ॥ ३६ ॥ तथेत्युक्त्वावनंगत्वातैःसाकंदुष्टबुद्धयः ॥ खड्गैस्तीक्ष्णैर्वधंतेषांकर्तुं
तेपापवृत्तयः ॥ ३७ ॥ प्रहारान्निष्ठुरंचक्रुस्तत्पुत्राहृष्टमानसाः ॥ तेषांप्रहारास्तृणवज्जातामातुःप्रभावतः ॥ ३८ ॥ एवंराज्ञीबहुतरानुपायान्
कृतवत्यथ ॥ हताहताश्चतेपुत्राःपुनर्जीवंत्यनामयाः ॥ ३९ ॥ तदद्भुततरंदृष्ट्वासखीमाहूयभूषणाम् ॥ उपवेश्यासनेश्रेष्ठेबहुमानपुरःसरम् ॥
॥ ४० ॥ अपृच्छद्विस्मयाविष्टाराज्ञीसामृतवत्सका ॥ ब्रूहितथ्यंमहाभागेकिंत्वयासुकृतंकृतम् ॥ ४१ ॥ दानंव्रतंतपोवापिशुश्रूषणमुपोषण
म् ॥ येनतेनिहताःपुत्राःपुनर्जीवंत्यनामयाः ॥ ४२ ॥ तथाहिबहुपुत्राचजीवद्वत्साशुभानने ॥ अमुक्ताभरणानित्यंभर्तुश्चेतस्यवस्थिता॥४३॥
अतीवशोभसेभद्रेविद्युद्घर्मात्ययेयथा ॥ भूषणोवाच ॥ शृणुदेविप्रवक्ष्यामिजन्मांतरविचेष्टितम् ॥ ४४ ॥ किंतद्धिविस्मृतंसर्वमयो
ध्यायांकृतंहियत् ॥ आवाभ्यांव्रतवैकल्यंप्रमत्ताभ्यांवरानने ॥ ४५ ॥ येनत्वंप्लवगीजाताजाताहंकुक्कुटीतथा ॥ तथापिव्रतवैकल्यं
त्वयाचापल्यतःकृतम् ॥ ४६ ॥ मयातुसर्वभावेनचेतसाध्यायशंकरम् ॥ तिर्यग्योन्यनुतापेनमनोवृत्त्याह्यनुष्ठितम् ॥ ४७ ॥ एत
द्धिकारणंभद्रेनान्यत्किंचित्करोम्यहम् ॥ लोमशउवाच ॥ इत्याकर्ण्यवचःस्मृत्वापूर्वजन्मविचेष्टितम् ॥ ४८ ॥ ईश्वरीचतयासार्द्धंपुनःस
म्यक्चकारह ॥ व्रतस्यास्यप्रभावेणपुत्रपौत्रादिसंभवम् ॥ ४९ ॥ भुक्त्वातुसौख्यमतुलंमृताशिवपुरंगता ॥ तस्मात्त्वमपिकल्याणिव्रतमेतत्स
माचर ॥ ५० ॥ आरब्धेऽस्मिन्व्रतेदिव्येजीवत्पुत्राभविष्यसि ॥ देवक्युवाच ॥ ब्रह्मन्नाख्याहिमेसम्यग्व्रतमेतत्सुखप्रदम् ॥ ५१ ॥ संतानवृ

द्धिकरणंशिवलोकास्थितिप्रदम् ॥ लोमशउवाच ॥ भद्रेभाद्रपदेमासिसप्तम्यांसलिलाशये ॥ ९२ ॥ स्नात्वाशिवंमंडलकेलेखयित्वातथां
बिकाम् ॥ भक्त्यासंपूज्यसमयंकुर्याद्धंद्धांकरेगुणम् ॥ ९३ ॥ यावज्जीवंमयात्मातुशिवस्यविनिवेदितः ॥ इत्येवंसमयंकृत्वाततःप्रभृतिदोर
कम् ॥ ९४ ॥ सौवर्णंराजतंवापिसौत्रंवाधारयेत्करे ॥ मंडकान्वेष्टकान्दद्यान्मासेपक्षेथवाब्दके ॥ ९५ ॥ स्वयंतांश्चैवभुंजीतव्रतभंगभया
च्छुभे ॥ प्रतिमासंतुसप्तम्यांशुक्लपक्षेविशेषतः ॥ ९६ ॥ कुर्यादेवंव्रतंभद्रेवर्षांतेऽपितुदेवकि ॥ पारितेमुद्रिकांचैवहैमींरूप्यांस्वशक्तितः ॥९७॥
ताम्रपात्रोपरिस्थाप्यब्राह्मणायनिवेदयेत् ॥ आचार्यायविशेषेणसुवर्णस्यांगुलीयकम् ॥ ९८ ॥ पुष्पकुंकुमसिंदूरतांबूलांजनसूत्रकैः ॥
सुवासिनींपूजयेच्चव्रतसंपूर्तिहेतवे ॥ ९९ ॥ सहार्थेतृतीया ॥ एवंतत्पारयित्वातुव्रतंसंततिवर्द्धनम् ॥ सर्वपापविनिर्मुक्ताभुक्तासौख्यमनाम
यम् ॥ ६० ॥ संतानंवर्द्धयित्वाचशिवलोकेमहीयते ॥ एतत्तेसर्वमाख्यातमाख्यानसहितंव्रतम् ॥ ६१ ॥ कुरुदेवकियत्नेनजीवत्पुत्राभवि
ष्यसि ॥ कृष्णउवाच ॥ इत्युक्तातुमुनिश्रेष्ठस्तत्रैवांतरधीयत ॥ ६२ ॥ चकारसर्वंयत्नेनयदुक्तंतेनधीमता ॥ व्रतस्यास्यप्रभावेणदेवकीमाम
जीजनत् ॥ ६३ ॥ तस्मात्पार्थनरैःकार्यंस्त्रीभिःकार्यंविशेषतः ॥ व्रतंपापप्रशमनंसुखसंततिवर्द्धनम् ॥ ६४ ॥ इदंयःशृणुयाद्भक्त्यायश्चैतत्प्र
तिपादयेत् ॥ व्रतमाख्यानसहितंसोपिपापैःप्रमुच्यते ॥ ६५ ॥ आख्यानकंव्रतमिदंसुखमोक्षकामायास्त्रीचरिष्यतिशिवंहृदयेनिधाय ॥ दुःखं
विहायबहुशोगतकल्मषौघासास्त्रीव्रताद्भवतिशोभनजीववत्सा ॥ ६६ ॥ इतिहेमाद्रौभविष्येमुक्ताभरणसप्तमीव्रतंसंपूर्णम् ॥ अथआश्विन
शुक्लसप्तम्यांबिल्वशाखाप्रवेशपूजनादि ॥ अत्रचसप्तमीउदयव्यापिनीग्राह्या ॥ युगाद्यावर्षवृद्धिश्चसप्तमीपार्वतीप्रिया ॥ रवेरुदयमीक्षंतेनतत्र

तिथियुग्मतेतिप्रतापमार्तंडेभविष्योक्तेः ॥ वर्षवृद्धिर्जन्मतिथिः ॥ तत्रैवमूलनक्षत्रेपुस्तकस्थापनमुक्तंरुद्रयामले ॥ मूलऋक्षेसुराधीशपूजनीया सरस्वती ॥ पूजयेत्प्रत्यहंदेवयावद्वैष्णवमृक्षकम् ॥ नाध्यापयेन्नचलिखेन्नाधीयीतकदाचन ॥ पुस्तकेस्थापितेदेवविद्याकामोद्विजोत्तमः ॥ ( अहंभद्राचभद्राहंनावयोरंतरंक्वचित् ॥ सर्वसिद्धिप्रदास्यामिभद्रायांह्यर्चितास्म्यहम् ) ॥संग्रहे॥आश्विनस्यसितेपक्षेमेधानामसरस्वती ॥मूले नावाहयेद्देवींश्रवणेनविसर्जयेत्॥इतिसरस्वतीपूजनम्॥अथरथसप्तमीव्रतम्॥अस्यांस्नानविधिः॥तच्चअरुणोदयव्यापिन्यांकार्यम् ॥तदुक्तंमदन रत्नेस्मृतिसंग्रहे ॥ सूर्यग्रहणतुल्यासाशुक्लामाघस्यसप्तमी ॥ अरुणोदयवेलायांस्नानंतत्रमहाफलम् ॥ माघेमासिसितेपक्षेसप्तमीकोटिपुण्य दा ॥ कुर्यात्स्नानार्घ्यदानाभ्यामायुरारोग्यसंपदः ॥ दिनद्वयेअरुणोदयव्याप्तिवेपूर्वैव ॥ एतद्विधिस्तुभविष्ये ॥ कृत्वाषष्ठ्यामेकभक्तंसप्त म्यांनिश्चलंजलम् ॥ रात्र्यंतेचालयेथास्त्वंदत्वाशिरसिदीपकम् ॥ तथाजलंप्रक्रम्य ॥ नकेनचाल्यतेयावत्तावत्स्नानंसमाचरेत् ॥ सौवर्णेराज तेताम्रेभक्त्यालाबुमयेथवा ॥ तैलेनवर्तिर्दातव्यामहारजनरंजिता ॥ समाहितमनाभूत्वादत्त्वाशिरसिदीपकम् ॥ भास्करंहृदयेध्यात्वाइमं मंत्रमुदीरयेत् ॥ नमस्तेरुद्ररूपायरसानांपतयेनमः ॥ वरुणायनमस्तेस्तुहरिदश्वनमोस्तुते ॥ जलेपरिहरेद्दीपंध्यात्वासंतर्प्यदेवताइति ॥ लोलार्केरथसप्तम्यांस्नात्वागंगादिसंगमे ॥ सप्तजन्मकृतैःपापैर्मुक्तोभवतितत्क्षणादितिगर्गः ॥ षष्ठिसप्तमिसंयोगेवारश्चेदंशुमालिनः ॥ योगो यंपद्मकोनामसहस्रार्कग्रहैःसमः ॥ एतच्चस्नानंतिथ्यादिस्मरणानंतरंशिष्टाचारात् ॥ इक्षुदंडेनजलंचालयित्वासप्तार्कपत्राणिसप्तबदरीपत्रा

१ एतद्विधिस्तु निर्णयसिंध्वादौसविस्तरोस्तितत्तएवावगंतव्यः । २ कुसुंभम् ।

णिचशिरसिनिधायस्नायात् ॥ तत्रमंत्रः ॥ यद्यज्जन्मकृतंपापंमयासप्तसुजन्मसु ॥ तन्मेरोगंचशोकंचमाकरीहंतुसप्तमी ॥ स्नानानंतरमर्घ्यंच दातव्यंमंत्रपूर्वकम् ॥ सप्तसप्तिवहप्रीतसप्तलोकप्रदीपन ॥ सप्तम्यासहितोदेवगृहाणार्घ्यंदिवाकर ॥ अर्घ्यम् ॥ जननीसर्वभूतानांसप्तमीसप्तस तिके ॥ सप्तव्याहृतिकेदेविनमस्तेसूर्यमंडले ॥ प्रार्थना ॥ इतिस्नानविधिः ॥ अनेनैवतुमंत्रेणपूजयेच्चदिवाकरम् ॥ कृत्वाषोडशधाराजन्सप्ता श्वरथमंडले ॥ अथकथा ॥ ॥ युधिष्ठिरउवाच ॥ कथंसाक्रियतेकृष्णमनुष्यैरथसप्तमी ॥ चक्रवर्तित्वफलदायाहिख्यातात्वयामम ॥ १ ॥ कृष्णउवाच ॥ आसीत्कांबोजविषयेयशोवर्मानराधिपः ॥ वृद्धेवयसितस्यासीत्सर्वव्याधियुतःसुतः ॥ २ ॥ तत्कर्मपाकंसोपृच्छद्विनीतोद्वि जपुंगवम् ॥ सप्राहराजन्वैश्योयंकृपणःपूर्वजन्मानि ॥ ३ ॥ ददर्शरथसप्तम्याःक्रियमाणंव्रतंनृप ॥ व्रतदर्शनमाहात्म्यादुत्पन्नोजठरेतव ॥ ४ ॥ अदाताविभवेयस्मात्तेनायंव्याधितोभवत् ॥ ततःसराजापप्रच्छकिमेतस्यविधीयताम्॥५॥ब्राह्मणउवाच॥यस्यसंदर्शनात्प्राप्तोलेभीतवनिकेत नम्॥तदेवक्रियतांराजन्रथसप्तमिसंज्ञितम्।६।व्रतंपापहरंयेनचक्रवर्तित्वमाप्यते॥राजोवाच॥ ब्रूहिविप्रव्रतंकृत्स्नंसविधानंसमंत्रकम्॥७॥[1]रोगिणां चदरिद्राणांसर्वसंपत्प्रदायकम्॥द्विजउवाच॥शुक्लपक्षेतुमाघस्यषष्ठ्यामामंत्रयेद्द्विजान्॥८॥ स्नानंशुक्लतिलैःकार्यंनद्यांदौविमलेजले॥वापीकूपतडा गेषुविधिवद्वर्णधर्मतः॥९॥देवादीन्पूजयित्वातुगत्वासूर्यालयंततः॥सूर्यंपूज्यनमस्कृत्यपुष्पधूपाक्षतैःशुभैः ॥१०॥ आगत्यभवनंपश्चात्पंचयज्ञां श्चनिर्वपेत्॥संभोज्यातिथिभृत्यांश्चबालवृद्धाश्रितान्स्वयम् ॥११॥ विद्यमानेऽदिनेऽश्नीयाद्वाग्यतस्तैलवर्जितम् ॥ रात्रौविप्रंसमाहूयसर्वज्ञंवेदपा

१ ईश्वराणामित्यपिक्वचित्पाठः । २ नद्यभावेतुकुत्रचित् ॥ विमलेसलिलेसजान्नितिहेमाद्र्यादौपाठः ।

रगम् ॥ १२ ॥ संपूज्यनियमंकुर्यात्सूर्यमाधायचेतासि ॥ सप्तम्यांतुनिराहारोभत्वाभोगाविवर्जितः ॥ १३ ॥ भोक्ष्येष्टम्यांजगन्नाथनिर्विघ्नंतत्रमेकुरु ॥
इत्युच्चार्यनृपश्रेष्ठतोयंतोयेषुनिक्षिपेत् ॥ १४ ॥ ततोविसृज्यतंविप्रंस्वपद्भूमौजितेंद्रियः ॥ ततःप्रातःसमुत्थायकृत्वावश्यंशुचिर्नरः ॥ १५ ॥ कार
यित्वारथंदिव्यंकिंकिणीजालमालिनम् ॥ सर्वोपस्करसंयुक्तंरत्नैःसर्वांगचित्रितम् ॥ १६ ॥ कांचनंराजतंवाथहयसारथिसंयुतम् ॥ ततोमध्या
ह्नसमयेकृतस्नानादिकोव्रती ॥ १७ ॥ अतिर्यग्वीक्षमाणस्तुपाषंडालापवर्जितः ॥ सौरसूक्तंजपन्प्राज्ञःसमागच्छेत्स्वमालयम् ॥ १८ ॥ निर्वृत्त
नित्यकार्यस्तुकृत्वाब्राह्मणवाचनम् ॥ वस्त्रमंडपिकामध्येस्थापयेत्तंरथोत्तमम् ॥ १९ ॥ कुंकुमेनसुगंधेनचर्चयित्वासमंततः ॥ मालाभिःपुष्प
दीपानांसमंतात्परिवेष्टयेत् ॥ २० ॥ धूपेनागुरुमिश्रेणधूपयित्वातथोपरि ॥ रथस्यस्थापयेद्भानुंसर्वसंपूर्णलक्षणम् ॥ २१ ॥ वित्तानुरूपंहैमंच
वित्तशाठ्यविवर्जितः ॥ शाठ्याद्व्रजतिवैकल्यंवैकल्याद्विकलंफलम् ॥ २२ ॥ ततोदेवंसमभ्यर्च्यसरथंसहसारथिम् ॥ पुष्पैर्धूपैस्तथागंधैर्वस्त्रा
लंकारभूषणैः ॥ २३ ॥ फलैर्नानाविधैर्भक्ष्यैर्नैवेद्यैर्घृतपाचितैः ॥ पूजयेद्भास्करंभक्त्यामंत्रैरोभिस्त्रिभिःक्रमात् ॥ २४ ॥ भानोदिवाकरादि
त्यमार्तंडजगतांपते ॥ अपांनिधेजगद्रक्षभूतभावनभास्कर ॥ २५ ॥ प्रणतार्तिहराचिंत्यविश्वचिंतामणेविभो ॥ विष्णोहंसादिभूतेशआदि
मध्यांतकारक ॥ २६ ॥ भक्तिहीनंक्रियाहीनंमंत्रहीनंजगत्पते ॥ प्रसादात्तवसंपूर्णमर्चनंयदिहास्तुमे ॥ २७ ॥ एवंसंपूज्यदेवेशंप्रार्थयेत्स्वमनो
गतम् ॥ ददातिप्रार्थितंभानुर्भक्त्यासंतोषितोनरैः ॥ २८ ॥ वित्तहीनोपिविधिनासर्वमेतत्प्रकल्पयेत् ॥ रथंससारथिंसाश्वंवर्णकैर्भित्तिलेखितम्
॥ २९ ॥ सौवर्णंचतथाभानुंयथाशक्त्याविनिर्मितम् ॥ प्रागुक्तेनविधानेनपूजयित्वासुविस्तरम् ॥ ३० ॥ जागरंकारयेद्रात्रौगीतवादित्रनिः

स्वनैः ॥ प्रेक्षणीयैर्विचित्रैश्चपुण्याख्यानकथादिभिः ॥३१ ॥ रथयात्रांप्रपश्येतभानोरायतनांश्रितः ॥ अनिमीलितनेत्रस्तुनयेत्तांरजनींबुधः॥
॥ ३२ ॥ प्रभातेविमलेस्नात्वाकृतकृत्यस्ततोद्विजान् ॥ तर्पयेद्विविधैःकामैर्दानैर्वासोविभूषणैः ॥३३॥ अश्वमेधेनतुल्यंतदिदंब्रह्मविदोविदुः ॥
अतोदेयानिदानानियथाशक्त्याविचक्षणैः ॥३४ ॥ रथस्तुगुरवेदेयोयथोपस्करसंयुतः ॥ सरक्तवस्त्रयुगलोरक्तधेनुसमान्वितः ॥३५॥ एवंचीर्णे
व्रतीराजन्किनाप्नोतिजगत्त्रये ॥ तस्मात्सर्वप्रयत्नेनकुरुत्वंरथसप्तमीम् ॥ ३६ ॥ येनारोग्योभवेत्पुत्रस्त्वदीयोनृपसत्तम ॥ व्रतस्यास्यप्रभावेण
प्रसादाद्भास्करस्यच ॥ ३७॥ भविष्यतिमहातेजामहाबलपराक्रमः ॥ भुक्त्वाभोगान्सुविपुलान्कृत्वाराज्यमकंटकम् ॥ ३८ ॥ दत्वासौरथसप्त
म्यांमृतेत्वयिमहाभुजः ॥ उत्पाद्यपुत्रान्पौत्रांश्चसूर्यलोकंसयास्यति ॥ ३९ ॥ तत्रस्थित्वाकल्पमेकंचक्रवर्तीभविष्यति ॥ कृष्णउवाच ॥
इतिसर्वंसमाख्यायतपोयुक्तोद्विजोत्तमः ॥ ४० ॥ यथागतंजगामासौनृपःसर्वंचकारह ॥ यदादिष्टंद्विजेंद्रेणतत्तत्सर्वंबभूवह ॥४१ ॥ एवंसचक्र
वर्तित्वंप्राप्तवान्नृपनंदनः ॥ श्रूयतेयस्तुमांधातापुराणेषुपरंतपः ॥ ४२ ॥ यइदंशृणुयाद्भक्त्याश्रावयेच्चयथाविधि ॥ तस्यैवतुष्यतेभानुर्यच्छ
त्येवापिसंपदः ॥ ४३ ॥ एवंविधंरथवरंवरवाजियुक्तंहैमंचहेमशतदीधितिनासमेतम् ॥ दद्याच्चमाघसितसप्तमिवासरेयःसोऽसंगचक्रगतिरेवम
हींभुनक्ति ॥ ४४ ॥ इतिभविष्योत्तरेरथसप्तमीव्रतंसंपूर्णम् ॥ अत्रैवअचलासप्तमीव्रतम् ॥ ॥ युधिष्ठिरउवाच॥कथंस्त्रियःसुरूपास्युःसुभगाःसु
प्रजास्तथा ॥ पुण्यस्यमहतश्चात्रसर्वमेतत्फलंयतः ॥ अल्पायासेनसुमहद्येनपुण्यमवाप्यते ॥ स्त्रीभिर्माघेममब्रूहिस्नानंतद्द्विजगद्गुरो ॥

१ अर्श्आद्यजंतम् ।     २ एतदुत्तरं श्लोकत्रयंविलासिनीत्येतदग्रेचसार्धश्लोकनवकंहेमाद्रावधिकंदृश्यतेतत्तुव्रतार्केऽलिखनादनेनालिखितम् ।

श्रीकृष्णउवाच॥श्रूयतांभरतश्रेष्ठरहस्यंमुनिभाषितम् ॥ यन्मयाकस्यचिन्नोक्तमचलासप्तमीव्रतम् ॥ वेश्याचेंदुमतीनामरूपौदार्यगुणान्विता ॥
आसीत्कुरुकुलश्रेष्ठसगं[1]रस्यविलासिनी ॥ सावसिष्ठाश्रमंपुण्यंजगामगजगामिनी ॥ वसिष्ठमृषिमासीनंप्रणम्यानतकंधरा ॥ कृतांजलिपुटाभू
त्वाप्राहेदंजगतोहितम् ॥ मयानदत्तंनहुतंनोपवासव्रतंकृतम् ॥ भक्त्यानपूजितःशंभुःस्वामिन्च्छाङ्गधरोनच ॥ सांप्रतंतप्यमानायाव्रतंकिंचि
द्वदस्वमे ॥ येनदुःखांबुपंकौघादुत्तरामिभवार्णवात् ॥ एतत्तस्याःसुबहुशःश्रुत्वातिकरुणंवचः ॥ कारुण्यात्कथयामासवसिष्ठोमुनिपुं
गवः ॥ माघस्यासितसप्तम्यांसर्वकामफलप्रदम् ॥ रूपसौभाग्यजननंस्नानंकुरुवरानने ॥ कृत्वाषष्ठ्यामेकभुक्तंसप्तम्यांनिश्चलंजलम् ॥
रात्र्यंतेचालयेथास्त्वंदत्वाशिरसिदीपकम् ॥ माघस्यासितसप्तम्यामचलंचालितंचयत्[2] ॥ जलंमलानांसर्वेषांस्नानंप्रक्षालनंततः ॥ वसिष्ठव
चनंश्रुत्वातस्मिन्नहनिभारत ॥ चकारेंदुमतीस्नानंदानंसम्यग्यथाविधि ॥ स्नानस्यास्यप्रभावेणभुक्त्वाभोगान्यथेप्सितान् ॥ इंद्रलोके
प्सरोमध्येनायिकात्वमवापसा ॥ अचलासप्तमीस्नानंकथितंतेविशांपते ॥ सर्वपापप्रशमनंसुखसौभाग्यवर्द्धनम् ॥ युधिष्ठिरउवाच ॥ सप्तमी
स्नानमाहात्म्यंश्रुतंनिरवशेषतः ॥ सांप्रतंश्रोतुमिच्छामिविधिंमंत्रसमन्वितम् ॥ श्रीकृष्णउवाच ॥ एकभक्तेनसंतिष्ठेत्षष्ठ्यांसंपूज्यभास्क
रम् ॥ सप्तम्यांतुव्रजेत्प्रातःसुगंभीरंजलाशयम् ॥ सरित्सरस्तडागंवादेवखातमथापिवा ॥ सुखावगाहसलिलंदुष्टसत्त्वैरदूषितम् ॥ व्यालां
बुपक्षिभिश्चैवजलगैर्मत्स्यकच्छपैः ॥ नकेनचाल्यतेयावत्तावत्स्नानंसमाचरेत् ॥ सौवर्णेराजतेपात्रेभक्त्यालाबु[3]मयेथवा ॥ तैलस्यवर्तिंदी

१ मगधस्येत्यपिपाठः । २ यद्यस्माच्चालितंजलंसर्वेषांमलानांक्षालनंततोहेतोःस्नानंकुर्यादित्यर्थः । ३ ताम्रमयेइत्यपिपाठः ।

तव्यामहारजनरंजिता ॥ महारजनंकुसुंभम् ॥ समाहितमनाभूत्वादत्वाशिरसिदीपकम् ॥ भास्करंहृदयेध्यात्वाइमंमंत्रमुदीरयेत् ॥
नमस्तेरुद्ररूपायरसानांपतयेनमः ॥ वरुणायनमस्तेस्तुहरिवासनमोस्तुते ॥ जलोपरिहरेद्दीपंस्नात्वासंतर्प्यदेवताः ॥ चंदनेन
लिखेत्पद्ममष्टपत्रंसकर्णिकम् ॥ मध्येशिवंसपत्नीकंप्रणवेनचसंयुतम् ॥ शाक्रेदलेरविःपूज्योभानुश्चैवानलेतथा ॥ याम्येविवस्वान्नै
र्ऋत्येभास्करंपूजयेत्ततः ॥ पश्चिमेसवितापूज्यःपूज्योर्कश्चानिलेदले ॥ सौम्येसहस्रकिरणःशैवेसर्वात्मकोनृप ॥ पूज्याःप्रणवपूर्वा
स्तुनमस्कारांतयोजिताः ॥ पुष्पैःसुगंधैर्धूपैश्चपृथक्त्वेनयुधिष्ठिर ॥ विसृज्यवस्त्रसंवीतंस्वस्थानंगम्यतामिति ॥ विसर्जितेसहस्रांशौसमाग
म्यस्वमालयम् ॥ ताम्रपात्रेथवाशक्त्यामृन्मयेवाथभक्तिमान् ॥ स्थापयेत्तिलपिष्टंचसघृतंसगुडंतथा ॥ कांचनंतालकंकृत्वाअशक्तस्ति
लपिष्टजम् ॥ संछाद्यरक्तवस्त्रेणपुष्पैर्धूपैरथार्चयेत् ॥ ततःसंचालयेद्विप्रैर्दद्यान्मंत्रेणतालकम् ॥ आदित्यस्यप्रसादेनप्रातःस्नानफलेनच ॥
दुष्टदौर्भाग्यदुःखघ्नंमयादत्तंतुतालकम् ॥ तालकंतालकपत्रंकर्णाभरणविशेषः ॥ पूजयित्वोपदेष्टारंविप्रानन्यांश्चपूजयेत् ॥ ततोदिनंसमग्रं
चभास्करध्यानतत्परः ॥ भास्करस्यकथाःशृण्वन्नन्यावाधर्मसंहिताः ॥ पाषंडादिभिरालापदर्शनस्पर्शनादिकम् ॥ वर्जयेत्क्षपयेत्प्राज्ञस्त
तोबंधुजनैःसह ॥ नक्तंभुंजीतचनरोदीनान्संभोज्यशक्तितः ॥ एतत्तेकथितंपार्थरूपसौभाग्यकारकम् ॥ अचलासप्तमीस्नानंसर्वकामफलप्र
दम् ॥ इतिपठतिसमग्रंयःशृणोतिप्रसंगात्कलिकलुषविनाशंसप्तमीस्नानमेतत् ॥ मतिमपिचजनानांयोददातिप्रयत्नात्सुरसदनगतोसौसेव्यते

१ ताएवचेत्यपिपाठः । २ यइत्थमितिपाठः ।

चाप्सरोभिः ॥ इतिभविष्येअचलासप्तमीव्रतकथासमाप्ता ॥ अस्यामेवपुत्रसप्तमीव्रतंमदनरत्नेआदित्यपुराणे ॥ आदित्यउवाच ॥ माघ
मासेतुशुक्लायांसप्तम्यां[1]समुपोषितः ॥ यःपूजयेतमांभक्त्यातस्याहंपुत्रतांव्रजे ॥ एवंचो[2]भयसप्तम्यांमासिमासिसुरोत्तम ॥ यस्तुमांपूजये
द्भक्त्यासमकमेकमादरात् ॥ समकःसंवत्सरः ॥ प्रयच्छामिसुतंतस्यह्यात्मनोह्यंगसंभवम् ॥ वित्तंयशस्तथापुत्रमारोग्यंपरमंसदा ॥
माघमासेतुयोब्रह्मञ्छुक्लपक्षेजितेंद्रियः ॥ पाखंडान्पतितानंत्यान्नजल्पेद्द्विजितेंद्रियः ॥ उपोष्यविधिवत्षष्ठ्यांश्वेतमाल्यविलेपनैः ॥
पूजयित्वातुमांभक्त्यानिशिभूमौस्वपेद्बुधः ॥ प्रातरुत्थायसप्तम्यांकृत्वास्नानादिकाःक्रियाः ॥ पूजयित्वातुमांब्रह्मन्वीरहोमंसमाच
रेत् ॥ वीरहोमोनामअग्निहोत्रहोमः ॥ प्रीणयित्वाहरिंभक्त्याहविषापद्मलोचनम् ॥ हरिरादित्यः ॥ दध्योदनेनपयसापायसेन
द्विजांस्[3]तथा ॥ तस्यैवकृष्णपक्षस्यषष्ठ्यांसम्यगुपोषितः ॥ तस्यैवेतिमाघमासस्य ॥ रक्तोत्पलैःसुगंधाढ्यैरक्तपुष्पैश्चपूजयेत् ॥ एवंयः
पूजयेद्भक्त्यानरोमांविधिवत्सदा ॥ [4]उभयोरपिदेवेंद्रसपुत्रंलभतेवरम् ॥ इतिपुत्रसप्तमीव्रतंसंपूर्णम् ॥**अथअष्टमीव्रतानिलिख्यंते** ॥
चैत्रशुक्लाष्टम्यांभवान्युत्पत्तिः ॥ तत्रयुग्मवाक्यात्पराग्राह्या ॥ अत्रभवानीयात्रोक्ताकाशीखंडे ॥ भवानींयस्तुपश्येतशुक्लाष्टम्यांमधौनरः ॥
नजातुशोकंलभतेसदानंदमयोभवेत् ॥ अत्रैवाशोककलिकाप्राशनमुक्तंहेमाद्रौलैंगे ॥ अशोककलिकाश्चाष्टौयेपिबंतिपुनर्वसौ ॥ चैत्रमासि
सिताष्टम्यांनतेशोकमवाप्नुयुः ॥ प्राशनमंत्रस्तु ॥ त्वामशोकवराभीष्टंमधुमाससमुद्भवम् ॥ पिबामिशोकसन्तप्तोमामशोकंसदाकुरु ॥ अत्रैव

१ षष्ठ्यामुपोषितःसन्सप्तम्यांपूजयेदित्यन्वयः । अग्रेषष्ठ्यामेवोपोषणस्यविधानात् । २ शुक्लकृष्णसप्तम्याम् । ३ प्रीणयेदितिशेषः । ४ सप्तम्योः ।

विशेषः पृथ्वीचंद्रोदये ॥ पुनर्वसुबुधोपेताचैत्रेमासिसिताष्टमी ॥ प्रातस्तुविधिवत्स्नात्वावाजपेयफलंलभेत् ॥ अथबुधवारयुक्तायांशुक्लाष्टम्यां बुधाष्टमीव्रतम् ॥ ॥ साचपरयुताग्राह्या ॥ शुक्लपक्षेष्टमीचैवशुक्लपक्षेचतुर्दशी ॥ पूर्वविद्धानकर्तव्याकर्तव्यापरसंयुता ॥ दिनद्वयेतद्व्याप्तावव्याप्तौवापूर्वा ॥ मुहूर्तमात्रसत्वेपिपरा ॥ चैत्रेमासिचसंध्यायांप्रसुप्तेचजनार्दने ॥ बुधाष्टमीनकर्तव्याहंतिपुण्यंपुराकृतम् ॥ ॥ अथव्रतविधिः ॥ ॥ मासपक्षाद्युल्लिख्यममइहजन्मनिजन्मांतरेचबाल्यादारभ्यकर्मणामनसावाचाजानताजानतावाकृतपरस्वाद्यपहृतिदोषपरिहारार्थंपुत्रपौत्रादिसकलमनोरथसिद्धिप्राप्त्यर्थंश्रीपरमेश्वरप्रीत्यर्थंबुधाष्टमीव्रतमहंकरिष्ये ॥ तत्रविहितंबुधपूजनंचकरिष्यइतिसंकल्प्य ॥ बुधंषोडशोपचारैःकलशोपरिपूजयेत् ॥ चतुर्बाहुंग्रहपतिंसुप्रसन्नमुखंबुधम् ॥ ध्यायेहंशंखचक्रासिपाशहस्तामिलाप्रियम् ॥ पीतमाल्यांबरधरः[1] कर्णिकारसमद्युतिः ॥ खड्गचर्मगदापाणिःसिंहस्थोवरदोबुधः ॥ ध्यानम् ॥ तारासुतनमस्तेस्तुनक्षत्राधीश्वरप्रिय॥गृहाणपूजांभगवन्समागत्यग्रहेश्वर ॥ आवाहनम् ॥ उद्बुध्यध्वमित्यृचामध्येबुधमावाह्यअधिदेवतांविष्णुमिदंविष्णुरितिमंत्रेणप्रत्याधिदेवतांनारायणंसहस्रशीर्षेतिसूक्तेनावाहयेत् ॥ इलापतेनमस्तेस्तुनिशेशप्रियसूनवे ॥ हेमसिंहासनंदेवगृहाणप्रीतयेमम ॥ आसनंस० ॥ शीतलोदकमानीतंसुपुण्यसरिदुद्भवम् ॥ पाद्यंगृहाणदेवेशममाघपरिशुद्धये ॥ पाद्यंस० ॥ तारासुतनमस्तेस्तुसततंभगवत्प्रिय ॥ गृहाणार्घ्यंग्रहपतेनानाफलसमन्वितम् ॥अर्घ्यंस० ॥ सुगंधद्रव्यसंयुक्तैःशुद्धैःस्वादुसरिज्जलैः ॥ आचम्यतांनिशानाथनंदनप्रीतयेमम ॥ आचमनंस० ॥ पयोदधिघृतमधुशर्करासंयुतंमया ॥

१ इदंध्यानं मात्स्योक्तमन्यदेव ।

पंचामृतंसमानीतंस्नानार्थंस्वीकुरुप्रभो ॥ पंचामृतम् ॥ वासितंगंधकर्पूरैर्निर्मलंजलमुत्तमम् ॥ स्नानायतेमयाभक्त्यादीयतेव्रत सिद्धये ॥ अतोदेवादिकैःषड्भिःस्नापनीयस्ततोबुधः ॥ पौरुषेणचसूक्तेनउद्बुध्यस्वेत्यृचैकया ॥ स्नानम् ॥ पीतवस्त्रद्वयंदे वराजवंशकरप्रभो ॥ उर्वशीनाथजनकगृहाणप्रीतयेसदा ॥ वस्त्रम् ॥ यज्ञोपवीतकंसूत्रंत्रिगुणंत्रिदशप्रिय ॥ ममपाशविनाशार्थं गृहाणप्रीतयेबुध ॥ उपवीतम् ॥ हरिचंदनकस्तूरीकर्पूरादिसमान्वितम् ॥ गंधंसमर्पयेत्तुभ्यमिलानाथनमोस्तुते ॥ गंधंस० ॥ अक्षताश्च० अक्षतान्० ॥ माल्यादी० पुष्पाणि० ॥ अथांगपूजा ॥ बुधाय० पादौपू० सोमपुत्राय० जानुनीपू० तारकाय० कटीपू० राजपुत्राय० उदरंपू० इलाप्रियाय० हृदयंपू० कुमाराय० वक्षःस्थलंपू० पुरूरवःपित्रे० बाहूपू० सोमसुताय० स्कंधौपू० पीतव र्णाय० मुखंपू० ज्ञानाय० नेत्रेपू० बुधाय० मूर्धानंपू० सोमसूनवे० सर्वांगंपू० ॥ वनस्पतिर० धूपम् ॥ साज्यंचेतिदीपम् ॥ नैवेद्यंगृ० नैवेद्यम् ॥ पूगीफलमितितांबूलम् ॥ इदंफलमितिफलम् ॥ हिरण्यगर्भेतिदक्षिणाम् ॥ श्रियेजातइतिनीराजनदीपम् ॥ उद्बुध्यस्वेतिपुष्पांज लिम् । उर्वश्याश्चपतिर्यस्तुयःपुरूरवसःपिता ॥ ग्रहमध्येसुरूपोयोबुधोनःसंप्रसीदतु ॥ विशेषार्घ्यम् ॥ यानिकाचिचेतिप्रदक्षिणाम् ॥ नम स्कारान् ॥ आवाहनंनेतिप्रार्थना ॥ संतुष्टोवायनादस्मादिलानाथोग्रहेश्वरः ॥ सतांबूलाष्टलड्डूकंप्रतिगृह्णातुवायनम् ॥ वायनम् ॥ इतिपूज नम् ॥ अथकथा ॥ श्रीकृष्णउवाच ॥ बुधाष्टमीव्रतंभूपवक्ष्यामिशृणुपांडव ॥ येनचीर्णेननरकंनरःपश्यतिनक्वचित ॥ १ ॥ युधिष्ठिर उवाच ॥ बुधाष्टमीव्रतंकिंतत्कस्मात्पापाच्चमुंचति ॥ तत्सर्वंवदनिश्चित्यममदेवदयानिधे ॥ २ ॥ श्रीकृष्णउवाच ॥ पुराकृतयुगस्यादौइ

लेराजाबभूवह ॥ बहुभृत्यसुहृद्भिर्मित्रैर्मंत्रिभिःपरिवारितः ॥ ३ ॥ जगामहिमवत्पार्श्वमहादेवेनपालितम् ॥ योस्यांप्रविशतेभूमौसःस्त्रीभवतिनिश्चितम् ॥ ४ ॥ सराजामृगयासक्तःप्रविष्टस्तद्दुमावनम् ॥ एकाकीहयमारूढःक्षणात्स्त्रीत्वंजगामह ॥ ५ ॥ साबभ्रामवनेशून्येपीनोन्नतपयोधरा ॥ क्काहंकस्यकुतःप्राप्तानसाबुध्यतकिंचन ॥ ६ ॥ तांददर्शबुधस्तन्वींरूपौदार्यगुणान्विताम् ॥ अष्टम्यांबुधवारेचतस्यास्तुष्टोबुधग्रहः ॥ ७ ॥ ददौगृहाश्रमंरम्यमात्मीयंरूपतोषितः ॥ पुत्रमुत्पादयामासयोसौख्यातःपुरूरवाः ॥ ८ ॥ चंद्रवंशकरोराजाआद्यःसर्वमहीभृताम् ॥ ततःप्रभृतिपूज्येयमष्टमीबुधसंयुता ॥ ९ ॥ सर्वपापप्रशमनीसर्वोपद्रवनाशिनी ॥ अथान्यदपितेवच्मिधर्मराजकथानकम् ॥ ॥ १० ॥ कृष्णउवाच ॥ आसीद्राजाविदेहायांनिमिर्नामासवैरिभिः ॥ संग्रामेनिहतोवीरस्तस्यभार्यातिनिर्धना ॥ ११ ॥ ऊर्मिलानामबभ्राममहींबालकसंयुता ॥ अवंतीनगरंप्राप्यब्राह्मणस्यनिकेतने ॥ १२ ॥ चकारोदरपूर्त्यर्थंनित्यंकंडनपेषणे ॥ हृत्वासासक्तगोधूमान्ददौबालकयोस्तदा ॥ १३ ॥ कारुण्यात्पुत्रवात्सल्यात्क्षुधासंपीड्यमानयोः ॥ कालेनबहुनासाध्वीपंचत्वमगमत्तदा ॥ १४ ॥ पुत्रस्तस्याविदेहायांगत्वास्वपितुरासने ॥ उपविष्टःसत्वयोगाद्बुभुजेगामनाकुलाम् ॥ १५ ॥ अन्विष्यधर्मराजेनसाकन्यानिमिवंशजा ॥ विवाहिताहिताभर्तुःसामहानायिकाभवत् ॥ १६ ॥ श्यामलानामचार्वंगीसर्वलक्षणसंयुता ॥ तामुवाचवरारोहांधर्मराजःस्विकांप्रियाम् ॥ १७ ॥ वहस्वसर्वव्यापारंश्यामलेत्वंगृहेमम ॥ कुरुष्वसर्वभृत्यानांदानशिक्षांयथोचिताम् ॥ १८ ॥ किंत्वेतेप्रवराःसप्तकीलकैरतियंत्रिताः ॥ कदाचिदपिनोद्धाट्या

१ प्रसिद्धाश्रूयतेश्रुताविंतिहेमाद्रौपाठः । २ कौष्ठाः । भाषायांकोठडीशब्देनसिद्धाः ॥ हेमाद्रौतुसप्तप्रवरस्थानेपंजरशब्दोदृश्यते ।

स्त्वयावैदेहनंदिनि ॥ १९ ॥ एवमस्त्वितिवैप्रोक्तानिजकर्मचकारह ॥ ([1]ततोभुक्त्वाबुधस्याग्रेबांधवैःप्रीतिपूर्वकम् ॥ तावदेवहिभोक्तव्यंया वत्साकथ्यतेकथा ) कदाचिद्व्याकुलीभूत्वाधर्म[2]राजविदेहजा ॥ २० ॥ उद्घाटयित्वाप्रथमंददर्शजननींस्विकाम् ॥ पच्यमानांचरुदतींभीषणैर्यमकिंकरैः ॥ २१ ॥ लीलयाक्षिप्यतेबद्धातप्ततैलेषुसापुनः ॥ तथैवतांसमालोक्यव्रीडितासामनस्विनी ॥ २२ ॥ द्वितीयेप्रवरेतद्वत्तांददर्शस्वमातरम् ॥ यंत्रेनिष्पीड्यमानांसाशिलायांलोष्टकेनच ॥ २३ ॥ तृतीयेप्रवरेतद्वत्तामेवचददर्शसा ॥ करिभिःपीडयमानासाघंटायुक्तैश्चकल्पितैः ॥ २४ ॥ श्वभिश्चतुर्थेप्रवरेभीषणैर्दारुणाननैः ॥ अभक्ष्यभक्षणाद्यैश्चक्रंदंतींतांपुनःपुनः ॥ २५ ॥ पंचमेप्रवरेभूमौकंठेपादेनताडिताम् ॥ संदंशैर्घनपातैश्वाछिद्यमानांसहस्रशः ॥ २६ ॥ षष्ठेतामिक्षुयंत्रस्थांमस्तकेमुद्गराहताम् ॥ संपीडयमानामानिशंसुभृशंदारुखंडवत् ॥ २७ ॥ सप्तमेप्रवरेचैवकृमिरूपैःसुदारुणैः ॥ दृष्ट्वातथागततांतुमातारंदुःखकर्शिताम् ॥ २८ ॥ श्यामलाम्लानवदनाकिंचिन्नोवाचभामिनी ॥ अथागतोयमःप्राहसशोकांश्यामलामिति ॥ २९ ॥ किमर्थंम्लानवदनातिष्ठसित्वमनिंदिते ॥ कारणंतत्रमेब्रूहिकच्चिन्नोद्घाटितास्त्वया ॥ ३० ॥ एतेप्रवरकाःसप्तनिषिद्धायेपुरामया ॥ इत्युक्ताश्यामलाप्राहभर्तारंविनयान्विता ॥ ३१ ॥ किंनुपापंकृतंराजन्ममामात्रासुदारुणम् ॥ येनेत्थंविविधैर्घोरैर्बाध्यतेबहुशस्त्वया ॥ ३२ ॥ इत्युक्तःप्रिययाप्राहतांयमःप्रहसन्निव ॥ तवमात्रासुतस्नेहाद्द्रोधूमावैह्रताःकिल ॥ ३३ किंनजानासितद्भद्रेयेनपृच्छसिमामिह ॥ ब्रह्मस्वंप्रणयाद्भुक्तंदहत्यासप्तमंकुलम् ॥ ३४ ॥ तदेवकृमिरूपेणक्लिश्नात्यासप्तमंकु



१ अयंश्लोकःपूर्वोत्तरसंबंधाभावादत्रानुपयुक्तः । लोकव्यवहाररस्तु चकारहेत्यंतकथाश्रवणानंतरंभोजनत्यागरूपोदृश्यते । २ युधिष्ठिरसंबोधनम् ।

लम् ॥ गोधूमास्तइमेभूत्वाकृमिरूपाःसुदारुणाः ॥ ३५ ॥ येपुराब्राह्मणगृहेहृतास्तेत्वत्कृतेतया॥जानाम्येतदहंसर्वंयत्तेमात्राकृतंपुरा ॥ ३६ ॥
श्यामलोवाच ॥ तथापित्वांसमासाद्यदेवंजामातरंविभुम् ॥ मुच्यतेतेनपापेनयथात्वमधुनाकुरु ॥३७॥ तच्छ्रुत्वाचिंतयाविष्टश्चिरंध्यात्वाजगा
दताम्॥धर्मराजःसुखासीनःप्रियांप्राणधनेश्वरीम्॥३८॥इतस्त्वंसप्तमेतीतेजन्मनिब्राह्मणीशुभा॥आसीस्तस्मिंस्तदासंगात्सखीनांपर्युपासिता॥
॥३९॥बुधाष्टमीतुसंपूर्णायथोक्तफलदायिनी॥तस्याःपुण्यंददस्वत्वंसत्यंकृत्वाममाग्रतः ॥४०॥ तेनमुच्येतनरकात्तेमातापापसंचकृत् ॥ तच्छ्रु
त्वात्वरितंस्नात्वाददौपुण्यंत्रिवाचिकम्॥४१॥स्वमात्रेश्यामलातुष्टातेनमोक्षंजगामसा॥ऊर्मिलारूपसंपन्नादिव्यदेहावरांशुका ॥४२॥ विमानव
रमारूढादिव्यमाल्यांबरावृता ॥ भर्तुःसमीपेस्वर्गस्थादृश्यतेऽद्यापिसाजनैः॥४३॥बुधस्यपार्श्वेनभसिनिमिराजसमीपगा ॥ विस्फुरंतीमहारा
जबुधाष्टम्याःप्रभावतः ॥ ४४ ॥ युधिष्ठिरउवाच ॥ यद्येवंप्रवराकृष्णतिथिर्वैतुबुधाष्टमी ॥ तस्याएवविधिंब्रूहियदितुष्टोसिमाधव ॥ ४५ ॥
श्रीकृष्णउवाच ॥ शृणुपांडवयत्नेनबुधाष्टम्याविधिंशुभम् ॥ यदायदासिताष्टम्यांबुधवारोभवेन्नृप ॥ ४६ ॥ तदातदाहिसाग्राह्याएकभक्ताश
नैर्नृभिः ॥ स्नात्वानद्यांतुपूर्वाह्णेगृहीत्वाकरकंनवम् ॥ ४७ ॥ जलपूर्णंचसद्रत्नैःकृत्वानर्घ्यैःसमन्वितम् ॥ पूजयेच्चगृहंनीत्वाबुधमेवंक्रमेणतु ॥
॥ ४८ ॥ एकमाषसुवर्णेनतदर्धार्धेनवापुनः ॥ कारयेद्बुधरूपंतुस्वशक्त्यावाप्रयत्नतः ॥ ४९ ॥ अंगुष्ठमात्रंपुरुषंचतुर्बाहुंसुलक्षणम् ॥ पद्मम
ध्येऽव्रणंकुंभंपूजयेत्सिततंडुलैः ॥ ५० ॥ हेमपात्रेचसंस्थाप्यपीतवस्त्रयुगेनच ॥ वस्त्रोपरिस्थितंदेवंपीतवस्त्राक्षतादिभिः ॥ ५१ ॥ पंचामृतेन
संस्नाप्यतत्तन्मंत्रैःक्रमेणतु ॥ नैवेद्यंगुग्गुलुंधूपंदशांगेनसुगंधितम् ॥ ५२ ॥ पायसैर्घृतपूरैश्चमोदकाशोकवर्तिभिः ॥ फलैश्चविविधैश्चैवश

केराभिर्गुडैः शुभैः ॥ ५३ ॥ ततःपुष्पाक्षतैः पीतैर्वक्ष्यमाणैश्चनामभिः ॥ [illegible]रोबुधायपादौतुसोमपुत्रायजानुनी ॥ ५४ ॥ तारकायकटींचैव राजपुत्रायचोदरम् ॥ इलाप्रियायहृदयंकुमारायेतिवक्षसि ॥ ५५ ॥ ब[illegible]पुरूरवःपित्रेअंसौसोमसुतायच ॥ मुखंतुपीतवर्णायज्ञानायनयनद्वयम् ॥५६॥मूर्धानंतुबुधायेतिएषुस्थानेषुपूजयेत् ॥ सौवर्णराजतंताम्रंपात्रमादायशोभनम्॥५७॥गंधपुष्पाक्षतैःपीतैर्गुडमिश्रांबुपूरितैः ॥ जानुभ्यामवनिंगत्वातेनचार्घ्यंनिवेदयेत् ॥ ५८ ॥ उर्वश्याःश्वशुरोयस्तुयःपुरूरवसःपिता ॥ योग्रहाणामधिपतिर्बुधोमेसंप्रसीदतु ॥ ५९ ॥ वरांश्चविष्णुनादत्तान्सकलान्नःप्रयच्छतु ॥ मंत्रेणानेनदत्वार्घ्यंजप्त्वामंत्रमिमंपुनः ॥ ६० ॥ प्रथमेमोदकान्दद्याद्द्वितीयेफेणिकास्तथा ॥ तृतीयेघृतपूराश्चचतुर्थेवटकांस्तथा ॥६१॥ पंचमेमंडकान्दद्यात्षष्ठेसोहालिकास्तथा ॥ अशोकवर्तिकाश्चैवसप्तमेमासिकारयेत् ॥ ६२ ॥ अष्टमेशर्करामिश्रैःखांडवैश्चयुधिष्ठिर ॥ विप्रायवायनंदद्याद्व्रतीभोजनमाचरेत् ॥६३॥ एवंक्रमेणकर्तव्यंबुधाष्टम्यांयुधिष्ठिर ॥ बांधवैःसहामित्रैश्चभोक्तव्यंप्रीतिपूर्वकम्॥सौम्यमाख्यानकंशृण्वन्नरकेभ्योविमुच्यते ॥६४॥ यश्चाष्टमींबुधयुतांसमवाप्यभक्त्यासंपूजयेच्छशिसुतंकरकोपरिस्थम् ॥ पक्वान्नपात्रसहितंसहिरण्यवस्त्रंपश्यत्यसौयमपुरींनकदाचिदेव ॥ ६५ ॥ इतिभविष्योत्तरपुराणोक्ताबुधाष्टमीव्रत[1]कथा ॥ अथोद्यापनम् ॥ युधिष्ठिर उवाच ॥ उद्यापनविधिंब्रूहिकृपयाभक्तवत्सल ॥ कस्मिन्कालेचकिंद्रव्यंकथंसफलभाग्भवेत् ॥ श्रीकृष्णउवाच ॥ आदौमध्येतथाचांतेकुर्यादुद्यापनक्रियाम् ॥ सप्तम्यांप्रयतोभूत्वाकुर्याद्वैदंतधावनम् ॥ आचम्यकुर्यात्संकल्पंदशविप्रान्निमंत्रयेत् ॥ अष्टम्यांप्रातरुत्थायशुचिर्भूत्वाव्रती

१ अत्रहेमाद्रौपाठवैषम्यंश्लोकाधिक्यंचबहुतरंदृश्यते ।

ततः ॥ गंगाद्यादिमहातीर्थेस्नात्वानित्यकृतक्रियः॥गृहमध्येशुचौदेशेरंगवल्ल्याविराजिते॥ पुण्याहवाचनंकृत्वाकुर्याद्रक्षाविधानकम् ॥ प्राणा
नायम्यविधिवत्कृत्वासंकल्पनादिकम् ॥ तिथ्याद्युल्लेखनांतेचव्रतनामप्रकीर्तयेत् ॥ मयाकृतंबुधाष्टम्यांव्रतंसांगफलाप्तये ॥ उद्यापनंकरिष्येह
मित्यक्षतकुशोदकम् ॥ त्यक्त्वाचार्यादिवरणंकुर्याद्वस्त्रादिभिःफलैः ॥ ब्रह्माणंवृणुयात्तत्रवस्त्रतांबूलभूषणैः ॥ ततःपूजादिकंकुर्याद्गृहयज्ञपुरः
सरम् ॥ ततस्त्वष्टदलंकुर्यान्मध्येकर्णिकयासह ॥ पंचवर्णैःसमापूर्यदलाग्राणिचकेसरान् ॥ कर्णिकायांन्यसेद्धान्यंपंचप्रस्थप्रमाणतः ॥ दले
षुचदलाग्रेषुयथाशक्त्याविनिक्षिपेत् ॥ तत्रैवस्थापयेत्कुंभान्मध्येपूर्वादिदिक्षुच ॥ गंगाजलेनसंपूर्यवस्त्रादिभिरलंकृतान् ॥ पंचत्वक्पल्लवोपेता
न्नवकुंभान्यथाविधि ॥ तदुत्तरेग्रहान्सर्वान्मंडलेस्थापयेत्ततः ॥ तत्पूर्वेस्थापयेत्कुंभंवारुणंचाविशेषतः ॥ वस्त्रत्वक्पल्लवफलैःपंचरत्नैःसकां
चनैः ॥ तत्तन्मंत्रैःप्रतिष्ठाप्यपूजयेच्चयथाविधि ॥ सप्तजन्मार्जितंचोपपातकादिचयत्कृतम् ॥ तद्दोषपरिहारायबुधाष्टमीव्रतंकृतम् ॥ तस्यसांग
फलप्राप्त्यैपूजांहोमंकरोम्यहम् ॥ बुधप्रीत्यैचतत्सर्वमितिसंकल्प्यपूजयेत् ॥ कर्षमात्रेणराजेंद्रतदर्धार्धेनवापुनः ॥ बुधस्यप्रातिमांकुर्यात्सु
वर्णेनविचक्षणः ॥ कर्णिकायांमध्यकुंभेताम्रपात्रेबुधंन्यसेत् ॥ पंचामृतेन[1]स्नपनंवस्त्रयुग्मेनवेष्टयेत् ॥ ध्यायन्नारायणंदेवंबुधंबाणसमाकृतिम् ॥
चतुर्भुजंशंखचक्रगदाशार्ङ्गधरंयजेत् ॥ आत्रेयंपीतवस्त्रंचपीतपुष्पाक्षतादिभिः ॥ उपचारैःषोडशभिःपुरुषसूक्तविधानतः ॥ तद्दक्षिणेविष्णु
मिदंविष्णुरित्याधिदैवतम् ॥ सहस्रशीर्षापुरुषंवामेप्रत्याधिदैवतम् ॥ दलेषुविन्यसेद्देवान्प्रागारभ्यप्रदक्षिणम् ॥ रविंचंद्रंकुजगुरूशुक्रार्कीराहु

१ कृत्वेतिशेषः ।

केतुकौ ॥ अनंतंवामनंविष्णुंशौरिंसत्यंजनार्दनम् ॥ हंसंनारायणंचाष्टौदलाग्रेषुचपूजयेत् ॥ धूपैर्दीपैश्चनैवेद्यैःफलैश्चविविधैर्यजेत् ॥ बहिरिंद्रा
दयःपूज्यादशादिक्पालकास्तथा ॥ यमंचचित्रगुप्तंचश्यामलांदक्षिणेयजेत् ॥ कुंभेषुवंशपात्रेषुअष्टावष्टौचलड्डुकान् ॥ यज्ञोपवीतसफलदक्षि
णासहितान्न्यसेत् ॥ पूजयित्वाततोहोमं[1]शाखोक्तविधिनासुधीः॥मंडलात्पश्चिमेभागेस्थंडिलंचतुरस्रकम्॥ कृत्वातूल्लेखनादीनिकृत्वाग्निंस्थापये
त्सुधीः ॥ इध्मंदर्भैःपरिस्तीर्यपात्रासादनमाचरेत् ॥ पूर्णपात्रविधानांतेब्रह्मासनमतःपरम्॥इध्माधानमुखप्रांतेप्रधानाहुतिहावनम् ॥ अपामार्ग
समिद्भिश्चयवव्रीहितिलैर्घृतैः ॥ गोधूमैःसतिलैर्होमंपृथक्पृथगतंद्रितः ॥ उद्बुध्यस्वेतिमंत्रेणहोममष्टोत्तरंशतम् ॥ कृत्वातुविष्णुमंत्रेणतथाना
रायणंहुनेत् ॥ अधिप्रत्यधिदेवौचमंत्राभ्यांजुहुयात्तथा ॥ ग्रहादिभ्यश्चजुहुयात्प्रायश्चित्तादिकंतथा ॥ पूर्णाहुतिंचजुहुयात्कुर्याद्ब्रह्मविसर्जनम् ॥
पूर्णपात्रोद्वासनंचबलिदानमतःपरम्॥वह्न्यादिपूजनंकृत्वादेवतोद्वासनंततः॥अभिषिच्याथातिलकंरक्षाबंधनमेवच ॥ आचार्यंचसपत्नीकंपूजयि
त्वायथाविधि॥प्रतिमावस्त्रकलशान्गोदानंदक्षिणांतथा ॥ दत्वाब्रह्मादिविप्रेभ्यःकलशांश्चसदक्षिणान् ॥ ब्राह्मणान्भोजयेत्पश्चादाशिषोवाचयेत्त
था ॥ इतिश्रीभविष्योत्तरपु० बुधाष्टमीव्रतोद्यापनंसंपूर्णम् ॥ अथशुक्लादिश्रावणकृष्णाष्टम्यांदशाफलव्रतम् ॥ ॥ सानिशीथव्यापिनीग्राह्या ॥
तत्रपूजाविधिः ॥ तमद्भुतंबालकमंबुजेक्षणंचतुर्भुजंशंखगदार्युदायुधम् ॥ श्रीवत्सलक्ष्मंगलशोभिकौस्तुभंपीतांबरंसांद्रपयोदसौभगम् ॥ महा
र्हवैदूर्यकिरीटकुंडलत्विषापरिष्वक्तसहस्रकुंतलम्॥उद्दामकांच्यंगदकंकणादिभिर्विराजमानंवसुदेवऐक्षत ॥ कृष्णाय० ध्यानम् ॥ वासुदेवाय०

१ कुर्यादितिशेषः ।

आवाहनम् ॥ शेषशायिने॰ आसनम्॥ तीर्थपादाय॰पाद्यम् ॥ गंगाजनकाय॰अर्घ्यम् ॥ यमुनावेगसंहारिणेन॰आचमनम्॥ नित्यमुक्ताय
पंचामृतस्नानम्॥श्रीगोपालाय॰स्नानम्॥पीतवाससेन॰वस्त्रम्॥यज्ञप्रियाय॰यज्ञोपवीतम् ॥ सर्वेश्वराय॰चंदनम् ॥ अधोक्षजाय॰अक्षतान् ॥
कमलाप्रियाय॰ पुष्पाणि ॥ तुलसीपत्रैर्नामपूजा ॥ कृष्णायनमः विष्णवेन॰ हरयेन॰शेषशायिने॰गोविंदाय॰ गरुडध्वजाय॰ दामोदराय॰
हृषीकेशाय॰पद्मनाभाय॰ उपेंद्राय॰॥ १ ॰॥अथदोरकबंधनम्॥संसारार्णवमग्नानांनराणांपापकर्मणाम् ॥ इहमोक्षफलावाप्तिंकुरुष्वपुरुषोत्तमे
तिदोरकबंधनम्॥पारिजातापहाराय॰ धूपम् ॥ज्ञानप्रदीपाय॰दीपम्॥चक्रिणेन॰नैवेद्यम्॥अघनाशिनेन॰तांबूलम्॥ सर्वव्यापिने॰दक्षिणाम्॥
पद्मनाभाय॰ नीराजनम् ॥ अनंताय॰पुष्पांजलिम्॥देवदेवनमस्तेस्तुभक्तप्रियदयानिधे ॥ गृहाणार्घ्यंमयादत्तंदेवक्यासहितप्रभो ॥ विशेषा
र्घ्यम् ॥ त्रिलोकनाथोदेवेशः सर्वभूतदयानिधिः ॥ दानेनानेनसुप्रीतोभवत्विहसदामम ॥ वायनमंत्रः ॥ श्रीकृष्णःप्रतिगृह्णातिश्रीकृष्णोवै
ददातिच ॥ श्रीकृष्णस्तारकोभाभ्यांश्रीकृष्णायनमोनमः ॥ ॥ इतिप्रतिग्रहमंत्रः ॥ यस्यस्मृत्येतिप्रार्थना ॥ ॥ अथकथा ॥ ॥ सूतउ
वाच ॥ शृणुध्वमृषयःसर्वेनैमिषारण्यवासिनः ॥ पुराचद्वापरस्यांतेकृष्णदेवेनभाषितम् ॥ १ ॥ तद्व्रतंवःप्रवक्ष्यामिसांगोपांगंमुनीश्वराः ॥पुरा
वैद्वापरस्यांतेपांडवाःकौरवास्तथा ॥ २ ॥ द्यूतंप्रचक्रिरेसर्वेधनमानेनमोहिताः ॥ निर्जिताःपांडवादुःखाद्वनंजग्मुर्मुनीश्वराः ॥३ ॥ कुंतीविदुरगे
हेतुसंस्थिताचमहायशाः[1] ॥ तच्छ्रुत्वाकृष्णदेवोपिकृपयापरयायुतः ॥ ४ ॥ आययौगरुडारूढोविदुरस्यगृहंप्रति ॥ तत्रापश्यन्महाबाहुं

१ दुःखिताभृशमित्यपिपाठः ।

कुंतीपरमहर्षिता ॥५॥ विदुरेणार्चितः कृष्णः कुंत्याचैवहिभक्तितः ॥ नत्वाहकुंतींतांदेवीमभ्रस्याभांविडंबयन् ॥ ६ ॥ त्वत्पुत्रास्तुमहादुःखा
त्प्रययुर्गहनंवनम् ॥ तवापिसुमहद्दुःखंसर्वदातन्ममाप्रियम् ॥ ७ ॥ कुंत्युवाच ॥ हृषीकेशमहाबाहोमहादुःखेनकर्शिता ॥ कृपयापरयादे
वरक्षितावयमीदृशाः ॥ ८ ॥ ममचैवमहद्दुःखंत्वयिमांत्रातरिस्थिते ॥ मत्पुत्रास्तुमहादुःखात्प्रविष्टागहनंवनम् ॥ ९ ॥ कृपयाविदुरोमह्यं
कौरव्यःप्रस्थसंमितम् ॥ ददातिप्रीतिदःकृष्णजीवनायमहामतिः ॥ १० ॥ गृहस्यपश्चिमेभागेवसामिचजनार्दन ॥ दर्शिताकौ
रवाणांहिसर्वेषांकुमतिस्तथा ॥ ११ ॥ इतितस्यावचःश्रुत्वाकृष्णःपरमधर्मवित् ॥ आहचैनांवासुदेवोभक्तप्रियतमस्तदा ॥ १२ ॥ व्रतंते
कथयिष्यामियेनदुःखात्प्रमुच्यसे ॥ पुत्रपौत्रैःपरिवृतास्वंराज्यंप्राप्स्यसेऽचिरात् ॥ १३ ॥ दशाफलमितिख्यातंतद्व्रतंकुरुसुव्रते ॥ कुंत्युवाच ॥
कस्मिन्कालेतुकर्तव्यंतद्व्रतंकेशवप्रभो ॥ १४ ॥ वदमांप्रतिइत्युक्तोयादवेंद्रोजगादह ॥ श्रावणस्यासितेपक्षेअष्टम्यांचनिशीथके ॥ १५ ॥
देवक्यांवासुदेवश्चप्रादुर्भूतोनसंशयः ॥ तस्याग्रेदशगुणितंसूत्रंस्थाप्यप्रपूजयेत् ॥ १६ ॥ हस्तेबद्ध्वातुतत्सूत्रंदशाहंव्रतमाचरेत् ॥ संसारार्ण
वमग्नानांनराणांपापकर्मणाम् ॥ १७ ॥ इहामुत्रफलावाप्तिंकुरुष्वपुरुषोत्तम ॥ अनेनदोरकंबध्वादशवर्षंव्रतंचरेत् ॥ १८ ॥ देवस्यपुरतोनि
त्यंदशपद्मानिकारयेत् ॥ ततश्चशृणुयात्पुण्यांकथामेतांशुभावहाम् ॥ १९ ॥ तुलस्याःकृष्णवर्णायादलैर्दशभिरर्चयेत् ॥ कृष्णंविष्णुंत
थानंतंगोविंदंगरुडध्वजम् ॥ २० ॥ दामोदरंहृषीकेशंपद्मनाभंहरिंप्रभुम् ॥ एतैश्चनामभिर्नित्यंकृष्णदेवंसमर्चयेत् ॥ २१ ॥ नमस्कारंततः
कुर्यात्प्रदक्षिणसमन्वितम् ॥ एवंदशादिनंकुर्याद्व्रतानामुत्तमंव्रतम् ॥ २२ ॥ आदौमध्येतथाचांतेहोमंकुर्याद्विधानतः ॥ कृष्णमंत्रेणजुहुयाच्च

रुणाष्टोत्तरंशतम् ॥ २३ ॥ ततोहोमांतेविधिवदाचार्यंपूजयेत्सुधीः ॥ सौवर्णेताम्रपात्रेवामृन्मयेवेणुपात्रके ॥ २४ ॥ सौवर्णंतुलसीपत्रंकार
यित्वासुलक्षणम् ॥ प्रतिमांचतथाकृत्वाअर्चयित्वाविधानतः ॥ २५ ॥ निधायप्रतिमांतत्रआचार्यायनिवेदयेत् ॥ दातव्यागौःसवत्साचवस्त्रा
लंकारभूषिता ॥ २६ ॥ दशहोमेतुकृष्णायपूरिकादशचार्पयेत् ॥ दापयेत्तुब्राह्मणायस्वयंभुक्त्वातथैवच ॥ २७ ॥ उपायनंचगृह्णीष्वसर्वोप
स्करसंयुतम् ॥ संसारार्णवमग्नंमांपाहित्वंदेवकीसुत ॥ २८ ॥ अनेनोपायनंदत्वानमस्कृत्यक्षमापयेत् ॥ दक्षिणाभिर्युतादेविदातव्याःकृ
ष्णसन्निधौ ॥ २९ ॥ व्रतांतेदशविप्रेभ्यःप्रत्येकंदशपूरिकाः ॥ एवंदशसुवर्षेषुव्रतंकुर्यादतंद्रितः ॥ ३० ॥ एवंव्रतंत्वयादेविकर्तव्यं
कृष्णसान्निधौ ॥ एवमुक्तंतुकृष्णेनकुंतीश्रुत्वामुदान्विता ॥ ३१ ॥ उवाचकृष्णदेवंसाममवित्तंनविद्यते ॥ प्रत्युवाचहृषीकेशस्तव
वित्तंभविष्यति ॥ ३२ ॥ एवमुक्त्वाययौकृष्णःकर्णंद्रष्टुंसुखान्वितः ॥ कर्णोपिचमहात्मानंकृष्णंदृष्ट्वाप्रहर्षितः ॥ ३३ ॥ सिंहा
सनंददौतस्मैपाद्यमर्घ्यंतथैवच ॥ कर्णोप्युवाचदेवेशंकिमर्थंतवचागमः ॥ ३४ ॥ इत्युक्तःकृष्णदेवोथतवमातातिदुःखिता ॥ कर्णउवाच ॥
भूरिभयात्तथाकृष्णमातरंयाम्यहंकथम् ॥ ३५ ॥ कथंवादुःखतोमाताप्रमुच्येतवदस्वमे ॥ श्रीकृष्णउवाच ॥ सुवर्णपात्रेसंपूर्यपायसं
क्षीरसंयुतम् ॥ ३६ ॥ निधायशं[1]तनिष्कंतुदातव्यंवा[2]युहस्तके ॥ तवमातातथाप्रीताभविष्यतिनसंशयः ॥ ३७ ॥ एवमुक्त्वाततःकृष्णोद्वारका
माजगामह ॥ कृष्णवाक्यंततःश्रुत्वाकर्णश्चक्रेमहायशाः ॥ ३८ ॥ पायसेनसमायुक्तंपात्रंस्वर्णेनकारितम् ॥ शतनिष्कसमायुक्तंवायुहस्तेप्रदा

१ सहस्रशतनिष्कंतुदातव्यमित्यपिक्वचित् । २ वायुहस्तेदांतव्यमित्यस्यकर्णेनप्रेषितमितितयायथानज्ञास्यतेतथाप्रेषणीयमित्यर्थः ।

यसैः ॥ ३९ ॥ प्रहसंतीतथाकुंतीपात्रंदृष्ट्वाप्रहर्षिता ॥ देवस्यसन्निधौसातुव्रतंचक्रेथभक्तितः ॥ ४० ॥ कृष्णेनकारितंसर्वंममभाग्यायवैध्रुवम् ॥ कृष्णपूजांततःकृत्वाकथांश्रुत्वाथभक्तितः ॥ ४१ ॥ उपायनंददौतत्रब्राह्मणेभ्योयथाक्रमम् ॥ तुलसीदलंसुवर्णेनकारयित्वासुलक्षणम् ॥ ४२ ॥ प्रतिमांविष्णुभक्तायस्वर्णपात्रेनिधायच ॥ गोदानेनसमायुक्तामाचार्य्यायमहामते ॥ ४३ ॥ कुंतीददौमहादेवीविष्णुर्मेप्रीयतामिति ॥ व्रतंदशसुवर्षेषुचकारोद्यापनंततः ॥ ४४ ॥ तद्व्रतस्यप्रभावेणतनूजाश्चागतास्ततः ॥ हत्वाशत्रून्मृधेसर्वान्कृष्णस्यैवप्रसादतः ॥ ४५ ॥ युधिष्ठिरस्तुधर्मात्मास्वंराज्यंप्राप्तवान्सुधीः ॥ प्रोवाचेदंव्रतंकुंतीद्रौपदींचपतिव्रताम् ॥ ४६ ॥ दशाफलमितिख्यातंकृष्णदेवेनभाषितम् ॥ यूयंसर्वैमहादुःखंनिस्तीर्यस्वपुरींगताः ॥ ४७ ॥ व्रतस्यास्यप्रभावेणकृष्णस्यैवप्रसादतः ॥ त्वमप्येवंव्रतंभद्रेकुरुष्वसुसमाहिता ॥ ४८ ॥ पुत्रपौत्रैःपरिवृतासर्वान्कामानवाप्स्यसि ॥ आचख्यौतद्व्रतंतस्यैकुंतीपरमहर्षिता ॥ ४९ ॥ सापिचक्रेमहाभागाद्रौपदीव्रतमुत्तमम् ॥ तस्मात्सर्वप्रयत्नेनकर्तव्यंसुजनैःसदा ॥ ५० ॥ याभक्त्याकुरुतेनारीव्रतानामुत्तमंव्रतम् ॥ सर्वान्कामानवाप्नोतिविष्णुलोकेमहीयते ॥ ५१ ॥ इदंव्रतंमहापुण्यंव्रतानामुत्तमंशुभम् ॥ वदतांशृण्वतांचैवविष्णुलोकोभवेद्ध्रुवम् ॥ ५२ ॥ इतिश्रीभविष्योत्तरपु० दशाफलव्रतकथासंपूर्णा ॥ अत्रमूलंचिंत्यम् ॥ अथकृष्णादिमासेनभाद्रकृष्णाष्टम्यांजन्माष्टमीव्रतम् ॥ तच्चअर्धरात्रव्यापिन्यांकार्यम् ॥ रोहिण्यासहिताकृष्णामासिभाद्रपदेऽष्टमी ॥ अर्धरात्रेतुयोगोयंतारापत्युदयेतथा ॥ नियतात्माशुचिःसम्यक्पूजांतत्रप्रवर्तयेदितिविष्णुधर्मोत्तरेतस्यपूजाकाल

१ प्रेषयामासेतिशेषः ।

त्वोक्तेः ॥ दिनद्वयेअर्धरात्रव्याप्तावव्याप्तौवापरैव ॥ प्रातःसंकल्पकालेसत्त्वाद्दिवारात्रियोगाद्वर्जनीयाप्रयत्नेनसप्तमीसंयुताष्टमीतिब्रह्मवै
वर्तेसप्तमीयुक्तानिषेधाच्च ॥ यदापूर्वेद्युर्निशीथेकेवलाष्टमीउत्तरेद्युर्निशीथास्पर्शिन्यष्टमीरोहिणीयुक्तातदापूर्वैवग्राह्या ॥ कर्मकालसत्त्वात् ॥ रो
हिणीयोगस्तुकेवलंफलातिशयार्थोनवमीबुधादियोगवन्नतुनिर्णयोपयोगी ॥ इतरथा प्रेतयोनिगतानांतुप्रेतत्वंनाशितंनरैः ॥ यैःकृताश्रावणेमा
सिअष्टमीरोहिणीयुता ॥ किंपुनर्बुधवारेणसोमेनापिविशेषतः ॥ किंपुनर्नवमीयुक्ताकुलकोट्यास्तुमुक्तिदेतिसरोहिणीमप्यष्टमींविहा
यबुधनवमीयुताकार्यापद्येत ॥ सोमेनेन्यस्यसोमवारेणेत्यर्थइतिकेचित् ॥ तारापत्युदयेतथेतिविष्णुधर्मोत्तरैकमूलकल्पनालाघवाच्चं
द्रोदयेचेतिमयूखे ॥ उदयेचाष्टमीकिंचिन्नवमीसकलायदि ॥ भवेत्तुबुधसंयुक्ताप्राजापत्यर्क्षसंयुता ॥ अपिवर्षशतेनापिलभ्यतेय
दिवानवा ॥ तत्रउदयशब्दश्चंद्रोदयपरः ॥ सर्योदयपरत्वेतुयदा पूर्वेद्युर्निशीथेकेवलाष्टमीउत्तरेद्युर्निशीथास्पर्शिन्यष्टमीरोहिण्यायुक्तासती
बुधयुक्तातदैवोत्तरास्यान्नतदभावे ॥ यावद्वचनंवाचनिकमितिन्यायात् ॥ यदितुबुधाभावेऽपिरोहिणीयोगमात्रादेवोत्तरोच्यतेतदारोहिणी
योगाभावेपिबुधमात्रसद्भावादुत्तरास्यात्॥अन्यतरापायेप्येतद्वचनप्रवृत्तेरंगीकारात् ॥ ऋक्षयोगवद्वारयोगस्यापिप्राशस्त्यहेतुत्वाच्च ॥ किंच ॥
यथापूर्वेद्युर्निशीथेऽष्टमीमात्रसत्त्वेउत्तरेद्युश्चनिशीथात्पूर्वमृक्षयोगेबुधसत्त्वेचएतद्वचनादुत्तरेद्युर्व्रतमेवंपूर्वेद्युर्निशीथेशऋक्षाष्टमीसत्वेबुधाधिक्या
दुत्तरेद्युर्व्रतापत्तिरिति ॥ यच्चविष्णुरहस्ये ॥ प्राजापत्यर्क्षसंयुक्ताकृष्णानभसिचाष्टमी ॥ मुहूर्तमपिलभ्येतसोपोष्याचमहाफलेति ॥ अत्रा
पिमुहूर्तपदंनिशीथाख्यमुहूर्तपरम् ॥ यत्त्विदमत्यंताशुद्धम् ॥ तथात्वेवाक्यस्यैवानर्थक्यप्रसंगात् ॥ यदाहिशुद्धाप्यष्टम्यर्द्धरात्रेवर्तमाना

ग्राह्यातदारोहिणीसहितासुतरामितिर्किंवचनेन ॥ मुहूर्तमप्यहोरात्रेयस्मिन्युक्तंहिलभ्यते ॥ अष्टम्यांरोहिणीऋक्षंतांसुपुण्यामुपावसेदितिविष्णुरहस्येएवस्पष्टैवाहोरात्रसंबंधियत्किंचिन्मुहूर्तप्रतीतिरितिकालतत्वविवेचनेतद्विपरीतम् ॥ ऋक्षयोगस्यस्तावकत्वेनसार्थक्यात् ॥ किंचैतद्वचनद्वयगतापिशब्दस्यस्वार्थेतात्पर्याभावेनऋक्षयोगस्तावकत्वेनप्राशस्त्यबोधकत्वस्यैवोचितत्वादिति ॥ यत्पुनस्तत्रोक्तंकर्मकालव्याप्तिशास्त्रादेवप्रधानभूतायाअष्टम्याएवअर्धरात्रसत्त्वेनप्राप्तंग्राह्यत्वम् ॥ दिवावायदिवारात्रोनास्तिचेद्रोहिणीकला ॥ रात्रियुक्तांप्रकुर्वीतविशेषेणेंदुसंयुतामितिवचनेनरोहिणीयोगाभावविषयेविशेषःक्रियते ॥ एवंतस्यार्थः ॥ दिनावच्छेदेनरात्र्यवच्छेदेनवाकलामात्रापिचेद्रोहिणीअष्टम्यांनास्तितदैवचंद्रोदयसहितामर्धरात्रव्यापिनीमितियावत् ॥ दिनद्वयेपितादृश्याअभावेबहुरात्रिसंयुतामुत्तरांप्रकुर्वीतेति ॥ तन्न ॥ नेदंकर्मकालशास्त्रबाधकमन्यथाप्यर्थसंभवात् ॥ तथाहि ॥ दिनद्वयेवैषम्येणनिशीथेस्पर्शेअहोरात्रावच्छेदेनरोहिणीयोगाभावेचविशेषणाधिक्येनेंदुसंयुताअधिकनिशीथव्यापिनीग्राह्येतियावत् ॥ रोहिणीयोगेत्वधिकनिशीथव्यापिनीमपिविहायस्वल्पापिनिशीथयोगिनीरोहिणीयुतैवग्राह्येतिव्याख्यांतरंमयूखेद्रष्टव्यम् ॥ पारणंतुतिथिभांतेकार्यम् ॥ तदाहभृगुः ॥ जन्माष्टमीरोहिणीचशिवरात्रिस्तथैवच ॥ पूर्वविद्धैवकर्तव्यातिथिभांतेचपारणमिति ॥ निषेधोपिब्रह्मवैवर्ते ॥ अष्टम्यामथरोहिण्यांनकुर्यात्पारणंक्वचित् ॥ हन्यात्पुराकृतंकर्मउपवासार्जितंफलम् ॥ तिथिरष्टगुणंहंतिनक्षत्रंचचतुर्गुणम् ॥ तस्मात्प्रयत्नात्कुर्वीतातिथिभांतेचपारणमिति ॥ तत्रदिवसेउभयांतेपारणमितिमुख्यःपक्षः ॥ एकतरांतेत्वनुकल्पः ॥ यदातुतिथिनक्षत्रयोरन्यतरस्यैवादिनेंऽतस्तदारात्रौपारणानिषेधादन्यतरांतेपारणाभ्यनुज्ञानाद्दिवैवान्यतरांतेकार्या ॥ अतएववह्निपुराणे ॥

भांतेकुर्यात्तिथेर्वापिशस्तंभारतपारणमिति ॥ ॥ इतिजन्माष्टमीनिर्णयः ॥ ॥ अथव्रतप्रयोगः ॥ व्रतपूर्वदिनेदंतधावनपूर्वकंकृतैकभक्तो
व्रतदिनेकृतनित्यक्रियोदेवताःप्रार्थयेत ॥ सूर्यःसोमोयमःकालःसंध्येभूतान्यहःक्षपा ॥ पवनोदिक्पतिर्भूमिराकाशंखेचरानराः ॥ ब्रह्मशा
सनमास्थायकल्पंतामिहसंनिधिमित्युक्त्वासफलंपुष्पाक्षतजलपूर्णताम्रपात्रमादायमासपक्षाद्युल्लिख्यअमुकफलकामःपापक्षयकामोवाकृष्णप्री
तयेकृष्णजन्माष्टमीव्रतंकरिष्येइतिसंकल्प्य ॥ वासुदेवंसमुद्दिश्यसर्वपापप्रशांतये ॥ उपवासंकरिष्यामिकृष्णाष्टम्यांनभस्यहम् ॥ अद्यकृ
ष्णाष्टमींदेवींनभश्चंद्रंसरोहिणीम् ॥ अर्चयित्वोपवासेनभोक्ष्येहमपरेहनि ॥ एनसोमोक्षकामोस्मियद्गोविंदवियोनिजम् ॥ [1]तन्मेमुंचतुमांत्रा
हिपतितंशोकसागरे ॥ आजन्ममरणंयावद्यन्मयादुष्कृतंकृतम् ॥ तत्प्रणाशायगोविंदप्रसीदपुरुषोत्तम ॥ इत्युक्त्वापात्रस्थं जलंनिक्षिपेत ॥
ततः कदलीस्तंभवासोभिराम्रपल्लवयुतसजलपूर्णकलशैर्दीपैः पुष्पमालाभिर्युतमगुरुधूपितमाग्निखड्गकृष्णच्छागरक्षामणिद्वारन्यस्तमुसला
दियुतंमंगलोपेतंषष्ठ्यादेव्याधिष्ठितंदेवक्याः सूतिकागृहंविधायतस्यसमंताद्भित्तिषुकुसुमांजलीन्देवगंधर्वादीन्खड्गचर्मधरवसुदेवदेवकीनंदय
शोदागर्गगोपीगोपान्कंसनियुक्तान्गोधेनुकुंजरान्यमुनांतन्मध्येकालियमन्यच्चतत्कालीनंगोकुलचरितं यथासंभवंलिखित्वासूतिकागृहमध्येप्र
च्छदपटावृतंमंचकंस्थापयित्वामध्याह्नेनद्यादौतिलैःस्नात्वाअर्धरात्रेश्रीकृष्णंसपरिवारंपूजयेत ॥ ॥ अथपूजाविधिः ॥ ॥ येभ्योमा
तैवापित्रेइतिमंत्रौजपित्वा आगमार्थंत्वितिघंटानादंकृत्वा अपसर्पंत्वितिछोटिकामुद्रयाभूतान्युत्सार्य तीक्ष्णदंष्ट्रेतिक्षेत्रपालंसंप्रार्थ्य ॥ आच

---

१ यन्मेवियोनिजांविविधजन्मजंएनइतिशेषःतन्मांमुंचतुइत्यन्वयः विभोजनमित्यपिपाठःतत्रयन्मेविभोजनमुपवासस्तन्मांमुंचतुमोचयत्वित्यर्थः ।

म्यप्राणानायम्यदेशकालौसंकीर्त्य ममसहकुटुंबस्यक्षेमस्थैर्यविजयाभयायुरारोग्यैश्वर्याभिवृद्ध्यर्थंधर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थसि
द्ध्यर्थंनिशीथेसपरिवारश्रीकृष्णप्रीत्यर्थंचपुराणोक्तप्रकारेणपुरुषसूक्तविधानेनचयथासंभवनियमेन यथामीलितद्रव्यैर्जन्माष्टमीव्रतांगत्वेनप
रिवारसहितश्रीकृष्णपूजनमहंकरिष्येइतिसंकल्प्यकलशार्चनंशंखार्चनंचकुर्यात् ॥ पुरुषसूक्तेनन्यासान्कुर्यात् ॥ रंगवल्लीसमायुक्तेसर्वतो
भद्रमंडले ॥ अव्रणंसजलंकुंभंताम्रंमृन्मयमेववा ॥ संस्थाप्यवस्त्रसंवीतंकंठदेशेसुशोभितम् ॥ पंचरत्नसमायुक्तंफलगंधाक्षतैर्युतम् ॥ सहिर
ण्यंसमासाद्यताम्रेणपटलेनवा ॥ वंशमृन्मयपात्रेणयवपूर्णेनचैवहि ॥ आच्छादयेच्चचैलेनलिखेदष्टदलंततः ॥ कांचनीराजतीताम्रीपैत्तलीमृ
न्मयीतथा ॥ वार्क्षीमणिमयीचैववर्णकैर्लिखिताथवा ॥ इत्युक्तान्यतमांप्रतिमांविधायअग्न्युत्तारणंकृत्वाप्रतिमाकपोलौस्पृष्ट्वातद्देवतामूलमंत्रं
प्रणवादिचतुर्थ्यंतंनमोंतंनाम ॥ अस्यैप्राणाःप्रतिष्ठंतुअस्यैप्राणाःक्षरंतुच ॥ अस्यैदेवत्वमर्चायैमामहेतिचकश्चनेतिमंत्रंचपठन्प्राणप्रतिष्ठां
कुर्यात् ॥ अस्याइत्यस्यस्थानेतत्तद्देवतानामग्राह्यम् ॥ गायद्भिःकिन्नराद्यैःसततपरिवृतावेणुवीणानिनादैर्भृंगारादर्शकुंभप्रवरवृतकरैःकिंकरैः
सेव्यमाना ॥ पर्यंकेस्वास्तृतेयामुदिततरमुखीपुत्रिणीसम्यगास्तेसादेवीदेवमाताजयतिसुवदनादेवकीदिव्यरूपा ॥ इतिदेवकीम् ॥ मांचा
पिबालकंसुप्तंपर्यंकेस्तनपायिनम् ॥ श्रीवत्सवक्षसंशांतंनीलोत्पलदलच्छविमितिश्रीकृष्णंचध्यात्वाॐदेवक्यैनमइतिदेवकीं ॐ श्रीकृष्णाय
नमइतितत्प्रतिमायांकृष्णमावाह्य ॐनमोदेव्यैश्रियैइतिश्रियम् ॥ ॐवसुदेवायनमइतिवसुदेवम् ॥ ॐयशोदायैनमइतियशोदाम् ॥ ॐनंदायन
मइतिनंदम् ॐ बलदेवायनमइतिबलदेवम् ॐचंडिकायैनमइतिचंडिकांचावाह्य ॐ सपरिवारायकृष्णायनमइतिनाममंत्रेणकृष्णंपूजयेत् ॥

तद्यथा ॥ ॐ सपरिवारायकृष्णायनमःआसनम् ॥ ॐ सपरिवारायकृष्णाय० पाद्यम् ॥ ॐसपरिवारायकृष्णायनमःअर्घ्यम् ॥ ॐ सपरि
वारायकृष्णाय० आचमनीयम् ॥ योगेश्वरायदेवाययोगिनांपतयेविभो ॥ योगोद्भवायनित्यायगोविंदायनमोनमः ॥ स्नानम् ॥ ॐ सप०
कृष्णाय० वस्त्रम् ॥ ॐ सप० कृष्णाय० यज्ञोपवीतम् ॥ ॐ सप० कृष्णाय० चंदनम् ॥ स० कृ० पुष्पाणि० ॥ अथांगपूजा ॥
गोविंदाय० पादौपू० ॥ माधवाय० जंघेपू० ॥ मधुसूदनाय० कटींपू० पद्मनाभाय० नाभिंपू० हृषीकेशाय० हृदयंपू० ॥ संकर्षणाय०
स्तनौपू० ॥ वामनाय० बाहूपू० ॥ दैत्यसूदनाय० हस्तौपू० ॥ हरिकेशायनमःकंठंपू० ॥ चारुमुखाय० मुखंपू० ॥ त्रिविक्रमाय० नासि
कांपू० ॥ पुंडरीकाक्षाय० नेत्रेपू० ॥ नृसिंहाय० श्रोत्रेपू० ॥ उपेंद्राय० ललाटंपू० ॥ हरयेन० शिरःपू० ॥ श्रीकृष्णाय० सर्वांगंपूज० ॥
यज्ञेश्वरायदेवायतथायज्ञोद्भवायच ॥ यज्ञानांपतयेनाथगोविंदायनमोनमः ॥ धूपदीपौ ॥ विश्वेश्वरायविश्वायतथाविश्वोद्भवायच ॥
विश्वस्यपतयेतुभ्यंगोविंदायनमोनमः ॥ नैवेद्यम् ॥ ॐ स० कृ० आचमनीयम् करोद्वर्तनम् फलम् तांबूलम् दक्षिणाम् नीरा
जनम् पुष्पांजलिम् ॥ इतिभविष्यपुराणोक्तः पूजाक्रमः ॥ गारुडेतु यज्ञाययज्ञेश्वराययज्ञपतयेयज्ञसंभवायगोविंदायनमोनमइति अर्घ्यं
सर्वेषांयज्ञपादानांस्थानेयोगपदयुक्तोऽयमेवमंत्रःस्नाने ॥ तथैवविश्वपदयुक्तोनैवेद्ये ॥ तथैवधर्मपदयुक्तःस्वाहांतस्तिलहोमे ॥ विश्वप
दयुक्तएवशयने ॥ सोमपदयुक्तश्चंद्रपूजायांइतिमंत्राउक्ताः ॥ ततोगव्यघृतेनाग्नौवसोर्धाराक्वचिद्गुडघृतेनेति ॥ ततोजातकर्मनालच्छे
दषष्ठीपूजानामकरणकर्माणिसंक्षेपेणकार्याणि ॥ ततश्चंद्रोदयेरोहिणीयुतंचंद्रंस्थंडिलेप्रतिमायांवानाममंत्रेणसंपूज्यशंखेतोयंसमादायसपुष्प

कुशचंदनम् ॥ जानुभ्यामवनींगत्वाचंद्रायार्घ्यंनिवेदयेत् ॥ क्षीरोदार्णवसंभूतअत्रिगोत्रसमुद्भव ॥ गृहाणार्घ्यंशशांकेदंरोहिण्यासहितो
ममेति ॥ अर्घ्यम् ॥ ज्योत्स्नायाःपतयेतुभ्यंज्योतिषांपतयेनमः ॥ नमस्तेरोहिणीकांतसुधावासनमोस्तुते ॥ नमोमंडलदीपायशिरोरत्नाय
धूर्जटेः ॥ कलाभिर्वर्धमानायनमश्चंद्रायचारवे ॥ इतिप्रणमेत् ॥ अनघंवामनंशौरिंवैकुंठंपुरुषोत्तमम् ॥ वासुदेवंहृषीकेशंमाधवंमधुसूदनम् ॥
वराहंपुंडरीकाक्षंनृसिंहंदैत्यसूदनम् ॥ दामोदरंपद्मनाभंकेशवंगरुडध्वजम् ॥ गोविंदमच्युतंकृष्णमनंतमपराजितम् ॥ अधोक्षजं
जगद्बीजंसर्गस्थित्यंतकारणम् ॥ अनादिनिधनंविष्णुंत्रिलोकेशंत्रिविक्रमम् ॥ नारायणंचतुर्बाहुंशंखचक्रगदाधरम् ॥ पीतांबरधरं
नित्यंवनमालाविभूषितम् ॥ श्रीवत्सांकंजगत्सेतुंश्रीकृष्णंश्रीधरंहरिम् ॥ शरणंत्वांप्रपद्येहंसर्वकामार्थसिद्धये ॥ प्रणमामिसदादेवंवासुदेवंजग
त्पतिम् ॥ इतिमंत्रैःप्रणम्य ॥ त्राहिमांसर्वलोकेशहरेसंसारसागरात् ॥ त्राहिमांसर्वपापघ्नदुःखशोकार्णवात्प्रभो ॥ सर्वलोकेश्वरत्राहिपतितंमां
भवार्णवे ॥ देवकीनंदनश्रीशहरेसंसारसागरात् ॥ त्राहिमांसर्वदुःखघ्नरोगशोकार्णवाद्धरे ॥ दुर्वृत्तात्रायसेविष्णोयेस्मरंतिसकृत्सकृत् ॥ सोहं
देवातिदुर्वृत्तस्त्राहिमांशोकसागरात् ॥ पुष्कराक्षनिमग्नोहंमायाव्यज्ञा[1]नसागरे ॥ त्राहिमांदेवदेवेशत्वत्तोनान्योस्तिरक्षिता ॥ यद्बाल्येयच्चकौ
मारेयौवनेयच्चवार्द्धके ॥ तत्पुण्यंवृद्धिमायातुपापंहरहलायुध ॥ इतिमंत्रैःप्रार्थयेत् ॥ ततःस्तोत्रंपठन्पुराणश्रवणादिनाजागरंकुर्यात् ॥
द्वितीयेऽह्निप्रातःकालेस्नानादिनित्यकर्मकृत्वापूर्ववद्देवंपूजयित्वाब्राह्मणान्भोजयेत् ॥ तेभ्यःसुवर्णधेनुवस्त्रादिदत्वाकृष्णोमेप्रीयतामितिव

१ विज्ञानेत्यपिपाठः ।

देत् ॥ यंदेवंदेवकीदेवीवसुदेवादजीजनत् ॥ भौमस्यब्रह्मणोगुप्त्यैतस्मैब्रह्मात्मनेनमः ॥ नमस्तेवासुदेवायगोब्राह्मणहितायच ॥ शांतिरस्तु
शिवंचास्तुइत्युक्त्वामांविसर्जयेदितिप्रतिमामुद्रास्यतांब्राह्मणायदत्वापारणंकृत्वाव्रतंसमापयेत् ॥ सर्वस्मैसर्वेश्वरायसर्वेषांपतयेसर्वसंभवाय
गोविंदायनमोनमइतिपारणे ॥ भूतायभूतपतयेनमइतिसमापनेमंत्रः ॥ ॥ इतिपूजाविधिः ॥ ॥ अथकथा ॥ ॥ युधिष्ठिरउवाच ॥ जन्मा
ष्टमीव्रतंब्रूहिविस्तरेणममाच्युत ॥ कस्मिन्कालेसमुत्पन्नंकिंपुण्यंकोविधिःस्मृतः ॥ १ ॥ श्रीकृष्णउवाच ॥ मल्लयुद्धेपरावृत्तेशमितेकुकुरां
धके ॥ स्वजनैर्बंधुभिःस्त्रीभिःसमैःस्निग्धैःसमावृते ॥ २ ॥ हतेकंसासुरेदुष्टेमथुरायांयुधिष्ठिर ॥ देवकीमांपरिष्वज्यकृत्वोत्संगेरुरोदह ॥ ३ ॥
वसुदेवोपितत्रैववात्सल्यात्प्ररुरोदह ॥ समालिंग्याश्रुवदनःपुत्रपुत्रेत्युवाचह ॥ ४ ॥ सगद्गदस्वरोदीनोबाष्पपर्याकुलेक्षणः ॥ बलभद्रंचमां
चैवपरिष्वज्यमुदापुनः ॥ ५ ॥ अद्यमेसफलंजन्मजीवितंचसुजीवितम् ॥ उभाभ्यामद्यपुत्राभ्यांसमुद्भूतःसमागमः ॥ ६ ॥ एवंहर्षेणदांप
त्यंहृष्टंपुष्टंतदाह्यभूत् ॥ प्रणिपत्यजनाःसर्वेबभवुस्तेप्रहर्षिताः ॥ ७ ॥ एवंमहोत्सवंदृष्ट्वामामूचुर्मधुसूदनम् ॥ जनाऊचुः ॥ प्रसादःक्रिय
तामस्यलोकस्यार्तस्यदुःखहन् ॥ ८ ॥ यस्मिन्दिनेचप्रासूतदेवकीत्वांजनार्दन ॥ तद्दिनंदेहिवैकुंठकुर्मस्तत्रमहोत्सवम् ॥ ९ ॥
एवंस्तुतोजनौघेन मृदेवोमयेक्षितः ॥ विलोक्यबलभद्रंचमांचहृष्टतनूरुहः ॥ १० ॥ उवाचसममादेशाल्लोकाञ्जन्माष्टमीव्रतम् ॥ मथु
रायांततःपश्चात्पार्थसम्यक्प्रकाशितम् ॥ ११ ॥ कुर्वंतुब्राह्मणाःसर्वेव्रतंजन्माष्टमीदिने ॥ क्षत्रियावैश्यजातीयाःशूद्रायेऽन्येपिध
र्मिणः ॥ १२ ॥ युधिष्ठिरउवाच ॥ ॥ कीदृशंतद्व्रतंदेवदेवसर्वैरनुष्ठितम् ॥ जन्माष्टमीतिसंज्ञंचपवित्रंपापनाशनम् ॥ १३ ॥

येनत्वंतुष्टिमायासिकात्स्न्येनप्रभवाव्यय ॥ एतन्मेतत्त्वतोब्रूहिसविधानंसविस्तरम् ॥ १४ ॥ श्रीकृष्णउवाच ॥ मासिभाद्रपदेष्टम्यां निशीथेकृष्णपक्षके ॥ शशांकेवृषराशिस्थेऋक्षेरोहिणिसंज्ञके ॥ १५ ॥ योगेस्मिन्वसुदेवाद्धिदेवकीमामजीजनत् ॥ भगवत्याश्वतत्रै वक्रियतेसुमहोत्सवः ॥ १६ ॥ योगेस्मिन्कथितेष्टम्यांसिंहराशिगतेरवौ ॥ सतम्यांलघुभुक्कुर्याद्दंतधावनपूर्वकम् ॥ १७ ॥ उपवासस्यनियं मंरात्रौस्वप्याज्जितेंद्रियः ॥ केवलेनोपवासेनतस्मिञ्जन्मदिनेमम ॥ १८ ॥ सतजन्मकृतात्पापान्मुच्यतेनात्रसंशयः ॥ उपावृत्तस्यपापेभ्यो यस्तुवासोगुणैःसह ॥ १९ ॥ उपवासःसविज्ञेयःसर्वभोगविवर्जितः ॥ ततोष्टम्यांतिलैःस्नात्वानद्यादौविमलेजले ॥ २० ॥ सुदेशेशोभनंकुर्या देवक्याःसूतिकागृहम् ॥ सितपीतैस्तथारक्तैःकर्बुरैर्हरितैरपि ॥ २१ ॥ वासोभिःशोभितंकृत्वासमंतात्कलशैर्नवैः ॥ पुष्पैःफलैरनेकैश्चदीपा लिभिरितस्ततः ॥२२॥ पुष्पमालाविचित्रंचचंदनागुरुधूपितम् ॥ अतिरम्यमनौपम्यंरक्षामणिविभूषितम् ॥२३॥ हरिवंशस्यचरितंगोकुलंचवि लेखयेत् ॥ ततोवादित्रनिनदैर्वीणावेणुरवाकुलम्॥२४॥नृत्यगीतक्रमोपेतंमंगलैश्चसमंततः॥वेष्टकारींलोहखड्गंकृष्णच्छागंचयत्नतः ॥ २५॥ द्वारेविन्यस्यमुसलंरक्षितंरक्षपालकैः ॥ षष्ठ्यादेव्याधिष्ठितंचतद्गृहंचोत्सवैस्तथा ॥ २६ ॥ एवंविभवसारेणकृत्वाततसूतिकागृहम् ॥ तन्म ध्येप्रतिमास्थाप्यासाचाप्यष्टविधास्मृता ॥ २७ ॥ कांचनीराजतीताम्रीपैत्तलीमृन्मयीतथा ॥ वार्क्षीमणिमयीचैववर्णकैर्लिखितातथा ॥२८॥ सर्वलक्षणसंपूर्णापर्यंकेचाष्टशल्यके ॥ प्रतप्तकांचनाभासांमहार्हा[1]सुतपस्विनीम् ॥ २९ ॥ प्रसूतांचप्रसुतांचस्थापयेन्मंचकोपरि ॥ मांतत्रबा

१ देवकीमितिशेषः ।

लंकंसुतंपर्यंकेस्तनपायिनम् ॥३०॥ श्रीवत्सवक्षसंशांतंनीलोत्पलदलच्छविम् ॥ यशोदांतत्रचैकस्मिन्प्रदेशेसूतिकागृहे ॥३१॥ तद्वच्चकल्पये त्पार्थप्रसूतांवरकन्यकाम् ॥ तथैवममपार्श्वस्थाःकृतांजलिपुटानृप ॥ ३२ ॥ देवाग्रहास्तथानागायक्षविद्याधरामराः ॥ प्रणताःपुष्पमालाग्र चारुहस्ताःसुरासुराः ॥ ३३ ॥ संचरंतइवाकाशेप्रहारैरुदितोदितैः ॥ वसुदेवोपितत्रैवखड्गचर्मधरःस्थितः ॥ ३४ ॥ कश्यपोवसुदेवोयमदि तिश्चैवदेवकी ॥ शेषोवैबलदेवोयंयशोदादितिरन्वभूत् ॥३५॥ नंदःप्रजापतिर्दक्षोगर्गश्चापिचतुर्मुखः॥गोप्यश्चाप्सरसश्चैवगोपाश्चापिदिवौकसः ॥ ३६ ॥ एषोवतारोराजेंद्रकंसोयंकालनेमिजः॥तत्रकंसनियुक्ताश्चमोहितायोगनिद्रया॥३७॥गोधेनुकुंजराश्चैवदानवाःशस्त्रपाणयः॥नृत्यंतश्चा प्सरोभिस्तेगंधर्वागीततत्पराः ॥३८॥ लेखनीयश्चतत्रैवकालियोयमुनाह्रदे ॥ इत्येवमादियत्किंचिद्दिव्यतेचारितंमम ॥३९॥ लेखयित्वाप्रयत्ने नपूजयेद्भक्तितत्परः ॥ रम्यमेवंबीजपूरैःपुष्पमालादिशोभितम् ॥ ४० ॥ कालदेशोद्भवैःपुष्पैःफलैश्चापियुधिष्ठिर ॥ पाद्यार्घ्यैःपूजयेद्भक्त्यागं धपुष्पाक्षतैःसह॥मंत्रेणानेनकौंतेयदेवकींपूजयेन्नरः ॥४१॥ गायद्भिःकिन्नराद्यैःसततपरिवृतावेणुवीणानिनादैर्भृंगारादर्शकुंभप्रवरवृतकरैःकिंकरैः सेव्यमाना॥पर्यंकेस्वास्तृतेयामुदिततरमुखीपुत्रिणीसम्यगास्तेसादेवीदेवमाताजयतुचससुतादेवकीकांतरूपा ॥ ४२ ॥ पादावभ्यंजयंतीश्रीर्दे वक्याश्चरणांतिके ॥ निषण्णापंकजेपूज्यादिव्यगंधानुलेपनैः॥४३॥पंकजैःपूजयेद्देवींनमोदेव्यैश्रियाइति ॥ देवबवत्सेनमस्तेस्तुकृष्णोत्पादनत त्परा ॥४४॥ पापक्षयकरादेवीतुष्टियातुमयार्चिता ॥ प्रणवादिनमोंतंचपृथङ्नामानुकीर्तनम् ॥४५॥ कुर्यात्पूजाविधिज्ञश्चसर्वपापापनुत्तये ॥ देवक्यैवसुदेवायवासुदेवायचैवहि॥४६॥बलदेवायनंदाययशोदायैपृथक्पृथक् ॥ क्षीरादिस्नपनंकृत्वाचंदनेनानुलेपयेत् ॥४७॥ विध्यंतरमपी

च्छंतिकेचिदत्रैवसूरयः ॥ चंद्रोदयेशशांकायअर्घ्यंदत्वाहरिंस्मरन् ॥ ४८॥ अनघंवामनंशौरिंवैकुंठंपुरुषोत्तमम् ॥ वासुदेवंहृषीकेशंमाधवंमधु
सूदनम्॥४९॥वराहंपुंडरीकाक्षंनृसिंहंब्रह्मणःप्रियम् ॥ समस्तस्यापिजगतःसृष्टिस्थित्यंतकारकम् ॥५०॥ अनादिनिधनंविष्णुंत्रैलोक्येशंत्रिवि
क्रमम् ॥ नारायणंचतुर्बाहुंशंखचक्रगदाधरम् ॥५१॥ पीतांबरधरंनित्यंवनमालाविभूषितम् ॥ श्रीवत्सांकंजगत्सेतुंश्रीपतिंश्रीधरंहरिम् ॥५२॥
[1]योगेश्वरायदेवाययोगिनांपतयेनमः ॥ योगोद्भवायनित्यायगोविंदायनमोनमः ॥ ५३ ॥ [2]यज्ञेश्वरायदेवायतथायज्ञोद्भवायच ॥ यज्ञानांपतये
नाथगोविंदायनमोनमः॥५४॥विश्वे[3]श्वरायविश्वायतथाविश्वोद्भवायच॥विश्वस्यपतयेतुभ्यंगोविंदायनमोनमः ॥५५॥[4]जगन्नाथनमस्तुभ्यंसंसा
रभयनाशन॥जगदीशायदेवायभूतानांपतयेनमः ॥ ५६ ॥ धर्मेश्वरायधर्मायसंभवायजगत्पते ॥ धर्मज्ञायचदेवायगोविन्दायनमोनमः॥५७॥
एताभ्यांचैवमंत्राभ्यांनैवेद्यंशयनंतथा ॥ चंद्रायार्घ्यंचमंत्रेणअनेनैवाथदापयेत् ॥ ५८ ॥ क्षीरोदार्णवसंभूतआत्रिगोत्रसमुद्भव ॥ गृहाणार्घ्यंश
शांकेशरोहिण्यासहितोमम ॥ ५९ ॥ ज्योत्स्नापतेनमस्तुभ्यंज्योतिषांपतयेनमः ॥ नमस्तेरोहिणीकांतअर्घ्यंनःप्रतिगृह्यताम् ॥ ६० ॥ स्थं
डिलेस्थापयेद्देवंशशांकंरोहिणीयुतम् ॥ देवक्यावसुदेवंचनंदंचैवयशोदया॥६१॥बलदेवंमयासार्धंभक्त्यापरमयानृप ॥ संपूज्यविधिवदेहीकिंना
प्नोत्यतिदुर्लभम् ॥ ६२ ॥ एकादशीनांविंशत्यःकोटयोयाःप्रकीर्तिताः ॥ ताभिःकृष्णाष्टमीतुल्याततोनंतचतुर्दशी ॥ ६३ ॥ अर्धरात्रेवसोर्धा
रांपातयेद्गव्यसर्पिषा ॥ ततोवर्धापयेन्नालंषष्ठीनामादिकंमम ॥ ६४ ॥ कर्तव्यंतत्क्षणाद्रात्रौप्रभातेनवमीदिने ॥ यथाममतथाकार्योभगवत्याम

१ स्नानमंत्रमाह । २ धूपदीपमन्त्रावाह । ३ नैवेद्यमन्त्रमाह । ४ केचिन्मतेननैवेद्यशयनमन्त्रावाह ।

होत्सवः ॥ ६५ ॥ ब्राह्मणान्भोजयेद्भक्त्यातेभ्योदद्याच्चदक्षिणाम् ॥ हिरण्यंमेदिनींगावोवासांसिकुसुमानिच ॥ ६६ ॥ यद्यदिष्टतमंतत्तत्कृ
ष्णोमेप्रीयतामिति ॥ यंदेवंदेवकीदेवीवसुदेवादजीजनत् ॥ ६७ ॥ भौमस्यब्रह्मणोगुप्त्यैतस्मैब्रह्मात्मनेनमः ॥ नमस्तेवासुदेवायगोब्राह्मणहितायच ॥
॥ ६८ ॥ शांतिरस्तुशिवंचास्तुइत्युक्त्वामांविसर्जयेत् ॥ ततोबंधुजनौघंचदीनानाथांश्चभोजयेत् ॥ ६९ ॥ भोजयित्वासुशांतांस्तान्स्वयंभुंजीतवाग्यतः
एवंयःकुरुतेदेव्यादेवक्याःसुमहोत्सवम् ॥ ७० ॥ प्रतिवर्षंविधानेनमद्भक्तोधर्मनंदन ॥ नरोवायदिवानारीयथोक्तंलभतेफलम् ॥ ७१ ॥ पुत्रसंतानमा
रोग्यंसौभाग्यमतुलंलभेत् ॥ इहधर्मरतिर्भूत्वामृतोवैकुंठमाप्नुयात् ॥ ७२ ॥ तत्रदेवविमानेनवर्षलक्षंयुधिष्ठिर ॥ भोगान्नानाविधान्भुक्त्वापुण्यशेषा
दिहागतः ॥ ७३ ॥ सर्वकामसमृद्धेचसर्वाशुभविवर्जिते ॥ कुलेनृपतिशीलानांजायतेहृच्छयोपमः ॥ ७४ ॥ यस्मिन्सदैवदेशेतुलिखितंतुपटा
र्पितम् ॥ ममजन्मदिनंभक्त्यासर्वालंकारभूषितम् ॥ ७५ ॥ पूज्यतेपांडवश्रेष्ठजनैरुत्सवसंयुतैः ॥ परचक्रभयंतत्रनकदापिभवेत्पुनः ॥ ७६ ॥
पर्जन्यःकामवर्षीस्यादीतिभ्योनभयंभवेत् ॥ गृहेवापूज्यतेयत्रदेवक्याश्चरितंमम ॥ ७७ ॥ तत्रसर्वंसमृद्धंस्यान्नोपसर्गादिकंभवेत् ॥ पशुभ्योन
कुलाद्व्यालात्पापरोगाच्चपातकात् ॥ ७८ ॥ राजतश्चोरतोवापिनकदाचिद्भयंभवेत् ॥ संसर्गेणापियोभक्त्याव्रतंपश्येदनाकुलम् ॥ सोपिपापवि
निर्मुक्तःप्रयातिहरिमंदिरम् ॥ ७९ ॥ जन्माष्टमींजनमनोनयनाभिरामांपापापहांसपदिनंदितनंदगोपाम् ॥ योदेवकी[1]सुतयुतांचभजेद्धिभ
क्त्यापुत्रानवाप्यसमुपैतिपदंसविष्णोः ॥ ८० ॥ इतिभविष्योत्तरेजन्माष्टमीव्रतकथा ॥ ॥ अथशिष्टाचारप्राप्ताजन्माष्टमीव्रतकथा ॥

---

१ योदेवकीव्रतमिदंप्रकरोतिभक्त्येत्यपिपाठः ।

॥ व्यासउवाच ॥ निवृत्तेभारतेयुद्धेकृतशौचोयुधिष्ठिरः ॥ उवाचवाक्यंधर्मात्माकृष्णंदेवकिनंदनम् ॥ १ ॥ ॥ युधिष्ठिरउवाच ॥ त्वत्प्रसादात्तुगोविंदनिहताःशत्रवोरणे ॥ कर्णश्चनिहतःसैन्येत्वत्प्रसादात्किरीटिना ॥ २ ॥ जेताकोयुधिभीष्मस्ययस्यमृत्युर्नविद्यते ॥ अजेयोपिजितःसोपित्वत्प्रसादाज्जनार्दन ॥ ३ ॥ प्राप्तंनिष्कंटकंराज्यंकृत्वाकर्मसुदुष्करम् ॥ आचारोदंडनीतिश्चराजधर्माःक्रियान्विताः ॥ ४ ॥ अधुनाश्रोतुमिच्छामिशुभंजन्माष्टमीव्रतम् ॥ जन्माष्टमीव्रतंब्रूहिविस्तरेणममाच्युत ॥ ५ ॥ कुतःकालेसमुत्पन्नंकिंपुण्यंकोविधिःस्मृतः ॥ श्रीकृष्णउवाच ॥ शृणुराजन्प्रवक्ष्यामिव्रतानामुत्तमंव्रतम् ॥ ६ ॥ यतःप्रभृतिविख्यातंफलेनविधिनान्वितम् ॥ राजवंशसमुत्पन्नैर्दैत्यानीकैःसुपीडिता ॥ ७ ॥ धराभारसमाक्रांताब्रह्माणंशरणंययौ ॥ ज्ञात्वातदाप्रभुर्ब्रह्माभूमेर्भारंसमाहितः ॥ ८ ॥ श्वेतद्वीपंसमागत्यसर्वदेवसमन्वितः ॥ समाहितमतिर्ब्रह्मामांतुष्टावविशांपते ॥ ९ ॥ स्तुत्यातयाहंसंप्रीतस्तेषांदृग्गोचरोऽभवम् ॥ दृष्ट्वामांप्रणिपत्याशुभक्तिभावसमन्विताः ॥ १० ॥ ब्रह्माणमग्रतःकृत्वातुष्टाःसर्वेदिवौकसः ॥ विजिज्ञपुर्महाराजभूमिभारापनुत्तये ॥ ११ ॥ उपधार्यतदातेषांवचनंचान्वचिंतयम् ॥ केनोपायेनहंतव्यादानवाः क्षत्रियोद्भवाः ॥ १२ ॥ स्वधर्मनिरताःसर्वेमहाबलपराक्रमाः ॥ ततोनिश्चित्यमनसाब्रह्माणमहमब्रुवम् ॥ ॥ १३ ॥ वसुदेवोदेवकीचप्रजाकामौपुरानृप ॥ भक्त्यामांभजमानौतौतत्रवंतौमहत्तपः ॥ १४ ॥ तयोःप्रसन्नःसुप्रीतोयाचतंवरमुत्तमम् ॥ अब्रुवंतावपिततोवरमायासतुःकिल ॥ १५ ॥ यदिदेवप्रसन्नोसित्वादृशोनौभवेत्सुतः ॥ तथेतिचमयाताभ्यामुक्तंप्रीतेनचेत

१ प्राप्ताइतिशेषः ।  २ सार्वविभक्तिकस्तसिःकस्मिन्कालेइत्यर्थः ।

सा ॥ १६ ॥ तत्कामपूरणार्थायसंभविष्याम्यहंतयोः ॥ दिवौकसोपिस्वांशेनसंभवंतुसुरस्त्रियः ॥ १७ ॥ योगमायाचनंदस्ययशोदायांभवि
ष्यति ॥ देवक्याजठरेगर्भमनंतंधाममामकम् ॥ १८ ॥ सन्निकृष्यचसातर्णरोहिण्याजठरंनयेत् ॥ इतिसंदिश्यतान्सर्वानहमंतर्हितोभवम् ॥
॥ १९ ॥ ततोदेवैःसमंब्रह्मातांदिशंप्रणिपत्यच ॥ आश्वास्यचमहींदेवींवरधाम्निजगामह ॥ २० ॥ ततोहंदेवकीगर्भमविशंस्वेनतेजसा ॥ हतेषुष
ट्सुबालेषुदेवक्याऔग्रसेनिना ॥ कारागृहस्थितायाश्चवसुदेवेनवैसह ॥ २१ ॥ गतेर्धरात्रसमयेसुप्तेसर्वजनेनिशि ॥ भाद्रेमास्यसितेपक्षेऽष्ट
म्यांब्रह्मर्क्षसंयुजि ॥ २१ ॥ सर्वग्रहशुभेकालेप्रसन्नहृदयाशये ॥ आविरासंनिजेनैवरूपेणह्यवनीपते ॥ २३ ॥ वसुदेवोपिमांदृष्ट्वाहर्षशोकसम
न्वितः ॥ भीतःकंसादतितरांतुष्टावचकृतांजलिः ॥ २४ ॥ पुनःपुनः प्रणम्याथप्रार्थयामाससादरम् ॥ वसुदेवउवाच ॥ अलौकिकमिदंरूपं
दुर्दर्शयोगिनामपि ॥ २५ ॥ यत्तेजसारिष्टगृहमभवत्संप्रकाशितम् ॥ उद्विजेभगवन्कंसाद्योमेबालानघातयत् ॥ २६ ॥ उपसंहरतस्माच्चएत
द्रूपमलौकिकम् ॥ शंखचक्रगदापद्मलसत्कौस्तुभमालिनम् ॥ २७ ॥ किरीटहारमुकुटकेयूरवलयांकितम् ॥ तडिद्वसनसंवीतंक्कणत्कांचन
मेखलम् ॥ २८ ॥ स्फुरद्राजीवताम्राक्षंस्निग्धांजनसमप्रभम् ॥ महामरकतस्वच्छंकोटिसूर्यसमप्रभम् ॥ २९ ॥ कृष्णउवाच ॥
एवंसंप्रार्थितोराजन्वसुदेवेनवैतदा ॥ तेनैवनिजरूपेणभूत्वाहंप्राकृतःशिशुः ॥ ३० ॥ नयमांगोकुलमितिवसुदेवमचोदयम् ॥ समादा
यागमत्सोपिनंदगोकुलमंजसा ॥ ३१ ॥ द्वाराण्यपाकृतान्यासन्मत्प्रभावात्स्वयंप्रभो ॥ ददौमार्गंचकालिंदीजलकल्लोलमालिनी ॥

॥ ३२ ॥ ततोयशोदाशयनेन्यस्यमां[1]ऽऽनकदुंदुभिः ॥ तत्पयकेस्थितांगृह्यदारिकामगमत्पुनः ॥ ३३ ॥ द्वाराणिपिहितान्यासन्पूर्ववन्निगडंततः ॥ विन्यस्यपादयोरास्तेशयनेन्यस्यदारिकाम् ॥ ३४ ॥ ततोरुरोदमहतास्वरेणापूर्यसादिशः ॥ तस्यारुदितशब्देनउत्थितारे[2]क्षकागृहात् ॥ ३५ ॥ कंसायागत्यचाचख्युःप्रसूतादेवकीतिच ॥ सोपितल्पात्समुत्थायभयेनातीवविह्वलः ॥ ३६ ॥ जगामसूतिकागेहंदेवक्याःप्रस्खलन्पथि ॥ दारिकांशयनाद्गृह्यरुदत्याश्चैवस्वस्वसुः ॥ ३७ ॥ अपोथयच्छिलापृष्ठेसापितस्यकराच्च्युता ॥ उवाचकंसमाभाष्यदेवीह्याकाशगासती ॥ ३८ ॥ किंमयाहतयामंदजातःकुत्रापितेरिपुः ॥ इत्युक्तःसोप्यभूत्कंसःपरमोद्विग्नमानसः ॥ ३९ ॥ आज्ञापयामासततोबालानांकदनायवै ॥ दानवाअपिबालानांकदनंचक्रुरुद्यताः ॥ ४० ॥ वनेषूपवनेचैवपुरग्रामव्रजेष्वपि ॥ अहंचगोकुलेस्थित्वापूतनांबालघातिनीम् ॥ ४१ ॥ स्तनंदातुंप्रवृत्तांचप्राणैःसममशोषयम् ॥ तृणावर्तबकारिष्टान्धेनुकंकेशिनंतथा ॥ ४२ ॥ अन्यानपिखलान्हत्वास्वप्रभावमदर्शयम् ॥ ततश्चमथुरांगत्वाहत्वाकंसादिदानवान् ॥ ४३ ॥ ज्ञातीनांपरमंहर्षंकृतवानस्मिसादरम् ॥ देवकीवसुदेवौचपरिष्वज्यमुदामम[3] ॥ ४४ ॥ आनंदजैर्जलैर्मूर्ध्निसेचयामासतुर्नृप ॥ तस्मिन्रंगवरेमल्लान्हत्वाचाणूरमुख्यकान् ॥ ४५ ॥ गजंकुवलयापीडंकंसभ्रातॄननेकशः[4] ॥ एवंहतेऽसुरेकंसेसर्वलोकैककंटके ॥ ४६ ॥ अन्येषुदुष्टदैत्येषुसर्वलोकाभयंकरम् ॥ लोकाःसमुत्सुकाःसर्वेमांसमेत्योचुरादृताः ॥ ४७ ॥ कृष्णकृष्णमहायोगिन्भक्तानामभयप्रद ॥ प्रलयात्पाहिनोदेवशरणागतवत्सल ॥ ४८ ॥ अनाथनाथ

---

१ माइतिमाम् । २ यामिकाइतिप्रचुरःपाठः । ३ मममूर्ध्नीत्यन्वयः । ४ हत्वाअतिष्ठमितिशेषः ।

सर्वज्ञसर्वभूतहितेरत ॥ किंचिद्विज्ञाप्यतेऽस्माभिस्तन्नोवक्तुंत्वमर्हसि ॥ ४९ ॥ तवजन्मदिनंलोकेनज्ञातंकेनचित्क्वचित् ॥ ज्ञात्वाचतत्त्वतः
सर्वेकुर्मोवर्धापनोत्सवम् ॥ ५० ॥ तेषांदृष्ट्वातुतांभक्तिंश्रद्धामपिचसौहृदम् ॥ मयाजन्मदिनंतेभ्यःख्यातंनिर्मलचेतसा ॥ ५१ ॥ श्रुत्वातेपि
तथाचक्रुर्विधिनायेनतच्छृणु ॥ पार्थतद्दिवसेप्राप्तेदंतधावनपूर्वकम् ॥ ५२ ॥ स्नात्वापुण्यजलेशुद्धेवाससीपरिधायच ॥ निर्वर्त्यावश्यकंकर्म
व्रतसंकल्पमाचरेत् ॥ ५३ ॥ अद्यस्थित्वानिराहारःश्वोभूतेतुपरेऽहनि ॥ भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाव्यय ॥ ५४ ॥ गृहीत्वानियमं
चैवसंपाद्यार्चनसाधनम् ॥ मंडपंशोभनंकृत्वाफलपुष्पादिभिर्युतम् ॥ ५५ ॥ तस्मिन्मांपूजयेद्भक्त्यागंधपुष्पादिभिःक्रमात् ॥ उपचारैः
षोडशभिर्द्वादशाक्षरविद्यया ॥ ५६ ॥ सद्यःप्रसूतांजननींवसुदेवंचमारिष ॥ बलदेवसमायुक्तांरोहिणींगुणशोभिनीम् ॥ ५७ ॥ नंदंयशोदांगो
पीश्चगोपान्गाश्चैवसर्वशः ॥ गोकुलंयमुनांचैवयोगमायांचदारिकाम् ॥ ५८ ॥ यशोदाशयनेसुप्तांसद्योजातांवरप्रभाम् ॥ एवंसंपूजयेत्सम्य
ङ्नाममंत्रैःपृथक्पृथक् ॥ ५९ ॥ सुवर्णरौप्यताम्रारमृदादिभिरलंकृताः ॥ काष्ठपाषाणरचिताश्चित्रमय्योथलेखिताः ॥ ६० ॥ प्रतिमाविविधाः
प्रोक्तास्तासुचान्यतमांयजेत् ॥ रात्रौजागरणंकुर्याद्गीतनृत्यादिभिःसह ॥ ६१ ॥ पुराणैःस्तोत्रपाठैश्चजातनामादिसूत्सवैः ॥ श्वोभूतेपारणं
कुर्याद्द्विजान्संभोज्ययत्नतः ॥ ६२ ॥ एवंकृतेमहाराजव्रतानामुत्तमेव्रते ॥ सर्वान्कामानवाप्नोतिविष्णुलोकेमहीयते ॥ ६३ ॥ मोहान्नकुरुते
यस्तुयातिसंसारगह्वरे ॥ तस्मात्कुर्वन्प्रयत्नेननिष्पापोजायतेनरः ॥ ६४ ॥ अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ अंगदेशोद्भवोराजामित्र

१ तद्दिनमित्यपिपाठः ।

जिन्नामनामतः ॥ ६५ ॥ तस्यपुत्रोमहातेजाःसत्यजित्सत्पथेस्थितः ॥ पालयामासधर्मज्ञोविधिवद्रंजयन्प्रजाः ॥ ६६ ॥ तस्यैवंवर्तमानस्यकदाचिद्दैवयोगतः ॥ पाखंडैःसहसंवासोबभूवबहुवासरम् ॥ ६७ ॥ तत्संसर्गात्सनृपतिरधर्मेनिरतोभवत् ॥ वेदशास्त्रपुराणानिर्विनिंद्यबहुशोनृप ॥ ६८ ॥ ब्राह्मणेषुतथाधर्मेविद्वेषंपरमंगतः ॥ एवंबहुतिथेकालेगतेभरतसत्तम ॥ ६९ ॥ कालेननिधनंप्राप्तोयमदूतवशंगतः ॥ बद्धापाशैर्नीयमानोयमदूतैर्यमांतिकम् ॥ ७० ॥ पीडितस्ताड्यमानोसौदुष्टसंगवशंगतः ॥ नरकेपतितःपापोयातनांबहुवत्सरम् ॥ ७१ ॥ भुक्त्वापापस्यशेषेणपैशाचींयोनिमास्थितः ॥ तृषाक्षुधासमाक्रांतोभ्रमन्समरुधन्वसु ॥ ७२ ॥ कस्यचित्त्वथवैश्यस्यदेहमाविश्यसंस्थितः ॥ सहतेनैवसंप्राप्तोमथुरांपुण्यदांपुरीम् ॥ ७३ ॥ तत्रत्यैरक्षकैःसोथतद्देहात्तुबहिष्कृतः ॥ बभ्रामविपिनेसोपिऋषीणामाश्रमेष्वपि ॥ ७४ ॥ कदाचिद्दैवयोगेनममजन्माष्टमीदिने ॥ क्रियमाणांमहापूजांव्रतिभिर्मुनिभिर्द्विजैः ॥ ७५ ॥ रात्रौजागरणंचैवनामसंकीर्तनादिभिः ॥ ददर्शसर्वंविधिवच्छुश्रावचहरेःकथाः ॥ ७६ ॥ निष्पापस्तत्क्षणादेवशुद्धनिर्मलमानसः ॥ प्रेतदेहंसमुत्सृज्यविष्णुलोकंविमानतः ॥ ७७ ॥ ममदूतैःसमानीतोदिव्यभोगसमन्वितः ॥ ममसान्निध्यमापन्नोव्रतस्यास्यप्रभावतः ॥ ७८ ॥ नित्यमेवव्रतंचैतत्पुराणेसार्वकालिकम् ॥ गीयतेविधिवत्सम्यङ्मुनिभिस्तत्त्वदर्शिभिः ॥ ७९ ॥ सार्वकालिकमेवैतत्कृत्वाकामानवाप्नुयात् ॥ एतत्तेसर्वमाख्यातंव्रतानामुत्तमंव्रतम् ॥ समसान्निध्यंकृद्राजन्किंभूयःश्रोतुमिच्छसि ॥ ८० ॥ इतिभविष्येजन्माष्टमीव्रतकथा ॥ अथोद्यापनम् ॥ युधि

१ महासेनइत्यपिपाठः ।

ष्ठिरउवाच ॥ उद्यापनविधिंब्रूहिसर्वदेवदयानिधे ॥ येनसंपूर्णतांयातिव्रतमेतदनुत्तमम् ॥ श्रीकृष्णउवाच ॥ पूर्णांतिथिमनुप्राप्यवित्ताचित्ता
दिसंयुतः ॥ पूर्वेद्युरेकभक्ताशीस्वपेन्मांसंस्मरन्हृदि ॥ प्रातरुत्थायसंस्मृत्यपुण्यश्लोकान्समाहितः ॥ निर्वर्त्यावश्यकंकर्मब्राह्मणान्स्वस्ति
वाचयेत् ॥ गुरुमानीयधर्मज्ञंवेदवेदांगपारगम् ॥ वृणुयादृत्विजश्चैववस्त्रालंकरणादिभिः ॥ पलेनवातदर्धेनतदर्धार्धेनवापुनः ॥ शक्त्यावापि
नृपश्रेष्ठवित्तशाठ्यविवर्जितः ॥ सौवर्णींप्रतिमांकुर्यात्पाद्यार्घ्याचमनीयकम् ॥ पात्रंसंपाद्यविधिवत्पूजोपकरणंतथा ॥ गोचर्ममात्रंसंलिप्यम
ध्येमंडलमाचरेत् ॥ ब्रह्माद्यादेवतास्तत्रस्थापयित्वाप्रपूजयेत् ॥ मंडपंरचयेत्तत्रकदलीस्तंभमंडितम् ॥ चतुर्द्वारसमोपेतंफलपुष्पादिशो
भितम् ॥ वितानंतत्रबध्नीयाद्विचित्रंचैवशोभनम् ॥ मंडलेस्थापयेत्कुंभंताम्रंवामृन्मयंशुचिम् ॥ तस्योपरिन्यसेत्पात्रंराजतंवैष्णवंतुवा ॥
वाससाच्छाद्यकौंतेयपूजयेत्तत्रमांबुधः ॥ उपचारैःषोडशभिर्मंत्रैरेतैःसमाहितः ॥ ध्यात्वावाह्यामृतीकृत्यस्वागतादिभिरादरात् ॥ ध्यायेच्चतुर्भु
जंदेवंशंखचक्रगदाधरम्॥पीतांबरयुगोपेतंलक्ष्मीयुक्तंविभूषितम् ॥ लसत्कौस्तुभशोभाढ्यंमेघश्यामंसुलोचनम्॥ध्यानम्॥ आगच्छदेवदेवेशज
गद्योनेरमापते॥शुद्धेह्यस्मिन्नधिष्ठानेसंनिधेहिकृपांकुरु॥आवाह०॥देवदेवजगन्नाथगरुडासनसंस्थित॥ गृहाणचासनंदिव्यंजगद्धातर्नमोस्तुते ॥
आसनम् ॥ नानातीर्थाहृतंतोयंनिर्मलंपुष्पमिश्रितम् ॥ पाद्यंगृहाणदेवेशविश्वरूपनमोस्तुते॥पाद्यम् ॥ गंगादिसर्वतीर्थेभ्योभक्त्यानीतंसुशीत
लम् ॥ गंधपुष्पाक्षतोपेतंगृहाणार्घ्यंनमोस्तुते ॥ अर्घ्यम् ॥ कृष्णावेणीसमुद्भूतंकालिंदीजलसंयुतम् ॥ गृहाणाचमनंदेवविश्वकायनमोस्तुते ॥
आचमनम् ॥ दधिक्षौद्रंघृतंशुद्धंकपिलायाःसुगंधियत् ॥ सुस्वादुमधुरंशौरेमधुपर्कंगृहाण मे ॥ मधुपर्कम् ॥ पुनराचमनम् ॥ पंचामृतेन

स्नपनंकरिष्यामिसुरोत्तम ॥ क्षीरोदधिनिवासायलक्ष्मीकांतायतेनमः ॥ पंचामृत० ॥ मंदाकिनीगौतमीचयमुनाचसरस्वती ॥ ताभ्यःस्नानार्थमानीतंगृहाणशिशिरंजलम्॥ स्नानम् ॥ पुनराचनम ॥ शुद्धजांबूनदप्रख्येतडिद्भासुररोचिषी ॥ मयोपपादितेतुभ्यंवाससीप्रतिगृह्यताम् ॥ वस्त्रयुग्मम् ॥ यज्ञोपवीतमितियज्ञोपवीतम् ॥ किरीटकुंडलादीनिकांचीवलययुग्मकम् ॥ कौस्तुभंवनमालांचभूषणानिभजस्वमे ॥ भूषणानि ॥ मलयाचलसंभूतंघनसारंमनोहरम् ॥ हृदयानंदनंचारुचंदनंप्रतिगृह्यताम् ॥ चंदनम् ॥ अक्षताश्चसुरश्रेष्ठेतिकुंकुमाक्षतान् ॥ मालतीचंपकादीनियूथिकाबकुलानिच ॥ तुलसीपत्रमिश्राणिगृहाणसुरसत्तम ॥ पुष्पाणि ॥ अथांगपूजा ॥ अघनाशनाय० पादौपू० वामनाय० गुल्फौ० शौरये० जंघेपू० वैकुंठवासिने० ऊरूपू० पुरुषोत्तमाय० मेढ्रंपू० वासुदेवाय० कटींपू० हृषीकेशाय० नाभिंपू० माधवाय० हृदयंपू० मधुसूदनाय० कंठंपू० वराहाय० बाहूपू० नृसिंहाय० हस्तौपू० दैत्यसूदनाय० मुखंपू० दामोदराय० नासिकांपू० पुंडरीकाक्षाय० नेत्रेपू० गरुडध्वजाय० श्रोत्रेपू० गोविंदाय० ललाटंपू० अच्युताय० शिरःपू० कृष्णाय० सर्वांगंपू० ॥ अथपरिवारदेवतापूजा ॥ देवकींवसुदेवंचरोहिणींसबलांतथा ॥ सात्यकिंचोद्धवाक्रूरावुग्रसेनादियादवान् ॥ नंदंयशोदांतत्कालप्रसूतांगोपगोपिकाः ॥ कालिंदींकालियंचैवपूजयन्नाममंत्रतः ॥ वनस्पतिरसोद्भूतंकालागुरुसमन्वितम् ॥ धूपंगृहाणगोविंदगुणसागरगोपते ॥ धूपम् ॥ साज्यंचवर्तिसंयुक्तम्० ॥ दीपम् ॥ शाल्योदनंपायसंचसिताघृतविमिश्रितम् ॥ नानापक्वान्नसंयुक्तंनैवेद्यंप्रतिगृह्यताम् ॥ नैवेद्यम् ॥ उत्तरापोशनम् ॥ इदंफलमितिफलम् ॥ पूगीफलमितितांबूलम् ॥ हिरण्यगर्भेतिदक्षिणाम्॥नीराजयेत्ततोभक्त्यामंगलंसमुदीरयन्॥जयमंगलनिर्घोषैर्देवदेवंसमर्चयेत् ॥ नीराजनम् ॥दत्वा

पुष्पांजलिंचैवप्रदक्षिणपुरःसरम् ॥ प्रणमेदंडवद्भूमौभाक्तिप्रह्वःपुनःपुनः ॥ स्तुत्वानानाविधैःस्तोत्रैःप्रार्थयेतजगत्पतिम् ॥ नमस्तुभ्यंजगन्नाथ देवकीतनयप्रभो ॥ वसुदेवात्मजानंतयशोदानन्दवर्द्धन ॥ गोविंदगोकुलाधारगोपीकांतनमोस्तुते ॥ ततस्तुदापयेदर्घ्यमिंदोरुदयतःशुचिः ॥ कृष्णायप्रथमंदद्यादेवकीसहितायच ॥ नालिकेरेणशुद्धेनयुक्तमर्घ्यंविचक्षणः ॥ कृष्णायपरयाभक्त्याशंखेकृत्वाविधानतः ॥ जातःकंसवधार्थायभूभारोत्तारणायच ॥ कौरवाणांविनाशायदैत्यानांनिधनायच ॥ पांडवानांहितार्थायधर्मसंस्थापनायच ॥ गृहाणार्घ्यंमयादत्तंदेवकीसहितोहरे ॥ कृष्णार्घ्यमन्त्रः ॥ शंखेकृत्वाततस्तोयंसपुष्पफलचन्दनम् ॥ जानुभ्यामवनिंगत्वाचंद्रायार्घ्यंनिवेदयेत् ॥ क्षीरोदार्णवसंभूतअत्रिगोत्रसमुद्भव ॥ गृहाणार्घ्यंमयादत्तंरोहिण्यासहितःप्रभो ॥ ज्योत्स्नापतेनमस्तुभ्यंनमस्तेज्योतिषांपते ॥ नमस्तेरोहिणीकांतगृहाणार्घ्यंनमोस्तुते ॥ चंद्रार्घ्यमंत्रः ॥ इत्थंसंपूज्यदेवेशंरात्रौजागरणंचरेत् ॥ गीतनृत्यादिनाचैवपुराणश्रवणादिभिः ॥ प्रत्यूषेविमलेस्नात्वापूजयित्वाजगद्गुरुम् ॥ पायसेनतिलाज्यैश्चमूलमंत्रेणभक्तितः ॥ अष्टोत्तरशतंहुत्वाततःपुरुषसूक्ततः ॥ इदंविष्णुरितिप्रोक्ताजुहुयाद्वैघृताहुतीः ॥ होमशेषंसमाप्याथपूर्णाहुतिपुरःसरम् ॥ आचार्यंपूजयेद्भक्त्याभूषणाच्छादनादिभिः ॥ गामेकांकपिलांदद्याद्व्रतसंपूर्तिहेतवे ॥ पयस्विनींसुशीलांचसवत्सांसगुणांतथा ॥ स्वर्णशृंगींरौप्यखुरांकांस्यदोहनिकायुताम् ॥ रत्नपुच्छांताम्रपृष्ठींस्वर्णघंटासमन्विताम् ॥ वस्त्रच्छन्नांदक्षिणाढ्यामेवंसंपूर्णतांव्रजेत् ॥ कपिलायाअभावेतुगौरन्यापिप्रदीयते ॥ ततोदद्याच्चऋत्विग्भ्योऽन्येभ्यश्चैवयथाविधि ॥ शय्यांसोपस्करांदद्याद्व्रतसंपूर्तिहेतवे ॥ ब्राह्मणान्भोजयेत्पश्चाद्दद्यात्तेभ्यश्चदक्षिणाम् ॥ कलशानन्नसंपूर्णान्दद्याच्चैवसमाहितः ॥ दीनांधकृपणांश्चैवयथार्हंप्रतिपूजयेत् ॥

प्राप्यानुज्ञांतथातेभ्योभुंजीतसहबंधुभिः ॥ एवंकृतेमहाराजव्रतोद्यापनकर्मणि ॥ निष्पापस्तत्क्षणादेवजायतेविबुधोपमः ॥ पुत्रपौत्रसमायुक्तोधनधान्यसमन्वितः ॥ भुक्त्वाभोगांश्चिरंकालमंतेममपुरंव्रजेत् ॥ ॥ इतिश्रीभविष्यपुराणेकृष्णयुधिष्ठिरसंवादेजन्माष्टमीव्रतोद्यापनं संपूर्णम् ॥ अथभाद्रशुक्लाष्टम्यांज्येष्ठर्क्षेज्येष्ठाव्रतमुक्तंकालादर्शे ॥ भाद्रेशुक्लाष्टमीज्येष्ठानक्षत्रेणसमन्विता ॥ महतीकीर्तितातस्यांज्येष्ठादेवीं प्रपूजयेत् ॥ उपहारैर्बहुविधैरलक्ष्मीविनिवृत्तये ॥ लिंगपुराणेपि ॥ कन्यास्थार्काष्टमीशुक्लाज्येष्ठांतत्रप्रपूजयेदिति ॥ अत्रकन्यास्थार्कोक्तिः प्राशस्त्यार्था ॥ इदंचज्येष्ठायोगवशेनपूर्वविद्धायांपरविद्धायांवाकार्यम् ॥ मासिभाद्रपदेशुक्लेपक्षेज्येष्ठर्क्षसंयुते ॥ यस्मिन्कस्मिन्दिनेवापिज्येष्ठादेवींप्रपूजयेदितिमाधवीयेस्कांदोक्तेः ॥ दिनद्वयेनक्षत्रयोगेतुपरदिनेमध्याह्नादूर्ध्वंनक्षत्रसत्त्वेपराग्राह्या ॥ अन्यथारात्रावपिनक्षत्रयोगेपूर्वैव ॥ यस्मिन्दिनेभवेज्ज्येष्ठामध्याह्नादूर्ध्वमप्यणुः ॥ तस्मिन्हविष्यंपूजाचन्यूनाचेत्पूर्ववासरे ॥ नवमीसहिताकार्याअष्टमीनात्रसंशयः ॥ मासिभाद्रपदेशुक्लेपक्षेज्येष्ठर्क्षसंयुता ॥ रात्रिर्यस्मिन्दिनेकुर्याज्ज्येष्ठायाः परिपूजनमितिस्कांदात् ॥ दिनद्वयेज्येष्ठायोगाभावेत्वष्टम्यामेवेदंकार्यंनतुतद्युक्ततिथ्यंतरेपि ॥ प्रत्याब्दिकंतिथावुक्तंयज्ज्येष्ठादैवतंव्रतम् ॥ प्रतिज्येष्ठाव्रतंयच्चविहितंकेवलोडुनि ॥ तिथावेवाचरेदाद्यंद्वितीयं केवलर्क्षतइतिमात्स्यवचनात् ॥ मदनरत्नेभविष्येतुनक्षत्रमात्रेउक्तम् ॥ मासिभाद्रपदेपक्षेशुक्लेज्येष्ठायदाभवेत् ॥ रात्रौजागरणं कुर्यादेभिर्मंत्रैश्चपूजयेदिति ॥ दाक्षिणात्यास्त्वृक्षएवकुर्वंति ॥ एवंनिर्णीतपूजादिनात्पूर्वदिनेऽनुराधायामावाहनमुत्तरदिनेपूजनंमूले

१ इदमर्धं सामान्यम् ।

विसर्जनंकार्यम् ॥ तथाचस्कांदे ॥ मैत्रेणावाहयेद्देवींज्येष्ठायांतुप्रपूजयेत् ॥ मूलेविसर्जयेद्देवींत्रिदिनंव्रतमुत्तमम् ॥ अथपूजा ॥
तिथ्यादिसंकीर्त्यममामृतवंध्यात्वादिदोषपरिहारार्थंपुत्रप्रपौत्रादिवृद्ध्येदरिद्रनाशार्थंचयथामिलितोपचारैर्ज्येष्ठापूजनमहंकरिष्ये ॥ त्रिलो
चनांशुक्लदंतींबिभ्रतींकांचनींतनुम् ॥ विरक्तांरक्तनयनांज्येष्ठांध्यायामिसुंदरीम् ॥ ध्यानम् ॥ एह्येहित्वंमहाभागेसुरासुरनमस्कृते ॥
ज्येष्ठात्वंसर्वदेवानांमत्समीपंगताभव ॥ आवाह० ॥ श्वेतसिंहासनस्थातुश्वेतवस्त्रैरलंकृता ॥ वरदंपुस्तकंपाशंबिभ्रत्यैतेनमोनमः ॥ आसनम् ॥
ज्येष्ठेश्रेष्ठेतपोनिष्ठेधर्मिष्ठेसत्यवादिनि ॥ समुद्रमथनोत्पन्नेपाद्यंगृह्णनमोस्तुते ॥ पाद्यम् ॥ श्रीखंडकर्पूरयुतंतोयंपुष्पेणसंयुतम् ॥
गृहाणार्घ्यंमयादत्तंज्येष्ठादेविनमोस्तुते ॥ अर्घ्यम् ॥ ज्येष्ठायैतेनमस्तुभ्यंश्रेष्ठायैतेनमोनमः ॥ ज्येष्ठेश्रेष्ठेतपोनिष्ठेब्रह्मिष्ठेसत्यवादिनि ॥
आचम० ॥ पयोदधिघृतंचैवक्षौद्रंशर्करयान्वितम् ॥ पंचामृतंमयानीतंस्नानार्थंदेविगृह्यताम् ॥ पंचामृ० ॥ मंदाकिन्याःसमानीतंहेमां
भोरुहवासितम् ॥ स्नानार्थंतेमयादत्तंतोयंस्नाहिजगन्मये ॥ स्नानम् ॥ सक्ष्मतंतुभवेश्वेतेधौतेनिर्मलवारिणा ॥ वारणेलोकलज्जायावा
ससीप्रतिगृह्यताम् ॥ वस्त्रयुग्मम् ॥ आचम० हरिद्राकुंकुमंचैवकंठसूत्रंचताडकम् ॥ सिंदूरंकज्जलंदेविषट्सौभाग्यानिगृह्णभोः ॥
सौभाग्यद्रव्याणि ॥ श्रीखंडंचंदनम् ॥ चंदनम् ॥ अक्षताश्चसुर० ॥ अक्षतान् ॥ नूपुरैर्मेखलाकांचीकंकणानिसुशोभने ॥ नासिकायांमया
दत्तमुक्ताकांचनसंयुता ॥ अलंकारान् ॥ माल्यादीनिसुगंधीनि० ॥ पुष्पाणि ॥ वनस्पतिरसो० ॥ धूपम् ॥ साज्यंचेतिदीपम् ॥ गोधूमपि

ष्टशाल्यादितंडुलानांचकारिताः॥स्वाद्यःप्रसृतिमात्रास्तुपूरिकाघृतपाचिताः॥शाल्योदनंसूपयुक्तंदधिदुग्धंघृतंतथा ॥ नानाव्यंजनसंयुक्तंनैवेद्यं प्रतिगृह्यताम् ॥ नैवेद्यम्॥ उत्तरापो० ॥ करोद्वर्तनम् ॥ फलम् ॥ हिरण्यगर्भेतिदक्षिणाम् ॥ नीराजनम् ॥ प्रदक्षिणाम् ॥ नमस्कारान् ॥ शार्ङ्ग बाणाब्जखड्गारिप्रासतोमरमुद्गरैः ॥ अन्यैरप्यायुधैर्युक्तांज्येष्ठेत्वामर्चयाम्यहम् ॥ पुष्पांजलिम् ॥ त्वंलक्ष्मीस्त्वंमहादेवीत्वंज्येष्ठेसर्वदामरैः ॥ पूजितासिमयादेविवरदाभवमेसदा ॥ प्रार्थनाम् ॥ इतिपूजाविधिः ॥ अथभविष्योक्तव्रतविधिः ॥ युधिष्ठिरउवाच ॥ मृतवंध्यातुयानारी काकवंध्यातथापरा ॥ गर्भस्रवातृतीयाचनानादोषैस्तुदूषिता ॥ निर्धनाश्चनरायेवैदारिद्र्येणहताश्चये ॥ कर्मणाकेनमुच्यंतेतन्मेब्रूहिजनार्दन॥ ॥ श्रीकृष्णउवाच ॥ मासिभाद्रपदेशुक्लेपक्षेज्येष्ठायदाभवेत्॥रात्रौजागरणंकुर्याद्गीतवादित्रनिःस्वनैः॥एवंविधविधानेनएभिर्मंत्रैश्चपूजयेत् ॥एह्येहित्वंमहाभागेसुरासुरनमस्कृते॥ज्येष्ठात्वंसर्वदेवानांमत्समीपंगताभव ॥ श्वेतसिंहासनस्थातुश्वेतवस्त्रैरलंकृता ॥ वरं[2]दंपुस्तकंपाशंबिभ्रत्यैतेनमोनमः ॥ ज्येष्ठेश्रेष्ठेतपोनिष्ठेधर्मिष्ठेसत्यवादिनि॥समुद्रमथनोत्पन्नेज्येष्ठायैतेनमोनमः ॥ शार्ङ्गबाणाब्जखड्गारिप्रासतोमरमुद्गरैः ॥ अन्यैरप्यायुधैर्युक्तांज्येष्ठेत्वामर्चयाम्यहम् ॥ सुरासुरनरैर्विद्यायक्षकिंनरपूजिता ॥ पूजितासिमयादेविज्येष्ठेत्वामर्चयाम्यहम् ॥ विप्रप्रियेमहामायेसुरासुरसुपूजिते ॥ स्थूलसूक्ष्ममयेदेविज्येष्ठेत्वामर्चयाम्यहम् ॥ त्वंलक्ष्मीस्त्वमुमादेवीत्वंज्येष्ठेसर्वदामरैः ॥ पूजितासिमयादेविवरदाभवमेसदा ॥ पुत्रदारविवृद्ध्यर्थंलक्ष्म्याश्चैवविवृद्धये ॥ अलक्ष्म्याश्चविनाशायसर्वकालंभजेतताम् ॥ गुरुंसंपूजयेद्भक्त्यावस्त्राभरणादिभिः ॥ ततोद्वादशवर्षा

१ तंडुलशब्देनतत्पिष्टम् । २ अभयस्याप्युपलक्षणम् ।

णिपूजनीयाप्रयत्नतः॥यावज्जन्माथवापूर्वविधिनानेनमानवैः॥ददातिवित्तंपुत्रांश्च अर्चनीयासदास्त्रिया ॥अनेनविधिनायुक्तोयोहिपूजयतेनरः ॥
नारीवापूजयेज्ज्येष्ठांतस्यालक्ष्मीर्विवर्द्धते ॥ वंध्यातुलभतेपुत्रान्दुर्भगासुभगाभवेत् ॥ एवंविधिविधानेनज्येष्ठादेवींसमर्चयेत् ॥ विघ्नास्त
स्यप्रणश्यंतियथाप्सुलवणंतथा ॥ तथाग्राह्यंकुरुश्रेष्ठज्येष्ठायाःशोभनंव्रतम् ॥नीराजनेकृतेचैवदीपोग्राह्यःसुभक्तितः ॥ नैवेद्यंसुहितंप्राश्यव्र
तिनाग्रेयुधिष्ठिर ॥ गुरुहस्तात्सदाग्राह्योदीपःप्रज्वलितोमहान्॥व्रतस्थोभक्तियुक्तश्चशुचिःप्रयतमानसः॥अनेनविधिनाचैवव्रतंकुर्याद्युधिष्ठिर ॥
ज्येष्ठानामपरादेवीभुक्तिमुक्तिप्रदायिनी ॥ यस्तांपूजयतेराजंस्तस्मैसर्वंप्रयच्छति ॥ ॥ इतिभविष्येज्येष्ठाव्रतकथा ॥ ॥ स्कंदपुराणेपि ॥
मासिभाद्रपदेशुक्लेपक्षेज्येष्ठर्क्षसंयुते ॥ यस्मिन्कस्मिन्दिनेकुर्याज्ज्येष्ठायाःपरिपूजनम् ॥ तत्राष्टम्यांयदावारोभानोर्ज्येष्ठर्क्षमेवच ॥ नीलज्येष्ठे
तिसाप्रोक्तादुर्लभाबहुकालिकी ॥ कृतस्नानोनरःकुर्यात्तस्यामन्यत्रवादिने ॥ भक्तियुक्तःशुचिःकुर्याज्ज्येष्ठादेव्यास्तुपूजनम् ॥ जलाशयात्तुपूर्वे[1]
द्युरानयेत्पंचशर्कराः ॥ देवीरूपंचतत्रैवकृत्वावास्थापयेत्ततः ॥ गोमयेनोपलिप्तेचहैमींवास्थापयेद्बुधः ॥ स्थापयेद्राजतींताम्रींलेख्यांवाप
टकुडचयोः ॥ आवाहयेत्ततोदेवीमथवापुस्तकेपिवा ॥ त्रिलोचनांशुक्लदंतींबिभ्रतींराजतींतनुम् ॥ विरक्तांरक्तनयनांज्येष्ठामावाहयाम्यहम् ॥
इतिमंत्रेणतांदेवीमावाह्यसुकृतीव्रती ॥ स्नानंदद्यात्तथापाद्यंपादयोरुभयोर्द्विज ॥ श्रीखंडकर्पूरयुतंदद्यादर्घ्यंचभक्तितः ॥ पंचामृतं
तथास्नानंनिर्मलेनजलेनच ॥ वस्त्रंगंधंतथापुष्पंधूपदीपादिकंचयत ॥ पूजयित्वाचसौभाग्यैर्द्रव्यैर्नानाविधैःशुभैः ॥ गोधूमयवशा

१ नद्याः पूर्वेद्युराहृत्यसिकताःशुद्धदेशजाइत्यन्यत्रपाठः । पूर्वेद्युर्नद्याःसकाशात्पंचशर्कराआनीयतत्रदेवीपूजनंक्रियतइत्याचारोपि ।

ल्यादिनानाद्रव्यैश्चनिर्मितम् ॥ कृत्वाप्रसृतिमात्रास्तुपूरिकाघृतपाचिताः ॥ निवेदनीयायत्किंचिद्दद्याद्देव्यैप्रयत्नतः ॥ भक्त्यामयासुरेशा
नियदन्नंदीयतेतव ॥ तद्गृहाणमहादेविज्येष्ठेश्रेष्ठेनमोस्तुते ॥ ततःस्तुत्वामहादेवींसर्वकामफलप्रदाम् ॥ ज्येष्ठायैतेनमस्तुभ्यंश्रेष्ठा
यैतेनमोनमः ॥ ज्येष्ठेश्रेष्ठेतपोनिष्ठेधर्मिष्ठेसत्यवादिनि ॥ ततःक्षमाप्यतांदेवींस्तुवीतस्तवनोत्तमैः ॥ ब्राह्मणान्भोजयेत्पश्चात्सुवा
सिन्यस्तथाबहु ॥ दास्योदासाश्चसंभोज्यादीनांधकृपणास्तथा ॥ देवींविप्रमनुज्ञाप्यस्वयंभुंजीतवाग्यतः ॥ भक्षयित्वातथाचम्य
देवींनत्वापुनःपुनः ॥ शयीतब्रह्मचर्येणकुर्यात्प्रातर्विसर्जनम् ॥ एवमेवप्रकुर्याद्वैव्रतंतुपरिवत्सरम् ॥ ज्येष्ठाविसर्जनांतेतुशर्करांवारिणि
क्षिपेत् ॥ दध्योदनंतयासाकंदेयंस्वस्यशुभाप्तये ॥ ज्येष्ठेदेविनमस्तुभ्यमलक्ष्मीनाशहेतवे ॥ पुनरेहिवत्सरांतेममगेहेशुभप्रदे ॥ एवंसं
प्रार्थ्यतांदेवींगीतवाद्यपुरःसरम् ॥ अपूपवटकान्दद्याद्ब्राह्मणेभ्यस्ततोद्विज ॥ कुर्यादेवंप्रयत्नेनसायंचाथविसर्जयेत् ॥ विद्यार्थीप्राप्नुयाद्विद्यांस्त्री
कामःस्त्रियमेवच ॥ लक्ष्मीवाञ्जायतेमर्त्यःस्त्रीतुमोदेतभर्तरि ॥ विनायकेनसहितंदेव्याःकुर्याद्विसर्जनम् ॥ (सौवर्णींराजतींताम्रींमृन्मयींवा
पिशक्तितः ॥ व्रतंस्वयंचकृतवान्सिद्धंचाप्यकृतार्हणः ॥ ) देव्यामहत्त्वंकथितंतवेदंविधिश्चमंत्रार्चनसंयुतस्तथा ॥ मंत्रोपिसायुज्यकरोव्रत
स्यतथामयातेकथितंसदैव ॥ इतिस्कांदोक्तोव्रतविधिः ॥ ॥ अथोद्यापनम् ॥ उद्यापनेतुप्रतिमांसुवर्णपलसंमिताम् ॥ कृत्वाचाष्टदलेपद्मे
स्थापयेत्कलशोपरि ॥ तामग्निवर्णामितिचमंत्रेणावाहयेद्व्रती ॥ नाममंत्रेणकुर्वीतासनंपाद्यमथार्घ्यकम् ॥ आपोहिष्ठेतितिसृभिर्हिरण्यवर्णा

१ अयंश्लोकोविसंगतइवभाति ।

श्वतसृभिः ॥ अभिषेकंचाचमनंमधुपर्कंचकंचुकीम् ॥ वस्त्रगंधाक्षतान्पुष्पधूपदीपान्प्रयत्नतः ॥ नैवेद्याचमनीयेचकरोद्वर्तनकंशुभम् ॥
तांबूलंदक्षिणांदत्वाततोनीराजयेच्चताम् ॥ यस्याःसिंहोरथेयुक्तोव्याघ्रश्चापिमहाबलः ॥ ज्येष्ठामहमिमांदेवींप्रपद्येशरणंशुभाम् ॥ इतिप्रार्थये
त् ॥ स्थापितेग्नौततःपश्चाद्धोममष्टोत्तरंशतम् ॥ द्रव्यैर्दधिमधुक्षीरघृतैःकुर्यात्प्रयत्नतः ॥ तर्पणंचततःकुर्यादेभिर्मंत्रैर्विचक्षणः ॥ ज्येष्ठायैन
मःज्येष्ठांतर्पयामि ॥ एवंसर्वत्र ॥ श्रेष्ठायै० सत्यायै०कलिनाशिन्यै० विद्यायै० वैनायक्यै० तपोनिष्ठायै० श्रियै० कृष्णायै० ब्रह्मिष्ठायै०
विसृज्यचततोदेवींज्येष्ठायाःप्रतिमांशुभाम् ॥ कृष्णवस्त्रेणसंयुक्तामाचार्यायनिवेदयेत् ॥ वस्त्राभरणमाल्यादिलेपनैःपूजितंद्विजम् ॥ प्रणिप
त्यततःपश्चात्तस्मैसर्वंनिवेदयेत ॥ ब्राह्मणान्भोजयेत्पश्चात्स्वयंभुंजीतवाग्यतः ॥ ब्राह्मणांश्चततोनत्वायाचयेत्सर्वमंगलम् ॥ एवंसुवासिन्यो
भोज्याःपूज्याःसर्वसमृद्धये ॥ एवंकृतेव्रतेसम्यक्सर्वशांतिःप्रजायते॥धनधान्यसमृद्धिश्चआरोग्यंभवतिध्रुवम् ॥ इतिश्रीभविष्योत्तरपुराणेज्ये
ष्ठादेवीव्रतोद्यापनंसंपूर्णम् ॥ तत्रैवभाद्रशुक्लाष्टम्यांदूर्वाष्टमीव्रतंभविष्ये ॥ अत्रसापूर्वाग्राह्या ॥ श्रावणीदुर्गनवमीदूर्वाष्टमिहुताशनी ॥
पूर्वविद्धातुकर्तव्याशिवरात्रिर्बलेर्दिनामितिवृद्धयमवचनात ॥ शुक्लाष्टमीतिथिर्यातुमासिभाद्रपदेभवेत ॥ दूर्वाष्टमीतिविज्ञेयानो
त्तरासाविधीयतेइतिहेमाद्रिधृतपुराणसमुच्चयवचनात् ॥ यत्तु ॥ मुहूर्तंरोहिणेष्टम्यांपूर्वावायदिवापरा ॥ दूर्वाष्टमीतुसाकार्याज्येष्ठांमूलं
चवर्जयेदितितत्रैवपराकार्येत्युक्तंतत्पूर्वत्रज्येष्ठामूलयोगेकर्मकालव्याप्त्यभावेचद्रष्टव्यम् ॥ दूर्वाष्टमीतुसाकार्याज्येष्ठामूलर्क्षसंयुता ॥
तथाच ॥ प्राप्तेभाद्रपदेमासिशुक्लाष्टम्यांतुभारत ॥ दूर्वामभ्यर्चयेद्भक्त्याज्येष्ठांमूलंचवर्जयेत् ॥ ऐंद्रर्क्षेपूजितादूर्वाहंत्यपत्या

निनान्यथा ॥ भर्तुरायुर्हरामूलेतस्मात्तांपरिवर्जयेदितितत्रैवव्रतनिषेधात् ॥ इदमगस्त्योदयेकन्यार्केचनकार्यम् ॥ शुक्लेभाद्रपदेमा
सिदूर्वासंज्ञातथाष्टमी ॥ सिंहार्कएवकर्तव्यानकन्यार्केकदाचन ॥ सिंहस्थेसोत्तमासूर्येनुदितेमुनिसत्तमइतिमदनरत्नेस्कांदोक्तेः ॥ अग
स्त्यउदितेतातपूजयेदमृतोद्भवाम् ॥ वैधव्यंपुत्रशोकंचदशजन्मानिपंचचेतितत्रैवदोषोक्तेश्च ॥ यदातुभाद्रशुक्लाष्टम्यामगस्त्योदय
स्तदातत्पूर्वंकृष्णाष्टम्यांकार्यम् ॥ शुक्लपक्षाभावेपिपौर्णिमांतमासेनभाद्रपदमात्रलाभात् ॥ यदातुभाद्रपदोधिकस्तदासिंहार्कएवे
तिउदाहृतवचनात् ॥ अधिमासेतुसंप्राप्तेनभस्यउदयेमुनेः ॥ अर्वागेवव्रतंकार्यंपरतोनतुकुत्रचिदितिनिर्णयदीपकेस्कांदाच्चाधिके
एवकर्तव्यम् ॥ इदंस्त्रीणांनित्यम् ॥ यानपूजयेतदर्वांमोहादिहयथाविधि ॥ त्रीणिजन्मानिवैधव्यंलभतेनात्रसंशयः ॥ तस्मा
त्संपूजनीयासाप्रतिवर्षंवधूजनैरितिपुराणसमुच्चयात् ॥ यदातुज्येष्ठादिकंविनाष्टमीसर्वथानलभ्यतेतदातत्रैवोक्तम् ॥ कर्तव्याचैकभक्तेन
ज्येष्ठामूलंयदाभवेत् ॥ ज्येष्ठामभ्यर्चयेद्भक्त्यानवंध्यांदिवसंनयेदितिभविष्योत्तरेऽनुकल्पेनानुष्ठानंनतुसर्वथालोपः ॥ अथदूर्वाष्टमीव्रतंहे
माद्रौभविष्ये ॥ विष्णुरुवाच ॥ ब्रह्मन्भाद्रपदेमासिशुक्लाष्टम्यामुपोषितः ॥ पूजयेच्छंकरंभक्त्यायोनरःश्रद्धयान्वितः ॥ सयातिपरमंस्थानं
यत्रदेवस्त्रिलोचनः ॥ गणेशंपूजयेद्यस्तुदूर्वयासहितंमुने ॥ गणेशःशिवः ॥ फलानां[1]सकलैर्दिव्यैर्गंधपुष्पैर्विलेपनैः ॥ दूर्वांपूज्यतथेशानं
मुच्यतेसर्वपातकैः ॥ शुचौदेशेप्रजातायांदूर्वायांब्राह्मणोत्तम ॥ स्थाप्यलिंगंततोगंधैः पुष्पैर्धूपैःसमर्चयेत् ॥ खर्जूरैर्नारिकेलैश्चमा
तुलिंगफलैस्तथा ॥ पूजयेच्छंकरंभक्त्यादूर्वायांविधिवद्द्विज ॥ दध्यक्षतैर्द्विजश्रेष्ठअर्घ्यंदद्यात्रिलोचने ॥ दूर्वाशमीभ्यांसंपूज्यमानवः

१ फलानांसकलैःफलैरित्यर्थः ।

श्रद्धयान्वितः ॥ सवैसुकृतजन्मास्यात्सर्वदेवैस्तुवंदितः ॥ विद्यांप्राप्नोतिविद्यार्थीपुत्रार्थीपुत्रमाप्नुयात् ॥ धर्मानाप्नोतिधर्मार्थीकन्यार्थी
लभतेचताम् ॥ मनसायद्यदिच्छेततत्तदाप्नोतिमानवः ॥ यएवंपूजयेद्दूर्वांभूतेशंमानवःफलैः ॥ ससप्तजन्मपापौघैर्मुच्यतेनात्रसंशयः ॥
कृतोपवासःसप्तम्यामष्टम्यांपूजयेच्छिवम् ॥ दूर्वांसमेतंविप्रेंद्रदध्यक्षतफलैःशुभैः ॥ दूर्वामंत्रः ॥ ॥ त्वंदूर्वेऽमृतजन्मासिवंदितासिसुरैर
पि ॥ सौभाग्यंसंततिंदेहिसर्वकार्यकरीभव ॥ यथाशाखाप्रशाखाभिर्विस्तृतासिमहीतले ॥ तथा[१]विस्तृतसंतानंदेहित्वमजरामरे ॥ तेर्[२]ल्लिंगमंत्रै
रीशानमर्चयेत्प्रयतःशुचिः ॥ ततःसंपूजयेद्विप्रान्फलैर्नानाविधैर्द्विज ॥ अनग्निपक्वमश्नीयादन्नंदधिफलंतथा ॥ अक्षारलवणंब्रह्मन्नाश्नीया
न्मधुनान्वितम् ॥ दद्यात्फलानिविप्रेषुफलाहारःस्वयंभवेत् ॥ प्रणम्यशिरसादूर्वांशिवंशिवमुपाश्नुते ॥ एवंयःकुरुतेभक्त्यामहादेवस्य
पूजनम् ॥ गणत्वंयात्यसौब्रह्मन्मुच्यतेब्रह्महत्यया ॥ एवंपुण्यापापहराअष्टमीदूर्वसंज्ञिता ॥ चतुर्णामपिवर्णानांस्त्रीजनानांविशेषतः ॥ ॥
इतिभाविष्योक्तंदूर्वाष्टमीव्रतम् ॥ ॥ अथादित्यपुराणोक्तेदूर्वाष्टमीव्रतेश्रीपूजनमुक्तम् ॥ शुक्लाष्टम्यांतुसंप्राप्तेमासिभाद्रपदेतथा ॥ दूर्वाप्रतानं
सुश्वेतमुत्तराशाभिगामिनम्॥पूजयेद्गृहमानीयगंधमाल्यानुलेपनैः॥फलैर्मूलैस्तथाधूपदीपैश्चाथविसर्जयेत्॥अनग्निपक्वंयत्सर्वंनैवेद्यंचकथंचन॥
भोक्तव्यंचतथाब्रह्मन्नग्निपक्वविवर्जितम् ॥ दूर्वांकुरस्थांसंपूज्याविधिनायौवनां[३]श्रियम् ॥ यौवनंस्थिरमाप्नोतियत्रयत्राभिजायते ॥ भविष्योत्तरेतुवि
शेषः ॥ अष्टम्यांफलपुष्पैश्चखर्जूरैर्नारिकेलकैः ॥ द्राक्षमोदकपिष्टैश्चबदरैर्लकुचैस्तथा ॥ नारिंगैर्जंबुकैश्चैवबीजपूरैश्चदाडिमैः ॥ दध्यक्षतैश्चवस्त्र

---

१ ममापीतिपाठांतरम् । २ सलिंगेतिपाठः । ३ यौवनावस्थदूर्वांकुरगतांश्रियमित्यर्थः ।

ग्भिश्चधूपैर्नैवेद्यदीपकैः ॥ मंत्रेणानेनराजेंद्रशृणुष्वावहितोनृप ॥ दत्वापिष्टानिविप्रेभ्यःफलंचविविधंप्रभो ॥ तिलपिष्टकगोधूमधान्यपिष्टानिपां
डव ॥ भोजयित्वासुहृन्मित्रंस्वंबंधुंस्वजनांस्तथा ॥ ततोभुंजीततच्छेषंस्वयंश्रद्धासमन्वितः ॥ कर्तव्याचैकभक्तेनज्येष्ठामूलंयदाभवेत् ॥ दूर्वा
मभ्यर्चयेद्भक्त्यानवंध्यंदिवसंनयेत् ॥ पक्षेभाद्रपदस्यैवंशुक्लाष्टम्यांयुधिष्ठिर ॥ दूर्वाष्टमीव्रतंपुण्यंयःकरोतीहमानवः ॥ नतस्यक्षयमाप्नोतिसंततिः
सात्पपौरुषी ॥ नंदतेवर्द्धतेनित्यंयथादूर्वातथाकुलम् ॥ इतिदूर्वाष्टमीव्रतंसंपूर्णम् ॥ अथभाद्रशुक्लाष्टमीमारभ्यषोडशदिनपर्यंतंमहालक्ष्मीव्रतम्॥
तच्चार्द्धरात्रमतिक्रम्यवर्तिन्यामष्टम्यांकार्यम् ॥ तदुक्तंचंद्रप्रकाशेस्मृत्यंतरे ॥ अर्धरात्रमतिक्रम्यवर्ततेयोत्तरातिथिः ॥ तदातस्यांनरैःकार्यंमहाल
क्ष्मीव्रतंसदा ॥ अस्यांज्येष्ठायुतायांप्रारंभःकार्यः ॥ तथाचस्कांदे ॥ मासिभाद्रपदेशुक्लेपक्षेज्येष्ठायुताष्टमी ॥ प्रारब्धव्यंव्रतंतत्रमहालक्ष्म्यायता
त्मभिः ॥ तदभावेकेवलायामपिकार्यम् ॥ समापनंतुकृष्णाष्टम्यांचंद्रोदयव्यापिन्यांकार्यम् ॥ चंद्रोदयव्रतेचैवतिथिस्तात्कालिकीभवेदित्यु
क्तेः ॥ दिनद्वयेचंद्रोदयेसत्त्वेऽसत्त्वेचकृष्णपक्षेष्टमीचैवेत्यादिवाक्यात्पूर्वैव ॥ अपरदिनेचंद्रोदयोत्तरंत्रिमुहूर्ताचेत्परैव ॥ तदुक्तंमदनरत्नेपुराण
समुच्चये ॥ पूर्वावापरविद्धावाग्राह्याचंद्रोदयेसदा ॥ त्रिमुहूर्तात्तुसापूज्यापरतश्चोर्ध्वगामिनी ॥ अथपूजनम् ॥ महालक्ष्मिसमागच्छपद्मनाभ
पदादिह ॥ पंचोपचारपूजेयंत्वदर्थेदेविसंभृता ॥ आवाहनम् ॥ आलयस्तेहिकथितःकमलंकमलालये ॥ कमलेकमलेह्यस्मिन्नुस्थिरांतत्वं
कृपयाकुरु ॥ स्थापनम् ॥ कमलेपाहिमेदेविस्वर्णसिंहासनंशुभम् ॥ गृहाणेदंमयादत्तंभक्तियुक्तेनचेतसा ॥ आसनम् ॥ गंगादिसलि

१ त्वंदूर्वेऽमृतनामासीत्यनेन । २ अष्टमीतिशेषः ।

लाधारंतीर्थमंत्राभिमंत्रितम् ॥ दूरयात्राश्रमहरंपाद्यंमेप्रतिगृह्यताम् ॥ पाद्यम् ॥ तीर्थोदकैर्महादिव्यैःपापसंहारकारकैः ॥ अर्घ्यंगृहाणदे
वेशिदेवानामुपकारिणि ॥ अर्घ्यम् ॥ आचाम्यंजगदाधारेसिद्धिलक्ष्मिजगत्प्रिये ॥ चपलेदेवितेदत्तंतोयंगृह्णनमोस्तुते ॥ आचमनम् ॥ पयो
दधिघृतंक्षौद्रंसितयाचसमन्वितम् ॥ पंचामृतमनेनाद्यकुरुस्नानंदयानिधे ॥ पंचामृतम् ॥ तोयंतवमहालक्ष्मिकर्पूरागुरुवासितम् ॥ तीर्थे
भ्यःसुसमानीतंस्नानार्थंप्रतिगृह्यताम् ॥ स्नानम् ॥ सूक्ष्मतंतुभवंवस्त्रंनिर्मितंविश्वकर्मणा ॥ लोकलज्जाहरंदेविगृहाणसुरसत्तमे ॥ वस्त्रम् ॥
कंचुकीम् ॥ नानासौभाग्यद्रव्यम् ॥ मलयाचलसंभूतंनानापन्नगराक्षितम् ॥ शीतलंबहुलामोदंचंदनंप्रतिगृह्यताम् ॥ चंदनम् ॥ मिलत्परि
मलामोदंमत्तालिकुलसंकुलम् ॥ आनंदिनंदनोत्पन्नंपद्मायैकुसुमंनमः ॥ पुष्पाणि ॥अथनामपूजा॥ श्रियैन॰लक्ष्म्यै॰वरदायै॰विष्णुपत्न्यै॰
क्षीरसागरवासिन्यै॰हिरण्यरूपायै॰सुवर्णमालिन्यै॰पद्मवासिन्यै॰ पद्मप्रियायै॰मुक्तालंकारिण्यै॰सूर्यायै॰ चंद्राननायै॰विश्वमूर्त्यै॰मुक्त्यै॰
मुक्तिदात्र्यै॰ऋद्ध्यै॰समृद्ध्यै॰तुष्ट्यै॰पुष्ट्यै॰धनेश्वर्यै॰श्रद्धायै॰भोगिन्यै॰भोगदायै॰ धात्र्यै॰ ॥ गंधसंभारसन्नद्धकस्तूरीमोदसंभवम् ॥
सुरासुरनरानंदंधूपंदेविगृहाणमे ॥ धूपम् ॥ मार्तंडमंडलाखंडचंद्रबिंबाग्नितेजसाम् ॥ निधानंदेविदीपोयंनिर्मितस्तवभक्तितः ॥ दीपम्
देवतालयपातालभूतलाधारधान्यजम् ॥ षोडशाकारसंभारंनैवेद्यंतेनमःसदा ॥ नैवेद्यम् ॥ स्नानादिकंविधायापियतःशुद्धिःप्रजायते ॥ एतदा
चमनीयंचमहालक्ष्मिविधीयताम् ॥ आचमनम् ॥ करोद्वर्तनम् ॥ पातालतलसंभूतंवदनांभोजभूषणम् ॥ नानागुणसमाकीर्णंतांबूलंप्रतिगृह्य
ताम् ॥तांबूलम् ॥ हिरण्यगर्भेतिदक्षिणाम् ॥ नीराजनंसुमंगल्यंकर्पूरेणसमन्वितम् ॥ चंद्रार्कवह्निसदृशंमहालक्ष्मिनमोस्तुते ॥ नीराजनम् ॥

शारदेंदुकलाकांतिः स्निग्धनेत्राचतुर्भुजा ॥ पद्मयुग्माचाभयदावरव्यग्रकरांबुजा ॥ पुष्पांजलिम् ॥ विष्णोर्वक्षसिपद्मेचशंखेचक्रेतथांबरे ॥
लक्ष्मिदेवियथासित्वंमयिनित्यंतथाभव ॥ प्रार्थना ॥ उत्तार्यदोरकंबाहोर्लक्ष्मीपार्श्वेनिवेदयेत् ॥ लक्ष्मिदेविगृहाणत्वंदोरकंयन्मयाधृतम् ॥
व्रतंसंपूर्णतांयातुकृपाकार्यामयित्वया ॥ कथांश्रुत्वासुवर्णंचदद्यादाचार्यदक्षिणाम् ॥ एवंनिवर्त्यविधिवत्पूजनंबटुकाश्रियः ॥ च.तुर्वर्ण्यंच
संभोज्ययथाशक्त्याचदक्षिणाम् ॥ [1]दीपांश्चषोडशापूपान्गोधमानांद्विजातये ॥ दत्वातत्संख्ययाभुक्त्वारात्रौजागरणंचरेत् ॥ चंद्रोदयेचसंजा
तेदद्यादर्घ्यंततोव्रती ॥ मंत्रेणानेनविप्रेंद्रशंखेनांबुफलान्वितम् ॥ नमोस्तुतेनिशानाथलक्ष्मीभ्रातर्नमोस्तुते ॥ व्रतंसंपूर्णतांयातुगृहाणार्घ्यंन
मोस्तुते ॥ चंद्रायार्घ्यम् ॥ प्रातर्विसर्जयेद्देवींमंत्रेणानेनसुव्रत ॥ पंकजंदेविसंत्यज्यममवेश्मनिसंविश ॥ यथासपुत्रभृत्योहंसुखीस्यांत्वत्प्रसा
दतः ॥ विसर्जनम् ॥ इतिपूजनम् ॥ ॥ अथकथा ॥ ॥ स्कंदउवाच ॥ ॥ सौभाग्यजननंस्त्रीणांदौर्भाग्यपरिकृंतनम् ॥ परमैश्वर्यजनकंतद्ब्र
तंब्रूहिशंकर ॥ १ ॥ ईश्वरउवाच ॥ साधुसाधुमहाबाहोयत्पृष्टोहंत्वयानघ ॥ तत्तेहंसंप्रवक्ष्यामिव्रतानामुत्तमंव्रतम् ॥ २ ॥ येनचीर्णेननरो
दुर्गतिंयातिकर्हिचित् ॥ सुभगादुर्भगावापिस्त्रियोनविधवागुह ॥३॥ अस्तिदेव्याव्रतंपुण्यंमहालक्ष्म्याःषडानन ॥ नारीणांचनराणांचसर्वदुःखा
पहंतथा ॥ ४ ॥ ॥ स्कंदउवाच ॥ देव्याश्चरितमाहात्म्यंमर्त्यैकेनप्रकाशितम् ॥ विधानंकीदृशंब्रूहिव्रतस्यास्यमहाविभो ॥ ५ ॥ शंकरउवा
च ॥ ॥ देवासुरमभूद्युद्धंपूर्णमब्दशतंपुरा ॥ वृत्रेसुराणामधिपेदेवानांचपुरंदरे ॥ ६ ॥ तत्रदेवैर्महावीर्यैर्नारायणबलाश्रयात् ॥ असुरानि

[1] दीपान्षोडशपिंडांश्चेतिक्वचित्पाठः ।

र्जिताःसर्वैंपातालतलमाययुः ॥ ७ ॥ केचिल्लंकांगताः केचित्प्रविष्टावरुणालयम् ॥ गिरिदुर्गंसमाश्रित्यकेचित्तस्थुर्महाबलाः ॥ ८ ॥ तत्रको
लासुरोनाममहावीर्योमहाबलः ॥ गोमंतंदुर्गमंदुर्गंगिरिमाश्रित्यनिर्भयः ॥ ९ ॥ याराजकन्यकालोकेरूपवत्योमहागुणाः ॥ आनीयगिरिदु
र्गेस्थोरमयामाससर्वशः ॥ १० ॥ रमयित्वाक्षिपत्तत्रकामरूपीविहंगमः ॥ एतस्मिन्नेवकालेतुआगतौमुनिसत्तमौ ॥ ११ ॥ श्रुतप्रभावसं
पन्नौपुलस्त्योगौतमस्तथा[1] ॥ तीर्थयात्राप्रसंगेनश्रुत्वावाक्यंजनास्यतः ॥ १२ ॥ कोलासुरोत्पातजन्यंकन्याहेतोःशिखिध्वज ॥ ता
वूचतुर्जनंसर्वमगस्त्योऽस्तिमहामुनिः ॥ १३ ॥ येनतोयनिधिः पीतोविंध्याद्रिश्चनिपातितः ॥ वातापील्वलनामानौदैत्यौयेनविनाशितौ ॥
॥ १४ ॥ तंगच्छामोवयंसर्वेकोलासुरवधायच ॥ इत्यामंत्र्यजनाःसर्वेगत्वातमभिवाद्यच ॥ १५ ॥ ऊचुःसर्वेयथावृत्तंकोलासुरविचेष्टितम् ॥
तच्छ्रुत्वाभगवानाहमैत्रावरुणिरग्र्यधीः ॥ १६ ॥ सृष्टिस्थितिविनाशानांकारणंभक्तवत्सलाः ॥ रामस्याद्रौतपस्यंतिब्रह्मविष्णुमहेश्वराः ॥
॥ १७ ॥ तिस्रःसंध्यामूर्तिमत्यस्तेषांशुश्रूषणेरताः ॥ प्रविश्यतामहालक्ष्मीःशक्तिरूपेणसंस्थिता ॥ १८ ॥ सर्वशक्तियुतादेवीलोकानांहित
काम्यया ॥ इत्युक्तास्त्वरितंगत्वाकोलासुरवधातये ॥ १९ ॥ निवेद्यनिखिलंतेभ्यस्तस्थुः प्रांजलयोजनाः ॥ तच्छ्रुत्वानिखिलंतेभ्योब्रह्मवि
ष्णुमहेश्वराः ॥ २० ॥ सन्ध्यात्रयंसमाहूयवाचंप्रोचुर्जनेश्वराः ॥ वंदारुसुरवृंदेंद्रमौलिमाणिक्यमंडन ॥ २१ ॥ हरिष्यतिमहालक्ष्मीर्युद्धेकोला
सुरंरिपुम् ॥ भगवत्योमूर्तिमत्योदंडशूलादिभिर्वरैः ॥ २२ ॥ आयुधैर्विविधैःकृत्वाजयमाप्स्यथसंयुगे ॥ युष्माकंतुसहायेसौयुष्मत्क्रोधसमु

१ सहेत्यपिपाठः ।  २ तान्प्रतिगच्छतेस्युक्ताः ।

द्भवः ॥ २३ ॥ भूतनाथोभूतपूर्वोवःसहायोभविष्यति ॥ इत्युक्तास्त्वरितंगत्वारुरुधुःकोलराक्षसम् ॥ १४ ॥ निरुध्यचपुरींदेव्योजगर्जुर्जलदस्वनाः ॥ भिंदंत्यश्वदिशांवृंदंवर्धयंत्यश्वतत्क्रुधम् ॥ २५ ॥ कोलासुरोपितच्छुत्वाप्रोत्पपातमहासनात् ॥ रोषणःक्रोधताम्राक्षोमेरोरिवमृगांतकः ॥ २६ ॥ हस्त्यश्वरथपादातचतुरंगबलान्वितः ॥ निर्ययौपत्तनाद्योद्धुंकालिकायाइवाशनिः ॥ २७ ॥ सकुंडलशिरस्त्राणःकवचीधृतबाणधिः ॥ बद्धगोधांगुलीत्राणःक्रुद्धोवृत्रइवापरः ॥ २८ ॥ ततोराक्षससैन्यंतद्भूतनाथेनसंगतम् ॥ देवतारिर्महोल्काभिर्युद्धंचक्रेऽतिभीषणम् ॥ ॥ २९ ॥ महारावैर्भीमघोषैर्बाणैःकेंकारनिःस्वनैः ॥ गोखराणांनिनादैश्चलोकःशब्दमयोभवत् ॥ ३० ॥ जहिभिंधीतिवदतांधावतामितरेतरम् ॥ ववृधेसमरंघोरंमुष्टामुष्टिकचाकाचि ॥ ३१ ॥ ॥ उद्धतेराक्षसबलेभूतनाथोमहाबलः ॥ ममर्दराक्षसानीकंशरवर्षैश्चदारुणैः ॥ ३२ ॥ ॥ हतंदृष्ट्वासुरबलंक्रुद्धः कोलासुरोरणे ॥ अभिद्रुत्यगदापाणिस्ताडयामासभैरवम् ॥ ३३ ॥ ययौमूर्च्छांमहावीर्यस्तेनाभिहतमस्तकः ॥ ततोदेव्योतिवेगेनह्यभिदुद्रुवुरुद्धतम् ॥ ३४ ॥ त्रिशूलैरभिजघ्नुस्तंपट्टिशैश्चव्यघातयन् ॥ मुष्टिभिस्ताडयामासुर्नखैश्चव्यदारयन् ॥ ३५ ॥ पादघातैःसमाजघ्नुःसिंहःकरिवरंयथा ॥ सकुंडलशिरस्त्राणोदष्टोष्ठोरक्तलोचनः ॥ ३६ ॥ कृतभ्रूकुटिवक्त्रोसौराक्षसस्तामुहुर्मुहुः ॥ गदयाताडयामासशिरःकंठांसकुक्षिषु ॥ ३७ ॥ बभंजुस्तांगदांतास्तुहसंत्यःसंमदाकुलाः ॥ ततोधनुर्धरोभूत्वाबाणजालमवाकिरत् ॥ ३८ ॥ तासांशरीरमर्माणिभिंदञ्छरपुरोगमैः ॥ ननादबद्धवैरोसौहृदयंचाभिनञ्छरैः ॥ ३९ ॥



१ भैरवः। २ निःसाणनिनदैश्चेत्यपिक्वचित्पाठः।

ततःक्रुद्धतरास्तास्तुतंपादेजगृहुर्भृशम् ॥ आकाशेभ्रामयित्वातुचिक्षिपुर्गगनेक्रुधा ॥ ४० ॥ कोलासुरोपिपतितोयावदुत्थातुमिच्छति ॥
तावन्निर्मथ्यलक्ष्मीस्तंपादाभ्यांप्रत्यपीडयत् ॥ ४१ ॥ तत्पादपीडितोदैत्योविवृत्यनयनेभृशम् ॥ मुक्तकंठस्वनंकृत्वाततोमोहमुपेयिवान् ॥
॥ ४२ ॥ ततोदेवाःसगंधर्वामनुष्याऋषयोऽस्तुवन् ॥ देवनाथाश्चदेव्यश्चननृतुःसंमदाकुलाः ॥ ४३ ॥ देवदुंदुभयोनेदुःपुष्पवृष्टिः
पपातह ॥ दिशःप्रसेदुर्मरुतोववुर्मंदंस्थिरंजगत् ॥ ४४ ॥ सुरासुरशिरोरत्[1]नापीडितांघ्रिसरोरुहाः ॥ देव्योदिव्येनयानेनयांतिकोलापुरंप्रति ॥
॥ ४५ ॥ आयांतींपद्मजांवीक्ष्यमुक्तपादाब्जशृंखलः ॥ तुष्टावपरयाभक्त्याराजकन्यागणोमुदा ॥ ४६ ॥ राजकन्याऊचुः ॥ वंदारुवीरसुर
वृंदकिरीटरत्नरोचिश्छटानिकरकल्पितरत्नदीपम् ॥ देवित्वदीयचरणंशरणंजनानांसेवामहेसकलमंगलवर्धनाय ॥ ४७ ॥ उत्फुल्लकैर
वदलायतलोचनायैगंडोल्लसच्चटुलकुंडलमंडितायै ॥ राकाशशिप्रतिभटाननकोमलायैतस्यैनमःकमललोचनवल्लभायै ॥ ४८ ॥ सद्भक्तक
ल्पलतिकांहरिकंठभूषांकेयूरहेमकटकोज्ज्वलकंकणांकाम् ॥ संसारसागरमुखेपततोममाद्यदेहित्वदीयकरयष्टिमनंगमातः ॥ ४९ ॥ दृष्टा
देविजनास्त्वयापिविविधाब्रह्माधिपत्यंगताविष्णुर्वक्षसियाचकारतरलालीलाब्जमालाभ्रमम् ॥ क्लेशाग्निप्रहतंत्वदीयचरणद्वंद्वाब्जसेवारतंकारु
ण्यामृतसारपूरितदृशामामंबपाहीश्वरि ॥ ५० ॥ मल्लीप्रफुल्लकुसुमोज्ज्वलमध्यभागधम्मिल्लभारजिततारकचित्रिताभ्रा ॥ उत्तप्तहेमनि
कषोज्ज्वलकायकांतिर्लक्ष्मीःस्वयंप्रणमतांश्रियमातनोतु ॥ ५१ ॥ इतिस्तुतामहालक्ष्मीर्भक्तानामिष्टदायिनी ॥ योगिन्योद्यभविष्यध्व

१ रत्नचंचत्पदामहाबलाइत्यापिपाठः ।

मितितासांवरंददौ ॥ ९२ ॥ दृष्ट्वातास्तुमुदादेवीसारूप्यंतास्वदापयत् ॥ ताभिर्निषेवितादेवीवरंवर्यंददौमुदा ॥ ९३ ॥ राजकन्यास्ततः
सर्वामुक्ताःस्वपुरमाययुः ॥ ततःप्रभृतिलोकेषुपूज्यास्ताःसर्वकामदाः ॥ ९४ ॥ ताश्चतुःषष्टियोगिन्योमहालक्ष्मीपरिग्रहात् ॥ नृत्यंति
निवहैस्तत्रगीतवादित्रनिःस्वनैः ॥ ९५ ॥ पुरोदेव्यामहालक्ष्म्याःकरहाटपुरेनिशि ॥ एवंप्रभावासादेवीविष्णुरामाषडानन ॥ ९६ ॥
बभूवसर्वभूतेषुविख्याताकमलासना ॥ प्रभावमस्यादेव्याश्चनालंवक्तुंचतुर्मुखः ॥ ९७ ॥ व्रतस्यास्यविधानंचशृणुमत्तोविधानतः ॥
मासिभाद्रपदेशुक्लेपक्षेज्येष्ठायुताष्टमी ॥ ९८ ॥ प्रारब्धव्यंव्रतंतत्रमहालक्ष्म्यायतात्माभिः ॥ करिष्यामिव्रतंदेवित्वद्भक्तस्त्वत्परायणः ॥
॥ ९९ ॥ तदविघ्नेनमेयातुसमाप्तिंत्वत्प्रसादतः ॥ इत्युच्चार्यततोबद्ध्वादोरकंदक्षिणेकरे ॥ ६० ॥ षोडशग्रंथिसहितंगुणैःषोडशभिर्युतम् ॥ त
तोऽन्वहंमहालक्ष्मींपूजयेन्नियतात्मवान् ॥ ६१ ॥ गंधपुष्पैःसनैवेद्यैर्यावत्कृष्णाष्टमीदिनम् ॥ तस्मिन्दिनेतुसंप्राप्तेकुर्यादुद्यापनंव्रती ॥ ६२ ॥
वस्त्रमंडपिकांकृत्वामाल्याभरणशोभिताम् ॥ त्रिभूमिकांतांसुश्लक्ष्णांनानादीपैश्चशोभिताम् ॥ ६३ ॥ चतस्रःप्रतिमाःकृत्वासौवर्णीस्तत्स्वरू
पिणीः ॥ स्नपनंकारयेत्तासांपंचामृतविधानतः ॥ ६४ ॥ षोडशैरुपचारैश्चधूपदीपादिभिस्तथा ॥ जागरणंतुकर्तव्यंगीतवादित्रनिःस्वनैः ॥
॥ ६५ ॥ ततोनिशीथेसंप्राप्तेभ्युदितेऽमृतदीधितौ ॥ कृत्वातुस्थंडिलेपद्मंसषडंगंप्रपूजयेत् ॥ ६६ ॥ दद्यादर्घ्यंचरागेणव्रतीतस्मैसमाहितः ॥
क्षीरोदार्णवसंभूतचंद्रलक्ष्मीसहोदर ॥ ६७ ॥ पीयूषधामरोहिण्यासहितोर्घ्यंगृहाणवै ॥ श्रीसूक्तेनततोवह्नौपद्मानिजुहुयाच्छुचिः ॥ ६८ ॥
पायसंचैवबिल्वानितदलाभेतथाघृतम् ॥ ग्रहेभ्यश्चैवहोतव्यंसमिच्चरुतिलादिकम् ॥ ६९ ॥ जानुभ्यामवनिंगत्वामंत्रेणप्रार्थयेत्ततः ॥ क्षीरो

दार्णवसंभूतेकमलेकमलालये ॥ ७० ॥ प्रयच्छसर्वकामान्मेविष्णुवक्षःस्थलालये ॥ पुत्रान्देहियशोदेहिसौख्यंसौभाग्यमेवच ॥ ७१ ॥ कालि
कालिमहाकालिविकरालिनमोस्तुते ॥ त्रैलोक्यजननित्राहिवरदेभक्तवत्सले ॥ ७२ ॥ एकनाथेजगन्नाथेजमदग्निप्रियेनं[1]घे ॥ रेणुकेत्राहिमांदे
विराममातःशिवंकुरु ॥ ७३ ॥ कुरुश्रियंमहालक्ष्मिह्यश्रियंत्वाशुनाशय ॥ मंत्रैरेतैर्महालक्ष्मींप्रार्थ्यश्रोत्रि[2]र्यंयोषिताम् ॥ ७४ ॥ चंदनंताल
पत्रंचपुष्पमालादिकंतथा ॥ नवे[3]शरावेभक्ष्याणिक्षिप्त्वाबहुविधानिच ॥ ७५ ॥ प्रत्येकंषोडशैतानिपूगपूर्णानिचैवहि ॥ ता[4]न्न्येनसमाच्छाद्य
व्रतीदद्यात्समंत्रकम् ॥ ७६ ॥ क्षीरोदार्णवसंभूतालक्ष्मीश्चंद्रसहोदरी ॥ व्रतेनानेनसंतुष्टाप्रीयतांविष्णुवल्लभा ॥ ७७ ॥ इंदिराप्रतिगृह्णातिइं
दिरावैददातिच ॥ इंदिरातारिकोभाभ्यामिंदिरायैनमोनमः ॥ ७८ ॥ दत्वाह्युपायनादीनिश्रोत्रियाणांचयोषिताम् ॥ चतस्रःप्रतिमास्तास्तु
ब्राह्मणायनिवेदयेत् ॥ ७९ ॥ एवंकृत्यंतुनिर्वर्त्यव्रतीभोजनमाचरेत् ॥ स्कंदउवाच ॥ केनेदंस्वीकृतंपूर्वंकथमस्मिन्प्रकाशितम् ॥ ८० ॥ ब्रू
हिमेतत्त्वतोदेवयद्यहंतववल्लभः ॥ शंकरउवाच ॥ आसीद्राजासार्वभौमोमंगलार्णइतिश्रुतः ॥ ८१ ॥ कुंडिनेनगरेरम्येतस्यपद्मावतीप्रिया ॥
तमागतःकश्चिदेकःसेवकोब्राह्मणोत्तमः ॥ ८२ ॥ अज्ञातनाम्नस्तस्यासौनामचक्रेनृपस्तदा ॥ तवल्लकइतिख्यातोबभूवद्विजसत्तमः ॥ ८३ ॥
कदाचिन्मृगयासक्तोभूपालोवनमाविशत् ॥ तत्रविद्ध्वावराहादीन्मृगान्हत्वासहस्रशः ॥ ८४ ॥ क्षुत्तृट्परिगतःश्रांतोवृक्षमूलमुपाश्रितः ॥
उदकान्वेषणेचारान्प्रेषयामाससर्वशः ॥ ८५ ॥ वनेजलंतुनापश्यन्क्वचिच्छ्रांताःप्रयत्नतः ॥ तेगत्वानृपतिंप्रोचुर्नात्रांभइतिदुःखिताः ॥ ८६ ॥

१ व्ययेइत्यपिपा० । २ अस्यदद्यादितितृतीयश्लोकस्थेनान्वयः । ३ नवेशूर्पेचेत्यपिपा० । ४ शरावेणशूर्पेणवा ।

तवल्लकोपिबभ्रामविपिनंतदतंद्रितः ॥ भ्रममाणस्तदापश्यत्कस्मिंश्चिद्वनगह्वरे ॥ ८७ ॥ रम्यंसरोवरंदिव्यंकुमुदोत्पलमंडितम् ॥ तत्राप
श्यद्देवकन्यादिव्यरूपामनोरमाः ॥ ८८ ॥ चार्वंगीश्चारुनयनाःपीनोन्नतपयोधराः ॥ हारकंकणकेयूरनूपुरालंकृताःशुभाः ॥ ८९ ॥ पूजयं
तीर्महालक्ष्मींव्रतरूपेणचादरात् ॥ तवल्लकोपिप्रपच्छकिमिदंकथ्यतामिति ॥ ९० ॥ स्त्रियऊचुः ॥ महालक्ष्मीव्रतमिदंसर्वकामफलप्रदम् ॥
क्रियतेऽस्माभिरेकाग्रमनोभिस्त्वत्रभक्तितः ॥ ९१ ॥ तवल्लकोपितच्छ्रुत्वाव्रतंजग्राहभक्तिमान् ॥ तदनुज्ञांगृहीत्वाचजलमादायसत्वरः ॥
॥ ९२ ॥ आजगामजलंतस्मैदत्वाप्रांजलिरासह ॥ जलंपीत्वानृपस्तस्यदृष्टवान्दोरकंकरे ॥ ९३ ॥ किमिदंदोरकंविद्वन्किंव्रतंकृतवानसि ॥
राज्ञापृष्टस्तवल्लोपिकथयामासतद्व्रतम् ॥ ९४ ॥ तच्छ्रुत्वाराजशार्दूलोव्रतंजग्राहभक्तिमान् ॥ तवल्लकेनसहितोराजास्वपुरमाययौ ॥ ९५ ॥
पद्मावत्यागृहंगत्वातयारंतुंगतोरहः ॥ रममाणाथसादेवीतेनराज्ञाप्रियेणवै ॥ ९६ ॥ तंदृष्ट्वादोरकंहस्तेकुपिताऽत्यंतकोपना ॥ कयात्वंवंचि
तोब्रूहिकयाबद्धःसुदोरकः ॥ ९७ ॥ तस्यास्तद्वचनंश्रुत्वाप्रोवाचचनराधिपः ॥ मावादीरन्यथाह्येतल्लक्ष्मीव्रतमनुत्तमम् ॥ ९८ ॥ इत्युक्ता
पिप्रियेणासौहस्ताच्चिच्छेददोरकम् ॥ ज्वालामालाकुलेवह्नौक्षिप्तवत्यपिकोपिता ॥ ९९ ॥ हाहाकष्टमिदंपापंकृतंमूढतयात्वया ॥ इतिनिर्भ
र्त्स्यतांराजातत्याजवनगह्वरे ॥ १०० ॥ साचहानिंययौपापानचहानिंययौनृपः ॥ महालक्ष्म्यपचारेणसारण्येजलवर्जिते ॥ १ ॥ भ्रममाणा
वनेतस्मिन्नक्वचिद्रतिमापसा ॥ विचरंतीवनेतत्रऋषेःकस्याचिदाश्रमम् ॥ २ ॥ ददर्शमृगसंकीर्णंशांतकृष्णमृगान्वितम् ॥ तत्रापश्यद्वनेरम्ये
वसिष्ठंमुनिपुंगवम् ॥ ३ ॥ ववंदेचरणौतस्यविसंज्ञादुःखकर्शिता ॥ चिरंध्यात्वामुनिस्तस्याज्ञातवान्दुःखकारणम् ॥ ४ ॥ महालक्ष्म्यपचारेणज्ञातंवि

ज्ञानचक्षुषा॥तद्व्रतंकारयामासतयादुःखोपशांतये॥५॥तद्दुःखंतत्क्षणादेवविनष्टमभवत्तदा॥पुनश्चमृगयासक्तोभूपालोवनमाविशत् ॥६॥ क्वाचि
न्मृगंसमाविध्यबाणेनैकेनबाहुमान्॥अन्वगच्छन्मृगपदंतस्यांभुवियदागतः ॥७॥वरंमुनिंददर्शाग्रेवसिष्ठंवीतकल्मषम्॥कृतातिथ्यक्रियोदृष्ट्वाच
रंतींबहिरंतिके॥८॥हावभावविलासाद्यैर्हरंतींहरिणेक्षणाम्॥मदान्निर्गत्यनृपतिःप्रोवाचमधुरंवचः ॥९॥ रंभोरुकासिकल्याणिकिमर्थंचरसेवने ॥
किन्नरीमानुषीवात्वंयक्षिणीचारुहासिनी॥१०॥किमत्रबहुनोक्तेनभजमानंभजस्वमाम्॥नृपेणतेनभक्त्योक्तासास्मितावाक्यमब्रवीत्॥११॥पुन
र्भजामिचाहंत्वामवेहिमाहिषींतव ॥ महालक्ष्म्यपचारेणत्वयाहीनावसाम्यहम् ॥१२॥ मुनींद्रस्याश्रमेरम्येतरुगुल्मोपशोभिते ॥ ममोपरिकृपा
विष्टोमहालक्ष्मीव्रतोत्तमम् ॥ १३॥ कारयामासविधिवत्सर्वविघ्नोपशांतये ॥ तयोक्तंवचनंश्रुत्वासचोत्फुल्लविलोचनः॥१४॥ऋषेरनुज्ञामादाय
प्रियामादायसत्वरः ॥ हृष्टपुष्टजनैर्जुष्टंपताकाध्वजशोभितम्॥१५॥प्रविवेश[2]तयासार्द्धंसपौरैरभिवंदितः ॥ महालक्ष्मीव्रतंभूयस्तयासहचकारह
॥ १६ ॥ भुक्त्वेहभोगान्विपुलान्पुत्रपौत्रसमावृतः ॥ भूपालःसार्वभौमोभूत्तत्वल्लोऽमात्यतांययौ ॥ १७ ॥ महालक्ष्म्याःप्रसादेनसान्निधिःसर्व
संपदाम् ॥ एवंप्रभावासादेवीनराणामिष्टदायिनी ॥ १८ ॥ सर्वपापहरादेवीसर्वदुःखापहारिणी ॥ एवंषोडषवर्षंतुकर्तव्यंव्रतमुत्तमम् ॥
॥ १९ ॥ यःकरिष्यतितंप्रीत्यास्वयंसिद्धिरुपासते ॥ लोकपालाश्चतुष्यंतिददतिचमनोरथान् ॥ १२० ॥ नारीवापुरुषःकरिष्यतिमुदाभ
क्त्याव्रतंयत्नतः सेवंतेहरिरुद्रपद्मजसुराःकुर्वंतितस्यप्रियम् ॥ तत्पादंपरिरंजयंतिमनुजामौलिप्रभामंडलैस्तस्मिन्नेवकुटुंबिनीवसतिसाल

---

१ बसिष्ठाश्रमभूमौ । २ पुरमितिशेषः ।

क्ष्मीःस्वयंविष्णुना ॥ २१ ॥ सुभक्त्यावाप्यभक्त्यावाकुर्वीतिव्रतमुत्तमम् ॥ अंतकालेचतान्विष्णुःसंसारात्परिरक्षति ॥ २२ ॥ यइदंशृणु यान्नित्यंश्रावयेद्वासमाहितः ॥ नसंत्यजातितंलक्ष्मीरलक्ष्मीर्नैवजायते ॥ सर्वपापविनिर्मुक्तःस्वर्गलोकेमहीयते ॥ २३ ॥ इतिस्कंदपुरा णोक्तामहालक्ष्मीव्रतकथा ॥ अथभविष्योक्ताकथा ॥ युधिष्ठिरउवाच ॥ स्वस्थानलाभपुत्रायुःसर्वैश्वर्यसुखप्रदम् ॥ व्रतमेकंसमाचक्ष्वाविचार्य पुरुषोत्तम ॥ १ ॥ कृष्णउवाच ॥ दुर्वारेचैवदैत्येंद्रेपारिव्यातात्रिविष्टपे ॥ एतदेवकृतस्यादौदेवेंद्रःप्राहनारदम् ॥ २ ॥ तस्यश्रुत्वाततोवाक्यं समुनिःप्रत्यभाषत ॥ नारदउवाच ॥ पुरंदरपुरापूर्वंपुरमासीत्सुशोभितम् ॥ ३ ॥ रत्नगर्भाभवद्भूमिर्यत्ररत्नाढ्यभूधराः ॥ यत्रांगनाजनापां गभृंगलोचनसायकैः ॥ ४ ॥ त्रैलोक्यंस्ववशंचक्रेदेवःकुसुमसायकः ॥ चतुर्वर्गजानिर्यत्रयच्चविश्वस्यभूषणम् ॥ ५ ॥ विश्वकर्मापियद्वीक्ष्यकंप यत्यनिशंशिरः ॥ तत्राभवन्महीपालोमंगलोमंगलालयः ॥ ६ ॥ चिल्लदेवीप्रियातस्यदुर्भगैकाबभूवह ॥ अन्यातुचोलेदेवीयामहिषीसायश स्विनी ॥ ७ ॥ कदाचिन्मंगलोराजाचोलदेवीसहायवान् ॥ प्रासादशिखरारूढःस्थलीमेकामपश्यत ॥ ८ ॥ तामालोक्यमहीपालःस्मरस्मेर मुखांबुजः ॥ चोलदेवींप्रतिप्राहदंतद्योतितदिङ्मुखः ॥ ९ ॥ चंचलाक्षितवोद्यानंकांतिर्निंदितनंदनम् ॥ कारयामितयोद्दिष्टस्तत्रोद्या नमकारयत् ॥ १० ॥ संपन्नंतुतदुद्यानंनानाद्रुमलतान्वितम् ॥ नानाफलसमायुक्तंनानापक्षिसमावृतम् ॥ ११ ॥ तत्रागत्यमहा क्रोडस्तनुन्यस्तनभस्तलः ॥ प्रावृट्कालघनश्यामश्चक्षुराक्षितचंचलः ॥ १२ ॥ दंष्ट्रावकृष्टचंद्रार्कःप्रलयांभोधरध्वनिः ॥ उद्यानंभं

१ इत्युक्त्वेतिशेषः ।

जयामासनानाद्रुमलतान्वितम् ॥ १३ ॥ कांश्चिदुत्पाटयामासपादपान्पांडुनंदन ॥ कांश्चिद्दंतप्रहारेणकांश्चिद्दंतप्रघर्षणैः ॥ १४ ॥ जघान
कांश्चित्पुरुषात्रक्षकानंतकोपमः ॥ तद्भुनक्तीतिविज्ञायसंहत्योद्यानपालकाः ॥ १५ ॥ सभयास्तस्यवृत्तांतमूचुश्चनृपतेःपुरः ॥ तदाकर्ण्य
ततोराजाक्रोधारुणितलोचनः ॥ १६ ॥ वधायदंष्ट्रिणस्तस्यसंदिदेशाखिलंबलम् ॥ ततश्चचालभूपालस्त्रिगंडगलितैर्गजैः ॥ १७ ॥
आप्लावयन्महींसर्वांवाजिवृंदकृतांबराम् ॥ चालयन्सकलाञ्छैलान्स्यंदनौघमरुज्जवैः ॥ १८ ॥ पत्तिव्रातमहाध्वानैःपूरयन्निखिलादिशः ॥
ततोगाढंसमावृत्यतदुद्यानंनरेश्वरः ॥ १९ ॥ उवाचोच्चैरतिध्वानैर्दिशोमुखरयन्दश ॥ पथियस्यवराहोयंप्रयात्युपवनांतरम् ॥ २० ॥
तस्यावश्यंशिरश्छेदंविदधामिरिपोरिव ॥ तस्यभूपस्यतद्वाक्यंसमाकर्ण्यससूकरः ॥ २१ ॥ जगामास्यैवमार्गेणप्राणिनांचेष्टितंयथा ॥ ततः
संसूकरासक्तःकशयाऽश्वंप्रताड्यच ॥ २२ व्रीडाकलंकितास्येन्दुमार्गंतस्यैवसोगमत् ॥ गत्वाथविपिनंघोरंसिंहशार्दूलसंकुलम् ॥ २३ ॥
तमालतालहिंतालशालार्जुनलतान्वितम् ॥ झिल्लीझंकारसंभारवाचाटिततदिगंतरम् ॥ २४ ॥ तत्रैकचेताःसंपश्यवनेबभ्रामभूपतिः ॥ कोलो
वेलामवाप्याथसोभवद्राजसंमुखः ॥ २५ ॥ भल्लेनसोवधीत्कोलंवज्रेणाद्रिंयथाभवान् ॥ अथव्योम्निविमानस्थःस्मरसुंदरविग्रहः ॥ ४६ ॥
क्रोडरूपंपरित्यज्यसोब्रवीन्मंगलंनृपम् ॥ गंधर्वउवाच ॥ स्वस्तितेस्तुमहीपालत्वयामुक्तिःकृताम्म ॥ २७ ॥ ममाकर्णयवृत्तांतंयेनाहंजात
ईदृशः ॥ एकदादेवतावृंदैःसंवृतःकमलासनः ॥ २८ ॥ चंचत्पुटादिभिस्तालैःषड्जाद्यैःसप्तभिःस्वरैः ॥ मंद्रादिभिस्त्रिभिर्मानैर्गीयमानं

१ क्रुद्धोधराशक्रइत्यपिपाठः ।

मयानृप ॥ २९ ॥ नानास्थानगुणोपेतमश्रौषीद्गीतमुत्तमम् ॥ गीयमानश्च्युतःस्थानात्ततोहंकर्मणाऽमुना ॥ ३० ॥ शप्तश्चित्ररथ[1]स्ते
नब्रह्मणासृष्टिकर्मणा ॥ ब्रह्मोवाच ॥ कोलेभवत्त्वंमेदिन्यांमुक्तिस्तेऽस्तुतदायदा ॥ ३१ ॥ निर्जिताखिलभूपालोमंगलस्त्वांहनिष्यति ॥
तदद्यघटितंसर्वंत्वत्प्रसादान्महीपते ॥ ३२ ॥ तद्गृहाणवरंभूपयद्देवस्यापिदुर्लभम् ॥ महालक्ष्मीव्रतंदिव्यंचतुर्वर्गफलप्रदम् ॥ ३३ ॥
लभस्वसार्वभौमत्वंगच्छराज्यंनिजंद्रुतम् ॥ नारदउवाच ॥ चित्ररथोऽथगंधर्वउक्त्वेदंभूपतिंप्रति ॥ ३४ ॥ अंतर्धानंगतस्तुष्टःशरत्कालइवां
बुदः ॥ अथमंगलभूपालःपार्श्वस्थंद्विजमागतम् ॥ ३५ ॥ विलोक्यबटुकंकंचित्कक्षानिक्षिप्त[2]शंबलम् ॥ उवाचमधुरांवाचंस्मितपूर्वांशु
चिस्मितः ॥ ३६ ॥ देवस्त्वंदानवस्त्वंवागंधर्वोवाऽथराक्षसः ॥ सत्यंवदबटोकस्मात्किमर्थंत्वमिहागतः ॥ ३७ ॥ श्रुत्वेत्याशिष्यतंविप्रः
प्राहत्वद्देशसंभवः ॥ अहंसार्द्धंत्वयायातस्तदादिशय[3]थोचितम् ॥ ३८ ॥ राजाथतमुवाचेदंत्वंबटोनूतनाह्वयः ॥ अपल्याणंविधायाश्वंतूर्णंतोयं
ममानय ॥ ३९ ॥ अथविश्राम्यभूपालंबटुकोवटपादपे ॥ तथाकृतंतुरंगंचसमारुह्यमहामतिः ॥ ४० ॥ जगामपक्षिघोषेणयत्रास्तेसुंदरंसरः ॥
कमलैकानिवासेनरथांगाभरणेनच ॥ ४१ ॥ वनमालालयत्वेनद[4]धन्नारायणींतनुम् ॥ भग्नवायुशतोद्योगमक्षारंविषवर्जितम् ॥ ४२ ॥ नाशि
तागस्तितृष्णार्तिंप्रसन्नंसागराधिकम् ॥ पंकेमग्नोथतत्राश्वःपृष्ठादुत्तीर्यतस्यसः ॥ ४३ ॥ चतुर्दिशंनिरीक्ष्याथतस्यैवसरसस्तटे ॥ दिव्यव
स्त्रपरीधानंदिव्याभरणभूषितम् ॥ ४४ ॥ कथयंतंकथांदिव्यांस्त्रीणांसार्थमदृश्यत ॥ उपसृत्याथतंसार्थंस्ववृत्तांतंनिवेद्यच ॥ ४५ ॥ कृतांज

१ अहमितिशेषः । २ पाथेयम् । ३ करोमिकिमित्यपिपाठः । ४ बिभ्रदित्यपिपाठः ।

लिरितिप्राहबटुर्मधुरयागिरा ॥ बटुरुवाच ॥ एतत्किंक्रियतेसार्थत्वयाभक्तिपरेणवै ॥ ४६ ॥ कोविधिःकिंफलंचास्यब्रूहितन्मेयथातथम् ॥
श्रुत्वाचतमुवाचेदंसार्थःकरुणयागिरा ॥ ४७ ॥ सार्थउवाच ॥ ॥ शृणुविप्रैकचित्तेनश्रद्धाभक्तिसमन्वितः ॥ यामायाप्रकृतिःशक्तिस्त्रैलो
क्येप्यभिधीयते ॥ ४८ ॥ व्रतमेतन्महालक्ष्म्यास्तस्याःसर्वफलप्रदम् ॥ आकर्णयविधिंचास्यकथ्यमानंमयाबटो ॥ ४९ ॥ भाद्रेमासिसि
ताष्टम्यामारंभोस्यविधीयते ॥ प्रातःषोडशकृत्वस्तुप्रक्षाल्यांघ्रिकरौमुखम् ॥ ५० ॥ तंतुषोडशसंसिद्धंग्रंथिषोडशसंयुतम् ॥ मालतीपु
ष्पकर्पूरचंदनागुरुचर्चितम् ॥ ५१ ॥ लक्ष्म्यैनमोस्तुमंत्रेणप्रतिग्रंथ्यभिमंत्रितम् ॥ धनंधान्यंधरांधर्मंकीर्तिमायुर्यशःश्रियम् ॥ ५२ ॥ तुर
गान्दंतिनःपुत्रान्महालक्ष्मिप्रयच्छमे ॥ मंत्रेणानेनबद्धाथदोरकंदक्षिणेकरे ॥ ५३ ॥ कांडानिषोडशादायदूर्वायाश्चाक्षतानिच ॥ एकचि
त्तःकथांश्रुत्वापूजयेत्तैश्चदोरकम् ॥ ५४ ॥ ततस्तुप्रातरारभ्ययावत्स्यादसिताष्टमी ॥ तावत्प्रक्षाल्यहस्तौतुपादादीनिकथांतथा ॥ ५५ ॥
शृणुयात्प्रत्यहंविप्रतत्संख्यैरक्षतादिभिः[1] ॥ अथकृष्णाष्टमींप्राप्यनक्तकालेजितेंद्रियः ॥ ५६ ॥ स्नातःशुक्लांबरधरोव्रतीपूजागृहंविशेत् ॥ तत्रो
पविश्यपूर्वास्यश्चारुधौतासनोपरि॥५७॥श्वेतवस्त्रेलिखेदष्टदलंकमलमुत्तमम्॥ऐंद्र्यादिशक्तिसंयुक्तपार्श्वपत्रंसकेसरम् ॥ ५८ ॥ कर्णिकायांततो
लक्ष्मींकर्पूरक्षोदपांडुराम्॥शुभ्रवस्त्रपरीधानांमुक्ताभरणभूषिताम् ॥५९॥ पंकजासनसंस्थानांस्मेराननसरोरुहाम् ॥ शारदेंदुकलाकांतिंस्निग्धने
त्रांचतुर्भुजाम्॥६०॥पद्मयुग्मामभयदांवरव्यग्रकरांबुजाम्॥अभितोगजयुग्मेनसिच्यमानांकरांबुना ॥ ६१ ॥ संचिंत्यैवंलिखेद्देवींकर्पूरागुरुचंद

१ अक्षतदूर्वाकांडादिभिः ।

दनैः॥ततस्त्वावाहनंकुर्यान्मंत्रेणानेनसुव्रती॥६२॥महालक्ष्मिसमागच्छपद्मनाभपदादिह॥पंचोपचारपूजेयंत्वदर्थेदेविकल्पिता[1] ॥६३॥षोडशा
ब्देतुसंपूर्णेकुर्यादुद्यापनंव्रती॥विधिनायेनविप्रेंद्रश्शृणुश्रद्धासमन्वितः ॥६४॥ दातव्याधेनुरेकावैस्वर्णशृंगादिसंयुता ॥ श्रोत्रियायसुवर्णंचतथान्न
वसनादिकम् ॥ ६५ ॥ यथाशक्त्यासुवर्णंचदत्वापूर्णंभवेद्व्रतम् ॥ द्विजेभ्यःषोडशभ्यश्चप्रदद्याद्वसनादिकम् ॥ ६६ ॥ सार्थउवाच ॥ एतत्ते
कथितंविप्रव्रतानामुत्तमंव्रतम् ॥ तद्विधानादनायासाल्लभतेवांछितंफलम् ॥ ६७ ॥ कृत्वाव्रतंपरंविप्रत्वंराज्ञातच्चकारय ॥ व्रतमेतत्त्वयाविप्र
देयंश्रद्धावतेपरम् ॥ ६८ नास्तिकानांपुरस्तात्तुनप्रकाश्यंकथंचन ॥ नमस्कृत्वाथतंसार्थंपंकादुत्थाप्यवाजिनम् ॥ ६९ ॥ सरसोंभस्तथा
दायपद्मिनीपत्रयंत्रितम् ॥ आरुह्यतुरगंविप्रोराजांतिकमुपागमत् ॥ ७० ॥ निवेद्यतद्व्रतंविप्रोराजानंतदकारयत् ॥ नानाप्रकारसंभूतंशंबलं
बटुकस्यच ॥ ७१ ॥ व्रतप्रभावादभवत्सभूभृद्भूभृतांवरः ॥ अथारुह्यमहीपालोबटुपर्याणितंहयम् ॥ ७२ ॥ तद्व्रतस्यप्रभावेणतूर्णंस्वपुरमागतः॥
तमायांतंसमालोक्यराजानंभूपुरंदरम् ॥ ७३ ॥ उत्सवंचाक्रिरेपौरास्तूर्यादिकपुरःसराः ॥ चलत्पताकदोर्मालंलसत्कलशमौलिकम् ॥ ७४ ॥
पुरंनृत्यदिवाभातिच्छत्रघंटौघघर्घरैः ॥ अथोत्कलिकयाकाचिद्धावतिस्मवरांगना ॥ ७५ ॥ स्खलन्मुक्तालताजालैश्चतुष्कमिवकुर्वती॥काचि
द्विमुक्तकेशैवकृतैकनयनांजना ॥ ७६ ॥ काचिन्नितंबभारार्ताकाचित्पीनपयोधरा ॥ अथाविशन्महीपालोबटुनासहितोगृहम् ॥ ७७ ॥ पौर

---

१ यद्यप्येतदुत्तरमालयस्तेहिकथितइतिस्थापनमंत्रप्रभृतिपंकजंदेविसंत्यज्येतिविसर्जनमंत्रांतोग्रंथोव्रतार्कप्रभृतिष्वधिकउपलभ्यतेतथाप्येतद्ग्रंथकृतायकथेत्यतःप्रागेवपूजाप्रकारोलिखितस्तत्रैवैतन्मंत्राणांलि
खितत्वादत्रनलिखितास्ते ॥

नारीजनक्षिप्तलाजैः पूरितविग्रहः ॥ अथोत्तीर्यहयात्तस्माद्वटुबाह्ववलंबितः ॥ ७८ ॥ जगाममंगलोराजाचोलदेवीतुयत्रवै ॥ दृष्ट्वातुचोलदेवीसा
दोरकंराजबाहुके ॥ ७९ ॥ विमृश्यमनसाक्रुद्धाशंकांचक्रेनृपेत्विमाम् ॥ आखेटकस्यव्याजेनगतोन्यांवल्लभांप्रति ॥ ८० ॥ सौभाग्यायतया
बद्धोदोरकोराजबाहुके ॥ तथैवबटुकश्चायंद्रष्टुंमांप्रेषितोध्रुवम् ॥ ८१ ॥ ततोदुर्दैवदुष्टात्माकोपादाच्छिद्यदोरकम् ॥ चिक्षेपचमहीपृष्ठेस्वसौ
भाग्यसुखैःसह ॥ ८२ ॥ नबुबोधचतांराजात्रोटयंतींचदोरकम् ॥ सामंतमंत्रिभृत्याद्यैःकुर्वन्वार्तांवनोद्भवाम् ॥ ८३ ॥ चिल्लदेव्यास्तदाका
चिद्दासीद्रष्टुंसमागता ॥ तयादोरकमादायबटुमापृच्छ्यतद्व्रतम् ॥ ८४ ॥ तद्व्रतस्यविधानंचस्वस्वामिन्यैनिवेदितम् ॥ ततोनूतनमाहूयाचि
ल्लदेव्यकरोद्व्रतम् ॥ ८५ ॥ अथसंवत्सरेऽतीतेलक्ष्मीपूजादिनेनृप ॥ तौर्यत्रिकस्यनिस्वानंचिल्लदेव्यागृहेश्शृणोत् ॥ ८६ ॥ तदाकर्ण्यमहीपा
लोनूतनंबटुमब्रवीत् ॥ अहहाद्यदिनंलक्ष्म्याःसव्रतस्यक्वदोरकः ॥ ८७ ॥ इतिपृष्टोनृपंप्राहदोरकत्रोटनक्रमम् ॥ तच्छ्रुत्वामंगलोराजाचोलदे
व्यैप्रकुप्यच ॥ ८८ ॥ मयाद्यपूजनंकार्यंचिल्लदेवीगृहंप्रति ॥ अथमंगलभूपालोबटुबाह्ववलंबितः ॥ ८९ ॥ चचालकमलार्चायैचिल्लदेवीगृहं
प्रति ॥ ९० ॥ अत्रांतरेमहालक्ष्मीर्वृद्धारूपंविधायच ॥ जिज्ञासार्थंगृहंतस्याश्चोलदेव्याःसमागता ॥ ९१ ॥ गच्छगच्छाद्यदुष्टेकिमिहागत्य
करोषिमे ॥ तयादुराशयात्यर्थंलक्ष्मीःसाप्यवमानिता ॥ ९२ ॥ चोलदेवींशशापाथमहालक्ष्मीरतिक्रुधा ॥ कोलास्याभवदुष्टेत्वंयतो
हमवमानिता ॥ ९३ ॥ चोलदेवीश्रियःशापात्कोलास्यातत्रसाभवत् ॥ कोलापुरमितिख्यातंक्षितौतन्मंगलंपुरम् ॥ ९४ ॥ अथायाता
महालक्ष्मीश्चिल्लदेवीनिकेतनम् ॥ बहुधाचिल्लदेव्यासालक्ष्मीः संमानितार्चिता ॥ ९५ ॥ वृद्धारूपंपरित्यज्यप्रत्यक्षासाभवत्तदा ॥

पंचोपचारपूजाभिःश्रियंराज्ञीततोर्चयत् ॥ ९६ ॥ अतितुष्टाततोलक्ष्मीश्चिल्लदेवीमुवाचह ॥ लक्ष्मीरुवाच ॥ अर्चनात्तेप्रसन्नास्मिचिल्लदे त्रिवरंवृणु ॥ ९७ ॥ वव्रेवरंततोराज्ञीचिल्लदेवीशुभाशया ॥ चिल्लदेव्युवाच ॥ येकरिष्यंतितेतेदेविव्रतमेतत्सुरेश्वरि ॥ ९८ ॥ तद्वेश्मन त्वयात्याज्यंयावच्चंद्रदिवाकरौ ॥ अद्यारभ्यकथाह्येषाभूपसंबंधिनीतुया ॥ ९९ ॥ ख्यातिंयातुक्षितौदेविभक्तिर्भवतुमेत्वयि ॥ सद्भावेनकथामे तांयेशृण्वंतिपठंतिच ॥ १०० ॥ तेषांचवांछितंसर्वंत्वयादेयंसदैवहि ॥ तथेत्युक्त्वामहालक्ष्मीस्तत्रैवांतरधीयत ॥ १ ॥ अथमं गलभूपालस्तत्रागत्यश्रियोर्चनम् ॥ चक्रेपरमयाभक्त्याचिल्लदेव्यासमन्वितः ॥ २ ॥ अथेर्ष्ययादुराचाराचिल्लदेवीगृहंप्रति ॥ चोलदेवी समायाताद्वारस्थैर्वारिताजनैः ॥३॥ ततोजगामविपिनंयत्रासीदंगिरामुनिः ॥ अथालोक्याद्भुताकारांज्ञानदृष्ट्याविचिंत्यताम् ॥ ४ ॥ मुनिस्तु श्रीव्रतंदिव्यंचोलदेवीमकारयत् ॥ व्रतेकृतेऽथसंजाताचोलदेवीमहायशाः ॥५॥ दाक्षिण्यकेलिलीलाभिर्लावण्यैकनिकेतनम् ॥ ततःकदाचिदा गत्यवनमाखेटकेनृपः ॥६॥ मुनेर्वेश्मनिराजातांददर्शवामलोचनाम् ॥ अथराजामुनिंप्राहकेयंधन्येतिकथ्यताम् ॥ ७ ॥ तद्वृत्तांतंसमाख्यायराज्ञे तांप्रददौमुनिः ॥ अथागत्यनिजंराज्यंचोलदेवीसमन्वितः ॥ ८ ॥ चिल्लदेव्याचसहितोबुभुजेमंगलोनृपः ॥ चिल्लदेवीवरंचक्रेचोलदेवीस मागमम् ॥ ९ ॥ समुद्रस्ययथागंगायमुनेसंगतेसदा ॥ तथामंगलभूपस्यजातेतेवामलोचने ॥ १० ॥ परस्पराधिकेतेतुप्रियेराज्ञोबभूवतुः ॥ चिल्लदेव्यासमंसोथचोलदेव्यासहाखिलाम् ॥ ११ ॥ सप्तद्वीपवतींपृथ्वींबुभुजेमंगलोनृपः ॥ व्रतस्यास्यैवसामर्थ्याद्वटुकःसोपिनूतनः ॥१२॥ अभून्मंगलभूपस्यमंत्रीतवयथागुरुः ॥ भुक्त्वाथसकलान्भोगान्मंगलोभूभुजांवरः ॥ १३ ॥ सपुनःस्वर्गमेत्याभून्नक्षत्रंविष्णुदैवतम् ॥ नारद

उवाच ॥ एतत्तेकथितंशक्रव्रतानामुत्तमंव्रतम् ॥ १४ ॥ यत्कथाश्रवणेनापिलभतेवाञ्छितंफलम् ॥ प्रयागमिवतीर्थेषुदेवेषुभगवानिव ॥१५॥
नदीषुचयथागंगाव्रतेष्वेतेषुतद्व्रतम् ॥ धर्मंचार्थंचकामंचमोक्षंचयदिवाञ्छसि ॥ १६ ॥ तर्हीदंचव्रतंशक्रकुरुश्रद्धासमन्वितः ॥ धनंधान्यंधरां
धर्मंकीर्तिमायुर्यशःश्रियम् ॥ तुरंगान्दंतिनःपुत्रान्महालक्ष्मीःप्रयच्छति ॥ १७ ॥ श्रीकृष्णउवाच ॥ व्रतमिदमथचक्रेनारदेनोपदिष्टंसुरपतिर
पियस्माद्वाञ्छितार्थंसलेभे ॥[१]त्वमपिकुरुतथैतद्धर्मसूनोयथास्यादभिमतफलसिद्धिःपुत्रपौत्राभिवृद्धिः ॥ १८ ॥ इतिश्रीभविष्योक्ता महाल
क्ष्मीव्रतकथासंपूर्णा ॥ ॥ अथआश्विनशुक्लाष्टमीमहाष्टमी ॥ तत्राष्टम्यांभद्रकालीदक्षयज्ञविनाशिनी ॥ प्रादुर्भूतामहाघोरायोगिनीकोटिभि
र्वृता ॥ इयंचसप्तमीविद्धानकार्या ॥ तदुक्तंदेवीपुराणे ॥ सप्तमीवेधसंयुक्तायैःकृतातुमहाष्टमी ॥ पुत्रदारधनैर्हीनाभ्रमंतीहपिशाचवत् ॥
शरज्जन्माष्टमीपूज्यानवमीसंयुतासदा ॥ सप्तमीसंयुतानित्यंशोकसंतापकारिणी ॥ जंभेनसप्तमीयुक्तापूजिताचमहाष्टमी ॥ इंद्रेणनिहतोजंभ
स्तस्यांदानवपुंगवः॥तस्मात्सर्वप्रयत्नेनसप्तमीसहिताष्टमी ॥वर्जनीयाचसततंमनुष्यैःशुभकांक्षिभिः॥सप्तमीकलयायत्रपरतश्चाष्टमीतथा॥तेनश
ल्यमिदंप्रोक्तंपुत्रपौत्रक्षयप्रदम् ॥ पुत्रान्हंतिपशून्हंतिराष्ट्रंहंतिसराजकम् ॥ हंतिजानपदांश्चापिसप्तमीसहिताष्टमी ॥ शुक्लपक्षेष्टमीचैवशुक्लपक्षेचतु
र्दशी ॥ पूर्वविद्धानकर्तव्याकर्तव्यापरसंयुता॥अत्रत्रिमुहूर्तन्यूनापिसप्तमीवर्जनप्रयोजिकानतुत्रिमुहूर्तैव ॥सप्तमीस्वल्पसंयुक्तावर्जनीयासदाष्टमी
॥ स्तोकापिसातिथिः[२]पुण्यायस्यांसूर्योदयोभवेत् ॥ नवमीयुक्तायाअलाभेतुसप्तमीयुतैवकार्या॥उपवासंमहाष्टम्यांपुत्रवान्नसमाचरेत् ॥सप्तशत्या

---

१ एतदुत्तरंसविस्तरउद्यापनाविधिर्व्रतार्केउक्तस्ततएवावगंतव्यः । २ अष्टमी ।

स्तुपाठेनतोषयेज्जगदंबिकाम् ॥ अथआश्विनकृष्णाष्टम्यामशोकाष्टमीव्रतम् ॥ हेमाद्रावादित्यपुराणे ॥ अष्टमीषुचसर्वासुपूजनीयाह्यशोकि
का ॥ गंधमाल्यनमस्कारधूपैर्दीपैश्चसर्वदा ॥ तस्मिन्नहनियाभुंक्तेनक्तमिंदुविवर्जिते ॥ भवत्यथविशोकासायत्रयत्राभिजायते ॥ अष्टमीषुच
सर्वासुनचेच्छक्नोतिवैमुने ॥ प्रौष्ठपद्यामतीतायांभवेत्कृष्णाष्टमीतुया ॥ तत्रकार्यंव्रतंत्वेतत्सर्वकामफलप्रदम् ॥ इत्यशोकाष्टमी ॥ अथमा
र्गशीर्षकृष्णाष्टमीकालभैरवाष्टमी ॥ साचरात्रिव्यापिनीग्राह्या ॥ मार्गशीर्षासिताष्टम्यांकालभैरवसन्निधौ ॥ उपोष्यजागरंकुर्वन्सर्वपापैःप्रमुच्य
ते इतिकाशीखंडाद्रात्रिव्रतत्वावगतेः ॥ रुद्रव्रतेषुसर्वेषुकर्तव्यासंमुखीतिथिरितिब्रह्मवैवर्ताच्च ॥ दिनद्वयेऽशतोरात्रिव्याप्तावुत्तरैव ॥ भैरवो
त्पत्तेःप्रदोषकालीनत्वादितिकेचित् ॥ तन्न ॥ शिवरहस्येमध्याह्नेभैरवोत्पत्तेःश्रवणात् ॥ तथाचतत्रैव ॥ नित्ययात्रादिकंकृत्वामध्या
ह्नेसंस्थितेरवावित्युपक्रम्यब्रह्मणारुद्रेऽवज्ञातेउक्तम् ॥ तदोग्ररूपादनघान्मत्तःश्रीकालभैरवः ॥ आविरासीत्तदालोकान्भीषयन्नखिलानपीति ॥
अत्रकालभैरवपूजोक्ताकाशीखंडे ॥ कृत्वाचविविधांपूजांमहासंभारविस्तरैः ॥ नरोमार्गासिताष्टम्यांवार्षिकंविघ्नमुत्सृजेत् ॥ तथापितृतर्पण
मपितत्रैवोक्तम् ॥ तीर्थेकालोदकेस्नात्वातर्पणंविधिपूर्वकम् ॥ विलोक्यकालराजानंनिरयादुद्धरेत्पितॄन् ॥ अथकृष्णाष्टमीव्रतकथा ॥
॥ सूतउवाच ॥ व्रतानिचप्रवक्ष्यामिशृणुध्वंमुनिपुंगवाः ॥ तत्रकृष्णाष्टमीपुण्यासर्वपापप्रणाशिनी ॥ १ ॥ विष्णुत्वंप्राप्तवान्विष्णुःसुरेशत्वं
शचीपतिः ॥ कुबेरोयक्षराजत्वंनियंतृत्वंयमःस्वयम् ॥२॥ चंद्रश्चंद्रत्वमापन्नोगणेशत्वंगणाधिपः ॥स्कंदःसेनापतित्वंचतथाचान्यगणेश्वराः ॥३॥

१ दीपान्नसंपदाइत्यपिपाठः ।

कृत्वाचैश्वर्यमापन्नाःसौभाग्यंदेववल्लभाः ॥ व्रतस्यास्यप्रभावेणलक्ष्म्याःपतिरभूद्धरिः ॥ ४ ॥ ययातिःसार्वभौमत्वंतथाचान्येनृपोत्तमाः ॥ ऋषयोमुनयःसिद्धगंधर्वाणांचकन्यकाः ॥ ५ ॥ कृत्वावै[1]परमांसिद्धिंप्राप्ताश्चमुनिपुंगवाः ॥ नंदीश्वरेणयत्प्रोक्तंनारदायमहात्मने ॥ ६ ॥ कृष्णाष्टमीव्रतंश्रेष्ठंसर्वकामफलप्रदम् ॥ मेरोर्यद्दक्षिणंशृंगंसुरासुरनमस्कृतम् ॥ ७ ॥ तत्रनंदीश्वरंदृष्ट्वासर्वज्ञंशंभुवल्लभम् ॥ उपास्यमानंमुनिभिःस्तूयमानंमरुद्गणैः ॥ ८ ॥ सर्वानुग्रहकर्तारंस्तुत्वातुविविधैःस्तवैः ॥ अब्रवीत्प्रणिपत्याथदंडवन्नारदोमुनिः ॥ ९ ॥ नारदउवाच ॥ भगवन्सर्वतत्त्वज्ञसर्वेषामभयप्रद ॥ केनव्रतेनभगवंस्तपोवृद्धिःप्रजायते ॥ १० ॥ सौभाग्यंकांतिरैश्वर्यमपत्यंचयशस्तथा ॥ शाश्वतीमुक्तिरंतेचकर्मपाशविमोचनी ॥ ११ ॥ भगवंस्तद्व्रतंब्रूहिकारुण्याच्छंकरप्रिय ॥ नंदिकेश्वरउवाच ॥ कृष्णाष्टमीव्रतंश्रेष्ठमस्तिनारदतच्छृणु ॥ १२ ॥ गणेशत्वंमयालब्धंयेनपुण्येनभोमुने ॥ मासिमार्गशिरेप्राप्तेकृष्णाष्टम्यांजितेंद्रियः ॥ १३ ॥ अश्वत्थस्यचकाष्ठेनकृत्वावैदंतधावनम् ॥ स्नानंकृत्वातुविधिवत्तर्पणंचैवनारद ॥ १४ ॥ आगत्यभवनंचैवपूजयेच्छंकरंप्रभुम् ॥ गोमूत्रंप्राश्यविधिवदुपवासीभवेन्निशि ॥ १५ ॥ अतिरात्रस्ययज्ञस्यफलंचाष्टगुणंलभेत् ॥ सर्पिषःप्राशनंपौषेदंतकाष्ठंचतत्[3]स्मृतम् ॥ १६ ॥ पूजयेच्छंभुनामानंभगवंतंमहेश्वरम् ॥ वाजपेयाष्टकंपुण्यंप्राप्नोतिश्रद्धयान्वितः ॥ १७ ॥ माघेवटस्यकाष्ठंचगोक्षीरप्राशनंस्मृतम् ॥ महेश्वरंसुसंपूज्यगोमेधाष्टगुणंफलम् ॥ १८ ॥ फाल्गुनेदंतकाष्ठंतत्सर्पिषःप्राशनंस्मृतम् ॥ संपूजयेन्महादेवंराजसूयाष्टकंफलम् ॥ १९ ॥ काष्ठमौदुंबरंचैत्रेप्राशनेभर्जितायवाः ॥ पूजयेच्छंभुनामान

---

१ अप्सरसः । २ व्रतमितिशेषः । ३ अश्वत्थकाष्ठम् । ४ वटसम्बन्धि ।

मश्वमेधफलंलभेत् ॥ २० ॥ शिवंसंपूज्यवैशाखेपीत्वाचैवकुशोदकम् ॥ नरमेधाष्टकंपुण्यंप्राप्नोत्येवहिनारद ॥ २१ ॥ ज्येष्ठेप्लाक्षंभवेत्काष्ठं संपूज्यपशुपतिंविभुम् ॥ गवांशृंगोदकंप्राश्यस्वपेद्देवस्यसंन्निधौ ॥ २२ ॥ गवांकोटिप्रदानस्ययत्फलंतदवाप्नुयात् ॥ आषाढेचोग्रनामान मिष्ट्वासंप्राश्यगोमयम् ॥ २३ ॥ सौत्रामणेस्तुयज्ञस्यफलमष्टगुणंलभेत् ॥ पालाशंश्रावणेकाष्ठंशर्वंसंपूज्यनारद ॥ २४ ॥ प्राशयित्वार्कप त्राणिकल्पंशिवपुरेवसेत् ॥ मासेभाद्रपदेऽष्टम्यांत्र्यंबकंसंप्रपूजयेत् ॥ २५ ॥ प्राशनंबिल्वपत्रस्यसर्वदीक्षाफलंलभेत् ॥ आश्विनेजंबुवृक्ष स्यदंतकाष्ठमुदीरितम् ॥ २६ ॥ ईश्वरंपूजयेद्भक्त्याप्राशयेत्तंडुलोदकम् ॥ पौंडरीकस्ययज्ञस्यफलमष्टगुणंलभेत् ॥ २७ ॥ मासेतुकार्तिकेऽष्ट म्यामीशानाख्यंप्रपूजयेत् ॥ पंचगव्यंसकृत्पीत्वाअग्निष्टोमफलंलभेत् ॥ २८ ॥ उद्यापनंचवर्षांतेप्रकुर्याद्भक्तितत्परः ॥ विरच्यलिंगतोभद्रंपू जयेत्सर्वदेवताः ॥२९॥ वितानंतत्रबध्नीयात्पंचवर्णंसुशोभनम् ॥ आचार्यंवरयित्वाचगौर्यारुद्रस्यसंयुताम् ॥ ३० ॥ सुवर्णप्रतिमांतत्रवृषभंर जतस्यच ॥ कलशेपूजयित्वाचरात्रौजागरमाचरेत् ॥ ३१ ॥ प्रभातेचपुनःपूज्यअग्निस्थापनमाचरेत् ॥ हुनेदष्टशतंचैवतिलद्रव्यंघृतप्लुतम् ॥ ॥ ३२ ॥ त्र्यंबकेणचमंत्रेणगौर्याश्चैवपृथक्पृथक् ॥ वर्षांतेभोजयेद्विप्रान्छिवभक्तिसमन्वितान् ॥३३॥ पायसंघृतसंयुक्तंमधुनाचपरिप्लुतम् ॥ शक्त्याहिरण्यवासांसिभक्त्यातेभ्योनिवेदयेत् ॥ ३४ ॥ देवायचापिदध्यन्त्रंवितानंध्वजचामरम् ॥ कृष्णांपयस्विनींगांचसघंटांवाससायुताम् ॥ ॥ ३५ ॥ सरत्नदोहकलशीमलंकृत्यचनारद ॥ अलंकारंचवस्त्रंचदक्षिणांचस्वशक्तितः ॥ ३६ ॥ भक्त्याप्रणम्यविधिवदाचार्यायनिवेदयेत् ॥

१ दंतकाष्ठंपूर्वोक्तमेव । २ दंतकाष्ठंतुप्लाक्षमेव । ३ दंतकाष्ठंपालाशमेव । ४ दंतकाष्ठंजंबूवृक्षस्य ।

करोत्येवंव्रतंपुण्यंवर्षमेकंनिरंतरम् ॥ ३७ ॥ महापातकनिर्मुक्तः सर्वैश्वर्यसमन्वितः ॥ कल्पकोटिशतंसाग्रंशिवलोकेमहीयते ॥ ३८ ॥ कृ
ष्णाष्टमीव्रतंसम्यग्देवर्षेकथितंमया ॥ यदुक्तंदेवदेवेनदेव्यैविश्वसृजापुरा ॥ ३९ ॥ सूतउवाच ॥ एवंनंदीश्वराच्छ्रुत्वानारदोमुनिपुंगवः ॥ कृ
ष्णाष्टमीव्रतंपुण्यंययौबदरिकाश्रमम् ॥ ४० ॥ व्रतस्यास्यप्रभावंयःपठेद्वाशृणुयादपि ॥ सयातिपरमंस्थानंयत्रदेवोमहेश्वरः ॥ ४१ ॥ इति
श्रीआदित्यपु० कृष्णाष्टमीव्रतंनामएकादशोऽध्यायः ॥ इत्यष्टमीव्रतानिसमाप्तानि ॥ ॥ अथनवमीव्रतानिलिख्यंते ॥ ॥ तत्र
चैत्रशुक्लनवम्यांरामनवमीव्रतम् ॥ इदंचपरविद्धायांमध्याह्नव्यापिन्यांकार्यम् ॥ तदुक्तमगस्त्यसंहितायाम् ॥ चैत्रशुक्लातुनवमीपुनर्वसुयुतायदि ॥
सैवमध्याह्नयोगेनमहापुण्यतमाभवेत् ॥ दिनद्वयेऋक्षयोगेमध्याह्नव्याप्तावेकदेशव्याप्तौवापराऽन्यथापूर्वा ॥ तदुक्तंतत्रैव ॥ नवमीचाष्टमीविद्धात्या
ज्याविष्णुपरायणैः ॥ उपोषणंनवम्यांवैदशम्यांपारणंभवेत् ॥ तत्रैव ॥ चैत्रमासेनवम्यांतुजातोरामःस्वयंहरिः ॥ पुनर्वस्वृक्षसंयुक्तासातिथिःस
र्वकामदा ॥ श्रीरामनवमीप्रोक्ताकोटिसूर्यग्रहाधिका ॥ केवलापिसदोपोष्यानवमीशब्दसंग्रहात् ॥ तस्मात्सर्वात्मनासर्वैःकार्यैवनवमीव्रत
म् ॥ तत्रैव ॥ चैत्रेनवम्यांप्राक्पक्षेदिवापुण्येपुनर्वसौ ॥ उदयेगुरुगौरांशेस्वोच्चस्थेग्रहपंचके ॥ मेषंपूषणिसंप्रातेलग्नेकर्कटकाह्वये ॥ आविरा
सीत्सकलयाकौसल्यायांपरः पुमान् ॥ प्राक्पक्षेशुक्लपक्षे ॥ उदयेलग्ने ॥ गुरुगौरांशेगुरुनवमांशे ॥ अस्यामेवोपोषणपूर्वकंश्रीरामप्रतिमादानमु
क्तंतत्रैव ॥ तस्यप्रयोगः ॥ अष्टम्यांप्रातर्नित्यकृत्यंविधायदंतधावनपूर्वकंनद्यादौस्नात्वागृहमागत्यवेदशास्त्रपारगंरामभक्तंविप्रमाह्वानपूर्वकंवस्त्रा
लंकारादिभिःसंपूज्य ॥ श्रीरामप्रतिमादानंकरिष्येहंद्विजोत्तम ॥ तत्राचार्योभवप्रीतःश्रीरामोसित्वमेवमेइतिमंत्रेणतंप्रार्थयेत ॥ ततः ॥ नवम्यां

अंगभूतेनएकभक्तेनराघव ॥ इक्ष्वाकुवंशतिलकप्रीतोभवभवप्रिय ॥ इत्येकभक्तंसंकल्प्यसाचार्यांहविष्यंभुक्त्वारामकथाःशृण्वन्नात्रावधःशा
यीभवेत् ॥ ततःप्रातर्नित्यविध्यनंतरंस्वगृहोत्तरभागेशंखचक्रहनुमद्युतप्राग्द्वारंगरुत्मच्छार्ङ्गबाणयुतदक्षिणद्वारंगदाखड्गांगदयुतंपश्चिमद्वारं
पद्मस्वस्तिकनीलयुतोत्तरद्वारमध्येहस्तचतुष्कविस्तारंवेदिकायुतंसुवितानंसुतोरणंपूजामंडपंविधायोपवाससंकल्पपूर्वकंप्रतिमादानम् ॥ उ
पोष्येनवमींत्वद्ययामेष्वष्टसुराघव ॥ तेनप्रीतोभवत्वंमेसंसारात्त्राहिमांहरे ॥ अस्यांरामनवम्यांतुरामाराधनतत्परः ॥ उपोष्याष्टसुयामेषुपूजयि
त्वायथाविधि ॥ इमांस्वर्णमयींरामप्रतिमांचप्रयत्नतः ॥ श्रीरामप्रीतयेदास्येरामभक्तायधीमते ॥ प्रीतोरामोहरत्वाशुपापानिसुबहूनिच ॥
अनेकजन्मसंसिद्धान्यभ्यस्तानिमहांत्यपीतिमंत्रैःसंकल्पयेत् ॥ ततोवेदिकामध्यलिखितसर्वतोभद्रेकलशप्रतिष्ठाविधिनापूर्णकुंभंनिधायतदुप
रिसौवर्णराजतंवैणवंवापीठंवस्त्राच्छन्नंनिधायतत्रसिंहासनेरामप्रतिमामग्न्युत्तारणपूर्वकंसंस्थाप्यपाद्यप्रभृतिपुष्पांतोपचारैर्महापूजांकृत्वा ॥ राम
स्यजननीचासिरामात्मकमिदंजगत् ॥ अतस्त्वांपूजयिष्यामिलोकमातर्नमोस्तुते इतिमंत्रेणकौसल्यामभ्यर्च्यओंनमोदशरथायेतिदशरथंसंपू
ज्यावरणपूजाप्रभृतिपूजांसमाप्यमध्याह्नेफलपुष्पांबुपूर्णमशोककुसुमरत्नतुलसीदलसंयुतंशंखंगृहीत्वा ॥ दशाननवधार्थायधर्मसंस्थापनायच ॥
दानवानांविनाशायदैत्यानांनिधनायच ॥ परित्राणायसाधूनांजातोरामःस्वयंहरिः ॥ गृहाणार्घ्यंमयादत्तंभ्रातृभिःसहितोऽनघेतिमंत्रेणार्घ्यंद
द्यात् ॥ ततोयामचतुष्टयेऽपिश्रीरामंसंपूज्यरात्रौजागरणंविधायदशम्यांनित्यपूजांतंकृत्वामूलमंत्रेणाष्टोत्तरशतंसाज्यपायसाहुतीर्हुत्वाऽऽचार्यं
वस्त्रभूषणादिभिःसंपूज्यतस्मैप्रतिमाम् ॥ इमांस्वर्णमयींरामप्रतिमांसमलंकृताम् ॥ चित्रवस्त्रयुगच्छन्नांरामाहंराघवात्मने ॥ श्रीराम

प्रीतयेदास्येतुष्टोभवतुराघवः ॥ इतिमंत्रेणदद्यात् ॥ ततोऽन्येभ्योपियथाशक्तिदक्षिणांदत्वा ॥ तत्रप्रसादंस्वीकृत्यक्रियतेपारणंमया ॥
व्रतेनानेनसंतुष्टःस्वामिन्भक्तिंप्रयच्छमे इतिसंप्रार्थ्यपारणंकुर्यात् ॥ ॥ अथरामपूजा ॥ ॥ आचम्यप्राणानायम्यमासपक्षाद्युल्लिख्य
सकलपापक्षयकामः श्रीरामप्रीतयेरामनवमीव्रतमहंकरिष्ये तदंगत्वेनरामपूजांकरिष्ये तथाराममंत्रेणषडंगन्यासान्कलशार्चनंचकरिष्येइति
संकल्प्यफलपुष्पाक्षतसहितंजलपूर्णताम्रपात्रंगृहीत्वा ॥ उपोष्यनवमींत्वद्ययामेष्वष्टसुराघव ॥ तेनप्रीतोभवत्वंभोःसंसारात्त्राहिमांहरे इति
मंत्रेणपात्रस्थंजलंक्षिपेत् ॥ ततःशक्तितोहैमींरामप्रतिमांकृत्वाअग्न्युत्तारणपूर्वकंकपोलौस्पृष्ट्वामूलमंत्रंप्रणवादिचतुर्थ्यंतंनमोंतं ॐ रामा
यनमइति ॥ अस्यैप्राणाःप्रतिष्ठंतुअस्यैप्राणाश्चरंतुच ॥ अस्यैदेवत्वमर्चायैमामहेतिचकश्चनेतिचमंत्रंपठन्प्राणप्रतिष्ठांकुर्यात् ॥ ततः
कोमलाक्षंविशालाक्षमिंद्रनीलसमप्रभम् ॥ दक्षिणांगेदशरथंपुत्रावेक्षणतत्परम् ॥ पृष्ठतोलक्ष्मणंदेवंसच्छत्रंकनकप्रभम् ॥ पार्श्वेभरतशत्रु
घ्नौतालवृंतकरावुभौ ॥ अग्रेऽव्यग्रंहनूमंतंरामानुग्रहकांक्षिणम् ॥ इतिध्यात्वाषोडशोपचारैःपूजयेत् ॥ आवाहयामिविश्वेशंजानकीवल्ल
भंप्रभुम् ॥ कौसल्यातनयंविष्णुंश्रीरामंप्रकृतेःपरम् ॥ सहस्रशीर्षेत्यावाहनम् ॥ श्रीरामागच्छभगवन्रघुवीरनृपोत्तम ॥ जानक्यासह
राजेंद्रसुस्थिरोभवसर्वदा ॥ रामचंद्रमहेष्वासरावणांतकराघव ॥ यावत्पूजांसमाप्येऽहंतावत्त्वंसन्निधौभव ॥ इतिसन्निधापनम् ॥
रघुनायकराजर्षेनमोराजीवलोचन ॥ रघुनंदनमेदेवश्रीरामाभिमुखोभव ॥ इतिसंमुखीकरणम् ॥ राजाधिराजराजेंद्ररामचंद्रमहीपते ॥
रत्नसिंहासनंतुभ्यंदास्यामिस्वीकुरुप्रभो ॥ पुरुषएवेदमासनम् ॥ त्रैलोक्यपावनानंतनमस्तेरघुनायक ॥ पाद्यंगृहाणराजर्षेनमो

कंत्रिविधंस्मृतम् ॥ पारुष्यमनृतंचैवपैशुन्यंचापिसर्वतः ॥ ३० ॥ असंबद्धप्रलापश्चवाङ्मयंस्याच्चतुर्विधम् ॥ परद्रव्येष्वभिध्यानंमनसानि
ष्टचिंतनम् ॥ ३१ ॥ वितथाभिनिवेशश्चमानसंत्रिविधंस्मृतम् ॥ एतानिदशपापानिहरत्वमथजाह्नवि ॥ ३२ ॥ दशपापहरायस्मात्तस्माद्दशह
रास्मृता ॥ एतैर्दशविधैःपापैःकोटिजन्मसमुद्भवैः ॥ ३३ ॥ मुच्यतेनात्रसंदेहःसत्यंसत्यंगदाधर ॥ दशत्रिंशच्छतान्सर्वान्पितॄनथपिताम
हान् ॥ उद्धरत्येवसंसारान्मंत्रेणानेनपूजिता ॥ ३४ ॥ ॐ नमोभगवत्यैनारायण्यैदशपापहरायैशिवायैगंगायैविष्णुमुख्यायैक्षयायैरेवत्यै
भागीरथ्यैनमोनमः ॥ ज्येष्ठमासिसितेपक्षेदशम्यांबुधहस्तयोः ॥ गरानंदेव्यतीपातेकन्याचंद्रेवृषेरवौ ॥ दशयोगेनरःस्नात्वासर्वपापैःप्रमु
च्यते ॥ ३५ ॥ सितमकरनिषण्णांशुभ्रवर्णांत्रिनेत्रांकरधृतकलशोद्यत्सोत्पलाभीत्यभीष्टाम् ॥ विधिहरिहररूपांसेंदुकोटीरजुष्टांकलितसित
दुकूलांजाह्नवींतांनमामि ॥ ३६ ॥ आदावादिपितामहस्यनियमव्यापारपात्रेजलंपश्चात्पन्नगशायिनोभगवतःपादोदकंपावनम् ॥ भूयःशंभु
जटाविभूषणमणिर्जह्नोर्महर्षेरियंकन्याकल्मषनाशिनीभगवतीभागीरथीदृश्यते ॥ ३७ ॥ ॥ इति[1]काशीखंडेदशहरास्तोत्रंसंपूर्णम् ॥ ॥
अथआषाढशुक्लदशमीमन्वादिः ॥ सापूर्वाह्णव्यापिनीग्राह्या ॥ अथयस्यांकस्यांचिच्छुक्लदशम्यामाशादशमीव्रतंहेमाद्रौभविष्ये ॥ युधि
ष्ठिरउवाच ॥ ॥ कं[2]थमाशादशम्येषागोविंदक्रियतेकदा ॥ दं[3]मयंत्यानलस्यैवयथाजातःसमागमः ॥ ॥ कृष्णउवाच ॥ ॥ राज्याशया

१ काशीखंडेतुनमःशिवायैइत्यारभ्य मूढधीस्तुसइत्यंतमेवस्तोत्रमस्ति ॥ अग्रेरौरवादिष्वित्यादयोदृश्यतेइत्यंताःश्लोकाःकौस्तुभेदृष्टाः ॥ मंत्रोपिकाशीखंडेभिन्नएवोपलभ्यते । २ हेमाद्रौतु इतः प्रथमंपार्थ पथिइत्यारभ्यभर्त्रासहसमागमइत्यंताकथाऽधिकास्तितांविहायानेनग्रंथकृताऽग्रिमंविधिमात्रांलिखितम् ॥ अत्रयद्यपिहेमाद्रौबहुषुस्थलेषुपाठभेदोदृश्यतेत थापिव्रतार्कानुरोधेनेदंलिखितमितिद्रष्टव्यम् । ३ सर्वमेतत्सभाच क्ष्वमासतिथ्यादियादवेतिपाठोहेमाद्रौ ।

राजपुत्रःकृष्यर्थंचकृषीवलः ॥ वाणिज्यार्थंवणिक्पुत्रःपुत्रार्थंगुर्विणीतथा ॥ धर्मकामार्थसंसिद्ध्यैलोकःकन्यावरार्थिनी ॥ यष्टुकामोद्विजवरा
योगीश्रेयोर्थमेवच ॥ चिरप्रवासितेकांतेबालेदंतनिपीडिते ॥ एतदन्येषुकर्तव्यमाशाव्रतमिदंतदा ॥ यदायस्यभवेदार्तिःकार्यंतेनतदाव्रतम् ॥
शुक्लपक्षेदशम्यांतुस्नात्वासंपूज्यदेवताः ॥ नक्तमाशाःसुपूज्यावैपुष्पालक्तकचंदनैः ॥ गृहांगणेलेखयित्वायवैःपिष्टातकेनवा ॥ स्त्रीरूपाश्चा
धिदेवस्यशस्त्रवाहनचिह्निताः ॥ अधिदेवस्यतत्तद्दिक्पालस्यैंद्रादेस्तत्तच्छस्त्रैर्वाहनैश्चचिह्निताालेखयित्वेत्यर्थः ॥ दत्वाघृताक्तंनैवेद्यंपृथग्दी
पांश्चदापयेत् ॥ फलानिकालजातानिततः कार्यंनिवेदयेत् ॥ आशास्त्वाशाःसदासंतुसिद्ध्यंतांमेमनोरथाः ॥ भवतीनांप्रसादेनसदाकल्याणम
स्त्विति ॥ एवंसंपूज्यविधिवद्दत्वाविप्रायदक्षिणाम् ॥ अनेनक्रमयोगेनमासिमासिसमाचरेत् ॥ वर्षमेकंकुरुश्रेष्ठततःपश्चात्समुद्यजेत् ॥ अर्वा
क्संवत्सरस्यापिसिद्ध्यर्थंवासमुद्यजेत् ॥ सौवर्णींकारयेदाशारौप्या पिष्टातकेनवा ॥ ज्ञातिबंधुजनैःसार्द्धंततःसम्यगलंकृतः ॥ पूजयेत्क्रमयो
गेनमंत्रैरेभिर्गृहांगणे ॥ त्वयिसन्निहितःशक्रःसुरासुरनमस्कृतः ॥ पूर्वात्वंभुवनस्यास्यऐंद्रीदिग्देवतेनमः ॥ अग्नेःपरिग्रहादाशेत्वमाग्नेयीति
पठ्यसे ॥ तेजोरूपापराशक्तिराग्नेयिवरदाभव ॥ धर्मराजंसमाश्रित्यलोकान्संयमयस्यमून् ॥ तेनसंयमिनीचासियाम्येसत्कामदा
भव ॥ खड्गहस्तोतिविकृतोनिर्ऋतिस्त्वामुपाश्रितः ॥ तेननैर्ऋतिनामासित्वमाशांपूरयस्वमे ॥ त्वय्यास्तेभुवनाधारोवरुणोया
दसांपतिः ॥ कामार्थंममधर्मार्थंवारुणिप्रवणाभव ॥ अधिष्ठितासियस्मात्त्वंवायुनाजगदायुना ॥ वायवित्वमतःशांतिंनित्यंयच्छममालये ॥

१ सम्यगुद्यापनंकुर्यादित्यर्थः ।

धनदेनाधिष्ठितासिप्रख्यातात्वमिहोत्तरा॥निरुत्तराभवास्माकंदत्वासद्योमनोरथम्॥ ऐशानिजगदीशेनशंभुनात्वमलंकृता ॥ पूरयस्वाशुमेदेवि
वांछितानिनमोनमः ॥ भुजंगाष्टकुलेनत्वंसेवितासियतोह्यधः॥नागांगनाभिःसहिताहिताभवममाद्यवै॥सर्वलोकोपरिगतासर्वदात्वंशिवायच ॥
सनकाद्यैःपरिवृताब्राह्मिमांपाहिसर्वदा ॥ नक्षत्राणिचसर्वाणिग्रहास्तारागणास्तथा ॥ नक्षत्रमातरोयाश्चभूतप्रेतविनायकाः ॥ सर्वेममेष्टसिद्धय
र्थंभवंतुप्रवणाःसदा ॥ एभिर्मंत्रैःसमभ्यर्च्यपुष्पधूपादिनाततः ॥ वासोभिरभिषेकाद्यैःफलानिविनिवेदयेत् ॥ ततोबंदिनिनादेनगीतवादित्र
मंगलैः ॥ नृत्यंतीभिर्वरस्त्रीभिर्जागत्यार्चनिशांनयेत् ॥ कुंकुमाक्षततांबूलदानमानादिभिःसुखम् ॥ ॥ प्रभातेवेदविदुषेब्राह्मणायनिवेदयेत् ॥
अनेनविधिनासर्वंक्षमाप्यप्रणिपत्यच ॥ भुंजीतामित्रसहितःसुहृद्बंधुजनेनच॥एवंयःकुरुतेपार्थदशमीव्रतमादरात् ॥ सर्वान्कमानवाप्नोतिमनो
भिलषितान्नरः ॥ स्त्रीभिर्विशेषतः कार्यंव्रतमेतद्युधिष्ठिर ॥ प्राणिवर्गैयतोनार्यःश्रद्धाकामपरायणाः ॥ धन्यंयशस्यमायुष्यंसर्वकामफलप्रदम् ॥
कथितंतेमहाराजमयाव्रतमनुत्तमम् ॥ येमानवामनुजपुंगवकामकामाःसंपूजयंतिदशमीषुसदादशाशाः ॥ तेषांविशेषनिहितान्हृदयेपिकामाना
शाःफलंत्यलमलंबहुनोदितेन ॥ इतिश्रीभविष्योत्तरेआशादशमीव्रतम् ॥ अथभाद्रशुक्लदशम्यांदशावतारव्रतंभविष्योत्तरे ॥ युधिष्ठिर
उवाच ॥ व्रतंदशावताराख्यंकृष्णब्रूहिसविस्तरम् ॥ समंत्रंसरहस्यंचसर्वपापोपशांतिदम् ॥ कृष्णउवाच ॥ दशम्यांशुक्लपक्षस्यमासेप्रौष्ठ
पदेशुचिः ॥ स्नात्वाजलाशयेस्वच्छेपितृदेवादितर्पणम् ॥ कृत्वाकुरुकुलश्रेष्ठगृहमागत्यमानव ॥ गृह्णीयाद्धान्यचूर्णस्यस्वहस्तप्रसृतित्रयम् ॥

१ तत्सर्वंप्रतिपादयेदित्यपिपाठः ।

क्रमेणपाचयेत्तत्तु पुंसंज्ञंघृतसंयुतम् ॥ वर्षेवर्षेदिनेतस्मिन्नेवंवर्षाणिवैदश ॥ प्रथमेऽपूपकान्वर्षेद्वितीयेघृतपूरकान् ॥ तृतीयेपूपकासारांश्चतुर्थेमो
दकाञ्छुभान् ॥ सोहालिकान्पंचमेब्देषष्ठेब्देखंडवेष्टकान् ॥ सप्तमेब्देकोकरसानर्कपुष्पांस्तथाष्टमे ॥ नवमेकर्णवेष्टांश्चदशमेमंडकाञ्छुभान् ॥
दशात्मनोदशहरेर्दशविप्रायदापयेत् ॥ क्रमेणभक्षयेद्दत्वायथोक्तविधिनानृप ॥ अर्धार्धंविष्णवेदेयमर्धार्धंचद्विजातये ॥ स्वतएवार्द्धमश्नीयाद्ग
त्वारम्येजलाशये ॥ दशावतारानभ्यर्च्यपुष्पधूपविलेपनैः ॥ मंत्रेणानेनमेधावीहरिमभ्युक्ष्यवारिणा ॥ मत्स्यंकूर्मंवराहंचनारसिंहंचवामनम् ॥
रामंरामंचकृष्णंचबौद्धंचैवसकल्किनम् ॥गतोस्मिशरणंदेवंहरिंनारायणंविभुम् ॥ प्रणतोस्मिजगन्नाथंसमेविष्णुःप्रसीदतु॥छिनत्तुवैष्णवींमायां
भक्त्याप्रीतोजनार्दनः ॥ श्वेतद्वीपंनयत्वस्मान्मयात्मासन्निवेदितः ॥ अत्रहैमीर्महार्हाश्चदशमूर्तीः सुलक्षणाः ॥ गंधपुष्पैश्चनैवेद्यैरर्चयेद्विधिपूर्व
कम्॥एवंयःकुरुतेभक्त्याविधिनानेनसुव्रत ॥ व्रतंदशावताराख्यंतस्यपुण्यफलंशृणु ॥ श्रूयंतेयास्त्विमालोकेपुरुषाणांदशादश॥ताश्छिनत्तिन
संदेहश्चक्रप्रहरणोविभुः ॥ संसारसागराद्घोरात्समुद्धृत्यजगत्पतिः ॥ श्वेतद्वीपंनयत्याशुव्रतेनानेनतोषितः ॥ किंतस्यनभवेल्लोकेयस्यतुष्टो
जनार्दनः ॥ यद्दुर्लभंयदप्राप्यंमनसोयन्नगोचरम् ॥ तदप्यप्रार्थितंध्यातोददातिमधुसूदनः ॥ सोहंजनार्दनःसाक्षात्कालरूपधरोच्युतः॥मर्त्यलो
केस्वयंप्राप्तोभूभारोत्तारणायच ॥ यास्त्रीव्रतमिदंपार्थकरिष्यतिमयोदितम् ॥ साचलक्ष्म्यायुतानित्यंपुत्रभक्तिसमन्विता ॥ मर्त्यलोकेचिरंस्थि
त्वाविष्णुलोकेमहीयते ॥ येपूजयंतिपुरुषोपुरुषोत्तमस्यमत्स्यादिकांस्तुदशमीषुदशावतारान् ॥ मन्येदशस्वपिदशासुसुखंविहृत्यते
यांतियानमधिरुह्यमुरारिलोकम् ॥ इतिभविष्येभाद्रपदशुक्लदशम्यांदशावतारव्रतम् ॥ अथाश्विनशुक्लदशम्यांविजयादशमी ॥ साचता

रकोदयव्यापिनीग्राह्या ॥ तदुक्तंचिंतामणौ ॥ आश्विनस्यसितेपक्षेदशम्यांतारकोदये ॥ सकालोविजयोनामसर्वकामार्थसाधकः ॥ रत्नकोशे ॥ ईषत्संध्यामतिक्रांतःकिंचिदुद्भिन्नतारकः ॥ विजयोनामकालोयंसर्वकामार्थसाधकः ॥ दिनद्वयेतद्व्याप्तावव्याप्तौवाऽपराजितापूजायांपूर्वैव ॥ तदुक्तंहेमाद्रौस्कांदे ॥ दशम्यांतुनरैःसम्यक्पूजनीयाऽपराजिता ॥ ईशानींदिशमाश्रित्यअपराह्णेप्रयत्नतः ॥ यापूर्णानवमीयुक्तातस्यांपूज्याऽपराजिता ॥ क्षेमार्थंविजयार्थंचपूर्वोक्तविधिनानरैः ॥ ॥ नवमीशेषसंयुक्तदशम्यामपराजिता ॥ ददातिविजयंदेवीपूजिताजयवर्द्धिनी ॥ तथा ॥ आश्विनेशुक्लपक्षेतुदशम्यांपूजयेन्नरः ॥ एकादश्यांनकुर्वीतपूजनंचापराजितम् ॥ यात्रात्वेकादशमुहूर्तेकार्या ॥ तथाचभृगुः ॥ आश्विनस्यसितेपक्षेदशम्यांसर्वराशिषु ॥ सायंकालेशुभायात्रादिवानाविजयक्षणे ॥ एकादशमुहूर्तोयोविजयः संप्रकीर्तितः ॥ तस्मिन्सर्वैर्विधातव्यायात्राविजयकांक्षिभिः ॥ दिनद्वयेएकादशमुहूर्तव्याप्तावव्याप्तौवाश्रवणयुक्ताग्राह्या ॥ तथाचहेमाद्रौमदनरत्नेकश्यपः ॥ उदयेदशमीकिंचित्संपूर्णैकादशीयदि ॥ श्रवणर्क्षंयदाकालेसातिथिर्विजयाभिधा ॥ श्रवणर्क्षेतुपूर्णायांकाकुत्स्थःप्रस्थितोयतः ॥ उल्लंघयेयुःसीमांतंतद्दिनर्क्षेततोनराः ॥ अत्रकृत्यंभविष्ये ॥ शमींसुलक्षणोपेतामीशान्याशाप्रतिष्ठिताम् ॥ संप्रार्थ्यतांचसंपूज्यत्वीशानीसंमुखोभवेत् ॥ तत्रमंत्रः ॥ शमीशमयतेपापंशमीशत्रुविनाशिनी ॥ अर्जुनस्यधनुर्धारीरामस्यप्रियवादिनी ॥ शमीशमयतेपापंशमीलोहितकंटका ॥ धारिण्यर्जुनबाणानांरामस्यप्रियवादिनी ॥ करिष्यमाणयात्रायांयथाकालंसुखंमया ॥ तत्रनिर्विघ्नकर्त्रीत्वंभवश्रीरामपूजिते ॥ गृहीत्वासाक्षतामार्द्रांशमीमूलगतांमृदम् ॥ गीतवादित्रनिर्घोषैरानयेत्स्वगृहंप्रति ॥ ततोभूषणवस्त्रादिधारयेत्स्वजनैःसह ॥

शम्यभावेवनराजपूजाकार्या ॥ तत्रमंत्रः ॥ आदिराजमहाराजवनराजवनस्पते ॥ इष्टदर्शनमिष्टान्नंशत्रूणांचपराजयः ॥ अथापराजितदश
म्यांपूर्वोक्तेविजयमुहूर्तेउक्तंप्रास्थानिकमित्युपक्रम्यगोपथब्राह्मणेतदप्येतेश्लोकाः ॥ अलंकृतोभूषितभृत्यवर्गःपरिष्कृतोत्तुंगतुरंगनागः ॥
वादित्रनादप्रतिनादिताशःसुमंगलाचारपरंपराशीः ॥ राजानिर्गत्यभवनात्पुरोहितपुरोगमः ॥ प्रास्थानिकंविधिंकृत्वाप्रतिष्ठेत्पूर्वतोदिशि ॥
गत्वानगरसीमांतंवास्तुपूजांसमाचरेत् ॥ संपूज्यचाथदिक्पालान्पूजयेत्पथिदेवताः ॥ मंत्रैर्वैदिकपौराणैःपूजयेच्चशमीतरुम् ॥ अमं
गलानांशमनीं¹सर्वसिद्धिकरींशुभाम् ॥ दुःस्वप्नशमनींधन्यांप्रपद्येऽहंशमींशुभाम् ॥ ततःकृताशीः पूर्वस्यांदिशिविष्णुक्रमात्क्रमेत् ॥
शत्रोःप्रतिकृतिंकृत्वा²ध्यात्वारामंतथार्थदम् ॥ शरेणस्वर्णपुंखेनाविध्येद्धृदयमर्माणि ॥ दिशाविजयमंत्राश्चपठितव्याःपुरोधसा ॥ एवमे
वविधिंकृत्वादक्षिणादिभिर³र्चयेत् ॥ पूज्यान्द्विजांश्चसंपूज्यसांवत्सरपुरोहितौ ॥ गजवाजिपदातीनांप्रेक्षाकौतुकमाचरेत् ॥ जयमं
गलशब्देनततः स्वभवनंविशेत् ॥ नीराजमानःपुण्याभिर्गणिकाभिःसुमंगलम् ॥ यएवंकुरुतेराजावर्षेवर्षेसुमंगलम् ॥ आयुरारो
ग्यमैश्वर्यंविजयंसचगच्छति ॥ नाधयोव्याधयश्चैवनभवंतिपराजयाः ॥ श्रियंपुण्यमवाप्नोतिविजयंचसदाश्नुवीति ॥ प्रास्थानिकप्र
कारश्चेत्थम् ॥ आश्विनस्यसितेपक्षेदशम्यांजनेषुगमिष्यत्सुपार्थिवश्चदुंदुभीन्वीणाश्चोपवादयेत् ॥ ततोघटोत्थापनानंतरंसुचारुवेषैः
सुभूषितःसंभारानुपकल्प्यएकादशमुहूर्तेश्रवणयोगेसीमांतंगत्वापश्चाद्गृहेजनैःसहसुवर्णसहितंग्राममाविशेत् ॥ योषिद्भिःकौतुकैश्चप्रज्वालि

१ शमनींदुष्कृतस्यचेतिपाठः । २ वामनसाथतामितिपाठः । ३ दिशास्वपीत्यपिपाठः ।

तैर्दीपैर्नीराजनानुलेपनंकारयित्वावासोगंधस्रक्पुष्पैश्चपूजयित्वाहिरण्यरूपामितिमंत्रेण सुवर्णपूजनंकृत्वाआशिषःप्रतिगृह्यलक्ष्मींनमस्कुर्यात् ॥ सर्वाभगिनीर्वस्त्रालंकारभूषणैःपूजयेद्ब्राह्मणांश्चगंधपुष्पधूपदीपकैः ॥ ॥ इतिविजयादशमी ॥ ॥ इतिदशमीव्रतानिसमाप्तानि ॥

अथैकादशीव्रतानि ॥तत्रोपवासएकादशीनिर्णयः ॥ उपवासश्चनिषेधपरिपालनात्मकोव्रतरूपश्च ॥ साचद्विविधा ॥ शुद्धा दशमीविद्धाच ॥ वेधोपिद्विविधः ॥ अरुणोदयदशमीसंबंधात्सूर्योदयेच ॥ तत्राद्योवैष्णवैस्त्याज्यः ॥ तथाचभविष्ये ॥ अरुणोदयकालेतुदशमीयदिदृश्यते ॥ साविद्धैकादशीतत्रपापमूलमुपोषणम् ॥ तथा ॥ दशमीशेषसंयुक्तोयदिस्यादरुणोदयः ॥ नैवोपोष्यंवैष्णवेनतद्दिनैकादशीव्रतम् ॥ अरुणोदयस्वरूपंतुहेमाद्रौस्मृत्यंतरेदर्शितम् ॥ निशिप्रांतेतुयामार्द्धेदेववादित्र[1]निःस्वने ॥ सारस्वतेऽनध्ययनेअरुणोदयउच्यते ॥ यामार्द्धंमुहूर्तद्वयलक्षकम् ॥ अतएवसौरधर्मे ॥ आदित्योदयवेलायांयामुहूर्तद्वयान्विता ॥ सैकादशीतुसंपूर्णाविद्धाऽन्यापरिकीर्तिता ॥ यच्चमाधवीयेस्कांदे ॥ उदयात्प्राक्चतस्रस्तुघटिकाअरुणोदयइतितदपिद्वात्रिंशद्घटिकारात्रिमानपक्षेमुहूर्तद्वयस्यतावत्परिमाणत्वादुक्तमितिद्वैतनिर्णये ॥ येपिब्रह्मवैवर्ते ॥ चतस्रोघटिकाःप्रातररुणोदयानिश्चयः ॥ चतुष्टयविभागोत्रवेधादीनांकिलोदितः ॥ अरुणोदयवेधःस्यात्सार्द्धंतुघटिकात्रयम् ॥ अतिवेधोद्विघटिकःप्रभातंदर्शनाद्रवेः ॥ महावेधोपितत्रैवदृश्यतेऽर्कोनदृश्यते ॥ तुरीयस्तत्रविहितोयोगःसूर्योदयेसतीत्यादयोयेवेधाउक्तास्तेचार्वाग्दोषातिशयार्थाइतिमयूखे ॥ अन्यच्च ॥ पंचपंचउषःकालःसप्तपंचारुणो

१ वादनेइत्यपिपाठः ।

दयः ॥ अष्टपंचभवेत्प्रातःशेषःसूर्योदयःस्मृतः ॥ वैष्णवलक्षणंतुस्कांदे ॥ परमापदमापन्नोहर्षेवासमुपस्थिते ॥ नैकादशींत्यजेद्यस्तुय
स्यदीक्षातुवैष्णवी ॥ भविष्ये ॥ यथाशुक्लातथाकृष्णायथाकृष्णातथोत्तरा ॥ तुल्येतेमन्यतेयस्तुसहिवैष्णवउच्यते ॥ अतिवेधादयः
सर्वेयेवेधास्तिथिषुस्मृताः ॥ सर्वेप्यवेधाविज्ञेयावेधःसूर्योदयःस्मृतइतिमदनरत्नधृतस्मृत्युक्तःसूर्योदयवेधःस्मार्तविषयएव ॥ तत्रशुद्धावि
द्धाएकादशीचतुर्द्धा ॥ एकादशीमात्राधिका ॥ द्वादशीमात्राधिका ॥ उभयाधिका ॥ अनुभयाधिकाच ॥ तत्रशुद्धायामेकादश्या
धिक्येपरेद्युरुपवासमाहनारदः ॥ संपूर्णैकादशीयत्रद्वादश्यांवृद्धिगामिनी ॥ द्वादश्यांलंघनंकार्यंत्रयोदश्यांतुपारणम् ॥ वृद्धवसिष्ठः ॥
एकादशीयदालुप्तापरतोद्वादशीभवेत् ॥ उपोष्याद्वादशीतत्रयदीच्छेच्चपरांगतिम् ॥ भृगुः ॥ संपूर्णैकादशीयत्रप्रभातेपुनरेवसा ॥
तदोपोष्याद्वितीयातुपरतोद्वादशीयदि ॥ स्कांदे ॥ प्रथमेऽहनिसंपूर्णाव्याप्याहोरात्रसंयुता ॥ द्वादश्यांतुयदातातदृश्यतेपुनरेवसा ॥
पूर्वाकार्यागृहस्थैश्चयतिभिश्चोत्तराविभो ॥ मार्कंडेयः ॥ संपूर्णैकादशीयत्रप्रभातेपुनरेवच ॥ पूर्वामुपवसेत्कामीनिष्कामस्तुपरांव
सेत ॥ हेमाद्रौ ॥ विद्धाप्यविद्धाविज्ञेयापरतोद्वादशीनचेत् ॥ अविद्धापिचविद्धास्यात्परतोद्वादशीयदि ॥ प्रचेताः ॥ एकादशीविवृद्धा
चेच्छुक्लेकृष्णेविशेषतः ॥ उत्तरांतुयतिःकुर्यात्पूर्वामुपवसेद्गृही ॥ सनत्कुमारः ॥ नकरोतिहियोमूढएकादश्यामुपोषणम् ॥ सनरोनर
कंयातिरौरवेतमसावृते ॥ यदिच्छेद्विपुलान्भोगान्मुक्तिंचात्यंतदुर्लभाम् ॥ उपोष्यैकादशीनित्यंपक्षयोरुभयोरपि ॥ माधवेप्युक्तम् ॥
एकादशीद्वादशीचेत्युभयंवर्द्धतेयदा ॥ तदापूर्वदिनंत्याज्यंस्मार्तैर्ग्राह्यंपरंदिनम् ॥ त्रयोदश्यांनलभ्येतद्वादशीयदिकिंचन ॥ उपोष्यैकाद

शीतत्रदशमीमिश्रितायदीतिस्कांदात् ॥ हेमाद्रिमते ॥ शुद्धाविद्धाद्वयीनंदात्रिधान्यूनसमाधिकैः ॥ षट्प्रकाराःपुनस्त्रेधाद्वादश्यूनसमाधिकै
रित्यष्टादशैकादशीभेदाः ॥ पाद्मे ॥ संपूर्णैकादशीत्याज्यापरतोद्वादशीयदि ॥ उपोष्याद्वादशीशुद्धाद्वादश्यामेवपारणम् ॥ पारणाहेनलभ्ये
तद्वादशीकलयापिचेत् ॥ तदानींदशमीविद्धाउपोष्यैकादशीतिथिः ॥ बहुवाक्यविरोधेनसंदेहोजायतेयदा ॥ द्वादशीतुतदाग्राह्यात्रयोदश्यां
तुपारणमितिमार्कंडेयः ॥ कात्यायनः ॥ अष्टवर्षाधिकोमर्त्योंह्यशीतिन्यूनवत्सरः ॥ एकादश्यामुपवसेत्पक्षयोरुभयोरपि ॥ भविष्ये ॥ ब्रह्म
चारीचनारीचशुक्लामेवसदागृही ॥ सधवायास्तुभर्त्राज्ञयाधिकारः ॥ तथाचविष्णुः ॥ पत्यौजीवतियानारीउपोष्यव्रतमाचरेत् ॥
आयुष्यंहरतेभर्तुःसानारीनरकंव्रजेत् ॥ पाद्मे ॥ शयनीबोधिनीमध्येयाकृष्णैकादशीभवेत् ॥ सैवोपोष्यागृहस्थेननान्याकृष्णाकदाचन ॥
अत्रनान्याकृष्णेतिननिषेधः ॥ संक्रांत्यामुपवासंचकृष्णैकादशिवासरे ॥ चंद्रसूर्यग्रहेचैवनकुर्यात्पुत्रवान्गृहीतिनारदवाक्यात् ॥ आ
दित्येऽहनिसंक्रांतौग्रहणेचंद्रसूर्ययोः ॥ पारणंचोपवासंचनकुर्यात्पुत्रवान्गृहीतिवचनांतरानुरोधाच्चकृष्णैकादश्यामुपवासप्राप्त्यभावात् ॥
व्रताकरणेप्रायश्चित्तमाहमाधवीयेकात्यायनः ॥ अर्केपर्वद्वयेरात्रौचतुर्दश्यष्टमीदिवा ॥ एकादश्यामहोरात्रंभुक्त्वाचांद्रायणंचरेत् ॥
॥ अथकाम्यव्रतविधिः ॥ ॥ तत्रदशम्यांविधिःकौर्मे ॥ कांस्यंमांसंमसूरांश्चचणकान्कोरदूषकान् ॥ शाकंमधुपरान्नंचत्यजेदुपवस
न्स्त्रियम् ॥ तथा ॥ शाकंमांषं[1]मसूरांश्चपुनर्भोजनमैथुने ॥ द्यूतमत्यंबुपानंचदशम्यांवैष्णवस्त्यजेत् ॥ मदनरत्नेनारदीये ॥ अक्षारलवणाः

१ मांसमित्यपिपाठः ।

सर्वेंहविष्यान्ननिषेविणः ॥ अवनीतल्पशयनाः प्रियासंगविवर्जिताः ॥ व्रतघ्नान्याहहेमाद्रौदेवलः ॥ असकृज्जलपानाच्चसकृत्तांबूलचर्व
णात् ॥ उपवासःप्रणश्येतदिवास्वापाच्चमैथुनात् ॥ अशक्तौतुमदनरत्नेदेवलः ॥ अत्ययेचांबुपानेननोपवासःप्रणश्यति ॥ अत्यये
कष्टे ॥ विष्णुरहस्ये ॥ गात्राभ्यंगंशिरोभ्यंगंतांबूलंचानुलेपनम् ॥ व्रतस्थोवर्जयेत्सर्वंयच्चान्यच्चनिराकृतम् ॥ एषुप्रायश्चित्तमुक्तमृ
ग्विधाने ॥ स्तेनहिंसकयोःसख्यंकृत्वास्तैन्यंचहिंसनम् ॥ प्रायश्चित्तंव्रतीकुर्याज्जपेन्नामशतत्रयम् ॥ मिथ्यावादेदिवास्वापेबहुशोऽ
बुनिषेवणे ॥ अष्टाक्षरंजपेन्मंत्रंशतमष्टोत्तरंशुचिः ॥ ॐनमोनारायणायेत्यष्टाक्षरः ॥ हेमाद्रौवसिष्ठः ॥ उपवासेतथाश्राद्धेनकुर्या
द्दंतधावनम् ॥ दंतानांकाष्ठसंयोगोदहत्यासप्तमंकुलम् ॥ एकादश्यांश्राद्धेप्राप्तेमाधवीयेकात्यायनः ॥ उपवासोयदानित्यःश्राद्धंनै
मित्तिकंभवेत् ॥ उपवासंतदाकुर्यादाघ्रायपितृसेवितम् ॥ मातापित्रोःक्षयेप्राप्तेभवेदेकादशीयदि ॥ अभ्यर्च्यपितृदेवांश्चआजिघ्रे
त्पितृसेवितम् ॥ ब्रह्मवैवर्ते ॥ प्राप्तेहरिदिनेसम्यग्विधायनियमंनिशि ॥ दशम्यामुपवासंचप्रकुर्याद्वैष्णवंव्रतम् ॥ तत्रएकादश्यांसंकल्पः॥
गृहीत्वौदुंबरंपात्रंवारिपूर्णमुदङ्मुखः ॥ उपवासंतुगृह्णीयाद्यथासंकल्पयेद्बुधः ॥ औदुंबरंताम्रमयम् ॥ मंत्रस्तुविष्णूक्तः ॥ एकादश्यांनि
राहारःस्थित्वाहमपरेहनि ॥ भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत ॥ शैवादीनांतुहेमाद्रौसौरपुराणे ॥ सावित्र्याप्यथवानाम्नासंकल्पंतु
समाचरेत् ॥ वाराहे ॥ इत्युच्चार्यततोविद्वान्पुष्पांजलिमथार्पयेत् ॥ ततस्तज्जलंपिबेत् ॥ अष्टाक्षरेणमंत्रेणत्रिजप्तेनाभिमंत्रितम् ॥ उपवा

१ यथाकामंफलमुल्लिखेदित्यर्थः । २ शिवादिगायत्र्या । ३ संकल्प्येत्यर्थः ।

सफलंप्रेप्सुःपिबेत्पात्रगतंजलमितिकात्यायनोक्तेः ॥ मध्यरात्रेउदयेवादशमीवेधेरात्रौसंकल्पइतिमाधवः ॥ दशम्याःसंगदोषेणअर्धरात्रात्प
रेणतु ॥ वर्जयेच्चतुरोयामान्संकल्पार्चनयोस्तदा ॥ विद्धोपवासेऽनश्नंस्तुदिनंत्यक्त्वासमाहितः ॥ रात्रौसंपूजयेद्विष्णुंसंकल्पंचसदाचरेदितिनार
दीयोक्तेः ॥ तत्रपूजामभिधाय ॥ देवलः ॥ देवस्यपुरतःकुर्याज्जागरंनियतोव्रती ॥ द्वादश्यांनिवेदनमंत्रउक्तःकात्यायनेन ॥ अज्ञानतिमिरांध
स्यव्रतेनानेनकेशव ॥ प्रसीदसुमुखोनाथज्ञानदृष्टिप्रदोभव ॥ द्वादश्यांवर्ज्यानाहबृहस्पतिः ॥ दिवानिद्रांपरान्नंचपुनर्भोजनमैथुने ॥ क्षौद्रं[1]कांस्यंमा
षतैलंद्वादश्यामष्टवर्जयेत् ॥ हेमाद्रौब्रह्मांडे ॥ पुनर्भोजनमध्यायोभारआयासमैथुने ॥ उपवासफलंहन्युर्दिवानिद्राचपंचमी ॥ विष्णुधर्मे ॥
असंभाष्यांह्निसंभाष्यतुलस्याश्चार्पितंदलम् ॥ आमलक्याःफलंवापिपारणेप्राश्यशुद्ध्यति ॥ विष्णुः ॥ भोजनानंतरंविष्णोरर्पितंतुलसीदलम् ॥
[2]भक्षणात्पापनिर्मुक्तिश्चांद्रायणशताधिका ॥ एतद्व्रतंसूतकेऽपिकार्य्यम् ॥ सूतकेमृतकेचैवनत्याज्यंद्वादशीव्रतमितिविष्णूक्तेः ॥ तत्रत्यक्त्वादाना
दिसूतकांतेकार्यम् ॥ सूतकांतेनरःस्नात्वापूजयित्वाजनार्दनम ॥ दानंदत्त्वाविधानेनव्रतस्यफलमश्नुतेइतिमात्स्योक्तेः ॥ स्त्रीभिस्तुरजोदर्शने
पिकार्यम् ॥ एकादश्यांनभुंजीतनारीदृष्टेरजस्यपीतिपुलस्त्योक्तेः ॥ यदाद्वादश्यांश्रवणर्क्षंतदाशुद्धामप्येकादशींत्यक्त्वाद्वादशीमुपवसेत् ॥
शुक्लावायदिवाकृष्णाद्वादशीश्रवणान्विता ॥ तयोरेवोपवासश्चत्रयोदश्यांतुपारणमितिनारदोक्तेः ॥ अथाष्टौमहाद्वादश्यः ॥ तत्रशुद्धा
धिकैकादशीयुताद्वादशीउन्मीलिनीद्वादश्येवशुद्धाधिकावर्द्धतेचेत्सावंजुली ॥ वासरत्रयस्पर्शिनीत्रिस्पृशा ॥ अग्रेपर्वणःसंपूर्णाधिकत्वेपक्षव

१ कांस्यामिषमितिपाठः । २ अर्पितंयत्तुलसीदलंतस्यभक्षणादित्यध्याहृत्यान्वयः ।

र्धिनी ॥ पुष्यर्क्षयुताजया ॥ श्रवणयुताविजया ॥ पुनर्वसुयुताजयंती ॥ रोहिणीयुतापापनाशिनी ॥ एताःपापक्षयमुक्तिकामउपवसेत् ॥ अत्र
मूलंहेमाद्रौज्ञेयम् ॥ द्वादश्याःप्रथमपादमतिक्रम्यपारणंकार्यम् ॥ द्वादश्याःप्रथमःपादोहरिवासरसंज्ञितः ॥ तमतिक्रम्यकुर्वीतपारणंविष्णुतत्प
रइतिनिर्णयामृतेविष्णुधर्मोक्तेः ॥ यदाभूयसीद्वादशीतदापिप्रातर्मुहूर्तत्रयेपारणंकार्यम् ॥ सर्वेषामुपवासानांप्रातरेवहिपारणमितिवचनात् ॥
इत्येकादशीनिर्णयः ॥ अथशुक्लकृष्णैकादश्युद्यापनम् ॥ प्रबोधसमयेपार्थकुर्यादुद्यापनक्रियाम् ॥ मार्गशीर्षेविशेषेणमाघेभीमातिथावपि ॥
तद्विधिः ॥ दशम्यामेकभुक्तंतुदंतधावनपूर्वकम् ॥ एकादश्यांशुचिर्भूत्वाआचार्यंवरयेत्ततः ॥ तत्रसंकल्पः ॥ गणेशस्मरणपूर्वकंमासपक्षा
द्युल्लिख्यमयाआचरितस्याचरिष्यमाणस्यवा शुक्लकृष्णैकादशीव्रतस्यसांगतासिद्ध्यर्थं तत्संपूर्णफलप्राप्त्यर्थंदेशकालाद्यनुसारतोयथाज्ञाने
नशुक्लकृष्णैकादशीव्रतोद्यापनमहंकरिष्ये तदंगत्वेनगणपतिपूजनंपुण्याहवाचनमाचार्यवरणंचकरिष्ये इतिसंकल्प्यगणेशंषोडशोपचारैःपूज
यित्वापुण्याहंवाचयेत् ॥ तद्यथा ॥ करिष्यमाणशुक्लकृष्णैकादशीव्रतोद्यापनकर्मणःपुण्याहंभवंतोब्रुवंतुअस्तुपुण्याहम् ॥ स्वस्तिभवंतोब्रुवं
तुआयुष्मतेस्वस्ति ॥ ऋद्धिंभवंतोब्रुवंतुकर्मऋध्यताम् ॥ श्रीरस्त्वितिभवंतोब्रुवंतुअस्तुश्रीः ॥ वर्षशतंपूर्णमस्तु ॥ शिवंकर्मास्तु ॥ गोत्राभि
वृद्धिरस्तु प्रजापतिःप्रीयताम् ॥ ततउद्यापनकर्मणिआचार्यंवरयेत् ॥ उपोष्यनियतोरात्रावाचार्यसहितोव्रती ॥ कुर्यादाराधनंविष्णोर्य
थाशक्त्याजगद्गुरोः ॥ देवालयेगवांगोष्ठेशुचौदेशेऽथवागृहे ॥ अष्टांगुलोच्छ्रितांवेदींचतुरस्रांप्रकल्पयेत् ॥ वितस्तिद्वयविस्तीर्णांतिलैः
कृष्णैःप्रपूरयेत् ॥ तस्यामष्टदलंरम्यंकमलंपरिकल्पयेत् ॥ तन्मध्येस्थापयेत्कुंभंनवीनमव्रणंशुभम् ॥ कृष्णैस्तिलैश्चसंयुक्तंकृष्णवस्त्रो

पशोभितम् ॥ अश्वत्थपर्णयुग्मेनपंचरत्नैःसमन्वितम् ॥ समंतादंकितंचैवसंकर्षणादिनामभिः ॥ उपचारैःषोडशभिःपूजयेत्प्रयतोनरः ॥
आग्नेयादिचतुष्पत्रेपूजयेद्गणमातृकाः ॥ गणेशंमातृकाश्चैवदुर्गांक्षेत्राधिपंतथा ॥ समाहितमनाःकोणेष्वाग्नेयादिषुविन्यसेत् ॥ तथैवशुक्लै
कादश्यांतिलैःशुक्लैश्चयोजयेत्[१] ॥ शुक्लवस्त्रेणसंवेष्ट्यपूजयेत्परयामुदा ॥ समंतादंकितंचैवनामभिः केशवादिभिः ॥ ततोदेवंचसौवर्णं
स्नाप्यपंचामृतादिभिः ॥ गंधपुष्पाक्षतोपेतैरथपुण्यजलैःशुभैः ॥ संस्थाप्यावाहयेत्कुंभेरमायुक्तंचतुर्भुजम् ॥ पूर्ववृतआचार्यःसर्व
तोभद्रमंडलदेवताःसंपूज्यतदुपरिस्थापितेकलशेदेवतासान्निध्यार्थंकृताग्न्युत्तारणांविष्णुमूर्तिंसंस्थाप्यतत्रविष्णुमावाहयेत् ॥ ॐ नमोवि
ष्णवेतुभ्यंभगवन्परमात्मने ॥ कृष्णोसिदेवकीपुत्रपरमेश्वरउत्तम ॥ अजोनादिश्वविश्वात्मासर्वलोकपितामहः ॥ क्षेत्रज्ञःशाश्वतोविष्णुः श्रीमा
न्नारायणःपरः ॥ त्वमेवपुरुषःसत्योऽतींद्रियोसिजगत्पते ॥ यत्तेजःपरंसूक्ष्मंतेनेमांवेदिकांविश ॥ ॐभूःपुरुषमावाहयामि ॥ ॐ भुवःपुरुष
मावाहयामि ॥ ॐस्वःपुरुषमावाहयामि ॥ ॐभूर्भुवःस्वःपुरुषमावाहयामि ॥ विष्णोइहागच्छइहतिष्ठपूजांगृहाणसुप्रसन्नोवरदोभवेति ॥ प्रत्ये
कंस्त्रीचतुःसहस्रीसहितांरुक्मिणींजांबवतींसत्यभामांकालिंदींचपूर्वदक्षिणपश्चिमोत्तरदलाभ्यंतरेष्वावाह्य शंखंचक्रंगदांपद्मंचेशानादिष्वावाह
येत् ॥ तद्बहिःपूर्वपत्रादिष्वष्टपत्रेष्वनुक्रमात् ॥ विमलो १ त्कर्षिणी २ ज्ञाना ३ क्रिया ४ योगा ५ तथैवच ॥प्रह्वा ६ सत्या ७ तथेशाना८
नुग्रहापद्ममध्यगा[२] ॥ देवस्याग्रेततःकृत्वावेदिकायांखगेश्वरम् ॥ खगेश्वरंगरुडंचावाह्य ॥ लोकपालानवस्थाप्यदिक्षुपूर्वादिषुक्रमात् ॥ ततःपू

१ अर्थात्कलशीमित्यर्थः । २ एताआवाह्य ।

र्वादिक्रमेणकेशवादीन् ॥ केशवायनमःकेशवमावाहयामि १ नारायणाय॰ २ माधवाय॰ ३ गोविंदाय॰ ४ विष्णवे॰ ५ मधुसूदनाय॰ ६
त्रिविक्रमाय॰ ७ वामना॰ ८ श्रीधराय॰ ९ हृषीकेशाय॰ १० पद्मनाभाय॰ ११ दामोदराय॰ १२ एतान्शुक्लैकादश्याम् ॥ एवमेवकृ
ष्णैकादश्यांसंकर्षणाय॰ संकर्षणंआ॰ वासुदेवा॰ प्रद्युम्ना॰ अनिरुद्धा॰ पुरुषोत्तमा॰ अधोक्षजा॰ नारसिंहा॰अच्युता॰ जनार्दना॰ उपें-
द्रा॰ हरये॰ श्रीकृष्णा॰ १२ ॥ इत्येवंप्रकारेणावाह्यतदस्त्वितिप्रतिष्ठाप्यचातोदेवाइतिषोडशोपचारैर्विष्णुमावाहितदेवताश्चनाममंत्रेणपूज
येत् ॥ प्रदद्यादासनंपाद्यमर्घ्यमाचमनीयकम् ॥ स्नानंवस्त्रंचोपवीतंगंधपुष्पाणिवैततः ॥ धूपंदीपंचनैवेद्यंनीराजनप्रदक्षिणे ॥ उभयैका
दश्योर्यदाएकआचार्यस्तदाष्टपद्मदलेषुपूर्वादिक्रमेणएकत्रदेवताःसंस्थाप्यपूजयेत् ॥ स्तवनंविष्णुसूक्तैश्चपरिचर्यांचनामभिः ॥ नमो
न्तैर्वैष्णवैर्मंत्रैस्तन्मूर्तौपूजयेत्सुधीः ॥ उपचारादिकंकुर्यान्नैवकार्यंविसर्जनम् ॥ गीतवाद्यैस्तथानृत्यैरितिहासैर्मनोरमैः ॥ पुराणैःसत्कथा
भिश्चरात्रिशेषंनयेत्सुधीः ॥ प्रभातेविमलेस्नात्वाकृत्वाशौचादिकाः क्रियाः ॥ चतुर्विंशतिसंख्याकान्विप्रानागमदर्शिनः ॥ आकारये
त्ततःपश्चात्पूजयेच्चसमागतान् ॥ आचार्येणसमंकुर्याद्दुपचारादिकंततः ॥ होमसंख्यानुसारेणस्थंडिलंकारयेत्ततः ॥ उल्लेखनादिकं
कृत्वाप्रणीतास्थापनंततः ॥ अग्निध्यानांतंकृत्वाततोन्वाधानंकुर्यात् ॥ क्रियमाणेशुक्लकृष्णैकादशीव्रतोद्यापनहोमेदेवतापरिग्रहार्थं
मन्वाधानंकरिष्ये ॥ इतिसंकल्प्यचक्षुषीआज्येनेत्यंतमुक्त्वा ॥ अत्रप्रधानम् ॥ अग्निं इंद्रं प्रजापतिं विश्वान्देवान्ब्रह्माणम् पुरुषं
नारायणं पुरुषसूक्तेनप्रत्यृचमाज्येन वासुदेवं बलदेवं श्रियं विष्णुं अग्निं वायुं सूर्यं प्रजापतिं एताः प्रधानदेवताः पायसद्रव्येण ॥

केशवादिद्वादशदेवताआज्यमिश्रितपायसद्रव्येण ॥ विष्णुमष्टोत्तरशताहुत्यापायसद्रव्येण ॥ प्रत्येकंस्त्रीचतुःसहस्रसहितांरुक्मिणींसत्यभा
मांजांबवतींकालिंदींचशंखंचक्रंगदांपद्मंगरुडंइंद्राद्यष्टौलोकपालान्विमलाद्याअनुग्रहांतादेवताब्रह्मादिदेवताश्चएकैकयाऽऽज्याहुत्या ॥ शेषेण
स्विष्टकृतमित्यादिप्रणीतप्रणयनांतंकृत्वाअन्वाधानसमिद्भिर्जुहुयात् ॥ पायसंचरुंश्रपयित्वापवित्रेतेइतिमंत्रंजपन्प्रापणमुद्धरेत् ॥ पायसा
दुद्धृतंकिंचित्प्रापणंतत्प्रकीर्तितम् ॥ आज्यसंस्कारादिकमाज्यभागांतंकृत्वाइदमुपकल्पितंहवनीयद्रव्यंयथादैवतमस्तु ॥ पंचअनादेशाहुतीः
सर्पिषाहुत्वापुरुषंनारायणंपौरुषेणसूक्तेनप्रत्यृचंसर्पिषा ॥ वासुदेवायस्वाहा० बलदेवायस्वाहा श्रियैस्वा० विष्णवे० विष्णोर्नुक
म्० तदस्यप्रियमभिपाथो० प्रतद्विष्णुः० परोमात्रया० विचक्रमे० त्रिर्देव० इतिमंत्रैर्व्याहृतिभिश्चपायसेनहुत्वाशुक्लैकादश्यांकेशवादिद्वादश
भ्योनामभिः कृष्णैकादश्यांसंकर्षणादिद्वादशभ्यः शुक्लकृष्णैकादश्योरेकाचार्यैकस्थंडिलपक्षेचतुर्विंशतिभ्योनामभिर्घृतमिश्रपायसेनजुहुया
त् ॥ ततोविष्णुंपायसेनअष्टोत्तरशतंहुत्वाप्रत्येकंस्त्रीचतुःसहस्रसहितारुक्मिण्यादीःशंखादींल्लोकपालान्विमलाद्यादेवताब्रह्मादिदेवताश्चैकै
कयाऽऽज्याहुत्याजुहुयात् ॥ ततःप्रापणार्थंभगवत्प्रार्थना ॥ त्वामेकमाद्यंपुरुषंपुराणंनारायणंविश्वसृजंयजामः ॥ मयैकभागोविहितोविधयोगृ
हाणहव्यंजगतामधीश ॥ इतिप्रापणंनिवेद्योपतिष्ठेत् ॥ ततस्त्रिवारंचतुर्वारंवाप्रदक्षिणमग्निंवेदिकांचपरिक्रम्य भिंधिविश्वाइतिजानुनीनि
पात्य ध्रुवसूक्तंजपेत्पुरुषसूक्तंवा ॥ ततोष्टौपदानिप्रतिदिशमेतैर्मंत्रैर्गच्छेत् ॥ कृष्णायवासुदेवायहरयेपरमात्मने ॥ शरण्यायाप्रमेयाय
गोविंदायनमोनमः ॥ नमः स्थूलायसूक्ष्मायव्यापकायाव्ययायच ॥ अनंतायजगद्धात्रेब्रह्मणेऽनंतमूर्तये ॥ अव्यक्तायाखिलेशायचिद्रू

पायगुणात्मने ॥ नमोमूर्तायसिद्धायपरायपरमात्मने ॥ देवदेवायवंद्यायपरायपरमेष्ठिने ॥ कर्त्रेविश्वस्यगोप्त्रेचतत्संहर्त्रेचतेनमः ॥ अथ
तन्निवेदितंप्रापणंमूर्ध्निकृत्वाघोषयेत् ॥ केवैष्णवाइत्युच्चैर्वदेत् ॥ वयंवैष्णवावयंवैष्णवाइतिसमानाःप्रवदेयः ॥ तेभ्यःसमानेभ्योहविर्द
त्वा ॐनमोभगवतेवासुदेवायेतिद्वादशाक्षरमंत्रेण इदमहममृतंप्राश्नामीतिप्राश्यआचम्य ॥ यजमानआचार्योवासिद्धयेस्वाहेत्याज्यंजुहुया
त् ॥ ततोयतइंद्रभयामहइत्यात्मानमभिमंत्र्य स्विष्टकृदादिहोमशेषंसमापयेत् ॥ उत्तरपूजांकृत्वा ततोहोमावसानेचगामरोगांपयस्विनीम् ॥
सवत्सांकृष्णवर्णांचसवस्त्रांकांस्यदोहिनीम् ॥ दद्याद्व्रतसमाप्त्यर्थमाचार्यायसदक्षिणाम् ॥ भूषणानिविचित्राणिवासांसिविविधानिच ॥
चतुर्विंशतिसंख्यानिपक्वान्नानिचदापयेत् ॥ आचार्यायप्रदेयानिदक्षिणांभूयसींतदा ॥ यदीच्छेदात्मनःश्रेयोव्रतस्योद्यापनंचरेत् ॥ विप्रा
न्द्वादशसंख्याकान्नामभिःपृथगर्चयेत्॥उपवीतानितेभ्योवैदद्यात्कुंभान्सदक्षिणान् ॥ पक्वान्नफलसंयुक्तान्वस्त्रयुक्तांस्तुदापयेत् ॥ भोजयित्वात
तोविप्रान्पक्वान्नेनचभक्तितः ॥ अन्यानपियथाशक्तिब्राह्मणान्भोजयेद्व्रती ॥ व्रतंममास्तुसंपूर्णमित्युक्तैःपूजितैर्द्विजैः ॥ अस्तुसंपूर्णमित्यु
क्त्वाआचार्यसहितोव्रती ॥ जप्त्वावैष्णवसूक्तानिप्रणम्यचपुनःपुनः ॥ ॐभूःपुरुषमुद्वासयामीतिक्रमेणोद्वासयेत् ॥ इदंविष्णुरितिपीठमाचा
र्यायदत्वाततोबंधुजनैःसार्द्धंस्वयंभुंजीत ॥ इतिबौधायनोक्तंशुक्लकृष्णैकादशीव्रतोद्यापनंसंपूर्णम् ॥ अथपूजाविधिर्ब्राह्मे ॥ ॥ एकाद
श्यामुभेपक्षेनिराहारःसमाहितः ॥ स्नात्वासम्यग्विधानेनसोपवासोजितेंद्रियः ॥ संपूज्यविधिवद्विष्णुंश्रद्धयासुसमाहितः ॥ गंधपुष्पैस्तथा
धूपैर्दीपैर्नैवेद्यकैःपरैः ॥ उपचारैर्बहुविधैर्जपहोमैःप्रदक्षिणैः ॥ स्तोत्रैर्नानाविधैर्दिव्यैर्गीतवाद्यैर्मनोहरैः ॥ दंडवत्प्रणिपातैश्चजयशब्दै

स्तथोत्तमैः[1] ॥ एवंसंपूज्यविधिवद्रात्रौकृत्वाप्रजागरम्[2] ॥ यातिविष्णोःपरंस्थानंनरोनास्त्यत्रसंशयः ॥ ( पंचामृतेनसंस्नाप्यएकादश्यांजना
र्दनम् ॥ द्वादश्यांपयसास्नाप्यहरिसारूप्यमश्नुते )॥ इतिपूजाविधिः ॥ अथपुराणोक्तउभयैकादश्युद्यापनविधिः ॥ अर्जुनउवाच ॥ कीदृ
ग्व्रतविसर्गोत्रविधानंचात्रकीदृशम् ॥ संपूर्णंहिभवेद्येनतन्मेवदकृपानिधे ॥ श्रीकृष्णउवाच ॥ शृणुपांडवयत्नेनप्रवक्ष्यामितदव्ययम् ॥
शक्तःस्वर्णसहस्रंतुअशक्तःकाकिणींतथा ॥ ददातिश्रद्धयापार्थसमंस्यादुभयोरपि ॥ शक्तश्चेद्द्विगुणंदद्याद्यथोक्तोमध्यमोविधिः ॥ उक्तार्द्ध
मप्यशक्तस्यदानंपूर्णफलप्रदम् ॥ तद्रूपविधिमप्येकंकथयामितवाग्रतः ॥ यानिकष्टेनचीर्णानिव्रतानिकुरुसत्तम ॥ विफलान्येवसर्वाणिउद्या
पनविधिंविना ॥ प्रबोधसमयेपार्थकुर्यादुद्यापनक्रियाम् ॥ मार्गशीर्षेविशेषेणमाघेभीमतिथावपि ॥ दशम्यांदिनशेषेणरात्रौगुरुगृहंव्रजेत् ॥
एकादशीदिनेपार्थगुरुमभ्यर्च्यशक्तितः ॥ गृहीत्वाचरणौमूर्ध्नाप्रार्थयीतविचक्षणः॥पुण्यदेशोद्भवंविप्रंशांतंसर्वगुणान्वितम् ॥ सदाचाररतंपार्थ
वेदवेदांगपारगम् ॥ अस्मदीयंव्रतंविप्रविष्णुवासरसंभवम् ॥ संपूर्णंतुभवेद्येनतत्कुरुष्वद्विजोत्तम॥तस्याग्रेनियमःकार्योदंतधावनपूर्वकम्॥एका
दश्यांनिराहारःस्थित्वाचैवपरेहनि ॥ भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत॥एवंप्रभातसमयेशुचिर्भूत्वासमाहितः ॥ पाखंडिनांचसर्वेषांपतिता
नांचसंगमम् ॥ कामंदुरोदरंपार्थदूरतःपरिवर्जयेत् ॥ स्नानंकृत्वामंत्रपूर्वंनद्यादौविमलेजले ॥ तर्पयित्वापितॄन्देवान्पूजयेन्मधुसूदनम् ॥ उपलि
प्यशुचौदेशेकीटकेशास्थिवर्जिते ॥ वर्णैश्चसर्वतोभद्रंनीलपीतासितासितैः ॥ मंडलंचोद्धरेद्धूपसर्वकर्मसुपूजितम् ॥ ( अष्टांगुलोच्छ्रितांवेदींचतुर



१ अत्रैवाग्रआह । २ एवंसंपूज्यजागरंकुर्यादितिशेषइतिहेमाद्रौ ।

स्त्रांप्रकल्पयेत् ।। वितस्तिद्वयविस्तीर्णामक्षतैःपरिपूरिताम् ॥ तस्यामष्टदलंसम्यक्कमलंपरिकल्पयेत् ।। तन्मध्येस्थापयेत्कुंभंनवीनंसुस्थि
रंशुभम् ॥ अथवातंडुलानांचअष्टपत्रांबुजंचरेत् ॥ वारिपूर्णंघटंताम्रंपात्रंरौप्यसमुद्भवम् ॥ जातरूपमयंदेवंलक्ष्म्यायुक्तंजनार्दनम् ॥ साक्षतं
सोपवीतंचसहिरण्यंसवाससम् ॥ अक्षमालासमायुक्तंशंखचक्रगदाधरम् ॥ शक्त्यासुवर्णपुष्पैश्चपूजयेत्पुष्टिवर्द्धनम् ॥ अन्यैऋतूद्भवैःपुष्पै
रर्चयेद्विधिवन्नरः ॥ नैवेद्यांश्चचतुर्विंशत्यथदद्यादनुक्रमात् ॥ भक्त्याचतुर्विंशतिषुतिथिष्वपिपरंतप ॥ इच्छयावातथादद्याद्यदैवो
द्यापनंभवेत् ॥ मोदकानगुडकांश्चूर्णान्घृतपूरकमंडकान् ॥ सोहालिकादिकंसारसेवाःसक्तवएवच ॥ वटकान्पायसंदुग्धंशालिदध्यो
दनंतथा ॥ इंडरीकान्पूरिकाश्चअपूपान्गुडमोदकान् ॥ तिलपिष्टं[1]कर्णवेष्टंशालिपिष्टंसशर्करम् ॥ रंभाफलंचसघृतंमुद्गचूर्णगुडौदनम् ॥ एवं
क्रमेणनैवेद्यंपृथग्वाचरमेऽहनि ॥ पूजानामानि ॥ दामोदरायपादौतुजानुनीमाधवायच ॥ गुह्यंवैकामपतयेकट्यांवामनमूर्तये ॥ पद्मनाभाय
नाभिंतुह्युदरंविश्वमूर्तये ॥ हृदयंज्ञानगम्यायकंठंश्रीकंठसंगिने ॥ सहस्रबाहवेबाहूचक्षुषीयोगयोगिने ॥ ललाटमुरुगायेतिनासांनाकसुरे
श्वरम् ॥ श्रवणौश्रवणेशायशिखायांसर्वकामदम् ॥ सहस्रशीर्षायशिरःसर्वांगंसर्वरूपिणे ॥ शुभेननारिकेरेणबीजपूरेणवापुनः ॥ हृदि
ध्यात्वाजगन्नाथंदद्यादर्घ्यंविधानतः ॥ साक्षतंचसपुष्पंचसजलंचंदनान्वितम् ॥ पूर्वोक्तैरेवमंत्रैश्चव्रतपूर्तिकरैःसुधीः ॥ रात्रौजागरणंकुर्याद्गीत
शास्त्रविनोदतः ॥ इष्टंदत्तंधरादानंपिंडोदत्तोगयाशिरे ॥ कृतंदानंकुरुक्षेत्रेयैःकृतंजागरंहरेः ॥ नृत्यंगीतंप्रकुर्वंतिवीणावाद्यंतथैवच ॥

१ खंडपिष्टमितिपाठः ।

येपठंतिपुराणानितेनराःकृष्णवल्लभाः ॥ शास्त्रैर्वाप्यथवाभक्त्याशुचिर्वाप्यथवाशुचिः ॥ कृत्वाजागरणंविष्णोर्मुच्यतेपापकोटिभिः ॥ भुक्तो
वाप्यथवाभुक्तोजागरेसमुपस्थितः ॥ मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति ॥ यावत्पदानिस्वगृहात्केशवायतनंप्रति ॥ अश्वमेधसमानि
स्युर्जागरार्थंप्रयच्छतः ॥ पादयोःपांसुकणिकाधरण्यांनिपतंतियाः ॥ तावद्वर्षसहस्राणिजागरीवसतेदिवि ॥ बहून्यपिचपापानिकृतंजागरणं
हरेः ॥ निर्दहेन्मेरुतुल्यानियुगकोटिकृतान्यपि ॥ मनसासंस्मरेद्देवंतांरात्रिमतिवाह्यच ॥ प्रभातेविमलेस्नात्वाविप्रानाकारयेत्सुधीः ॥ चतुर्विं
शतिसंख्याकान्निगमागमदर्शिनः ॥ सर्वंकुर्याद्विधानेनजपहोमार्चनादिकम् ॥ शतमष्टोत्तरंहोमःसर्वत्रापिप्रशस्यते ॥ इदंविष्णुर्द्विजातीनांहो
ममंत्रःप्रकीर्तितः ॥ शूद्राणांचैवसर्वेषांमंत्रमष्टाक्षरंविदुः ॥ विविधैरपिवस्त्रैश्चभाजनैरासनैःसह ॥ पादत्राणंनवांगांचदद्यात्पार्थपृथक्पृथक् ॥
द्वादशैवाथशक्त्यावावस्त्रालंकारभूषणैः ॥ पूजयेत्पुष्पमालाभिः सपत्नीकान्द्विजोत्तमान् ॥ कुंभाद्वादशदातव्याःपक्वान्नजलपूरिताः ॥ भोज
यित्वाततोविप्रान्भक्तितोविचरेद्बुधः ॥ एकाहिकपिलादेयासर्वकामफलप्रदा ॥ यथास्वर्गश्चमोक्षश्चइहसंपूर्णताव्रते ॥ नमस्तेकपिलेदे
विसंसारार्णवतारिणि ॥ मयादत्ताद्विजेंद्रायप्रीयतांमेजनार्दनः ॥ सपत्नीकोगुरुःपूज्योमंडलेहरिसन्निधौ ॥ भूषणाच्छादनैर्भोज्यैः प्रणामैःपरि
तोषयेत् ॥ समाप्यवैष्णवं१धर्मंदद्यात्सर्वंधनंजय ॥ इष्टंचान्यद्यथाशक्त्यावित्तशाठ्यविवर्जितः ॥ जलदानंविशेषेणभूमिदानमतःपरम् ॥ प्रार्थ
येत्पुरुषाधीशंततोभक्त्याकृतांजलिः ॥ मयाद्यास्मिन्व्रतेदेवयदपूर्णंकृतंविभो ॥ सर्वंभवतुसंपूर्णंत्वत्प्रसादाज्जनार्दन ॥ त्वयिभक्तिः सदैवास्तु

१ श्राद्धमित्यपिपाठः ।

ममदामोदरप्रभो ॥ पुण्येबुद्धिःसतांसेवासर्वधर्मफलंचमे ॥ जपच्छिद्रंतपश्छिद्रंयच्छिद्रंव्रतकर्मणि ॥ सर्वसंपूर्णतांयातुत्व
त्प्रसादाद्रमापते ॥ प्रदक्षिणांततःकृत्वादंडवत्प्रणिपत्यच ॥ मंडलंमूर्तिसंयुक्तंसोपहारंसदक्षिणम् ॥ प्रीयतांविष्णुरित्युक्त्वा
आचार्यायनिवेदयेत् ॥ सर्वान्विसर्जयेत्पश्चात्संतोष्यपरिभोज्यच ॥ तदाज्ञयाततःकुर्यात्पारणंबंधुभिःसह ॥ एकादशीव्र
तंचैतद्यथाविधिकृतंपुरा ॥ यौवनाश्वेनभूपेनकथितंपुरतस्तव ॥ धनंजयतवप्रीत्याभक्त्यानुग्रहकारणात् ॥ यःकरोतिनरोभक्त्याव्रतमेतद्ध
यापहम् ॥ सयातिवैष्णवंस्थानंदाहप्रलयवर्जितम् ॥ उक्तमुद्यापनंचैवमुभयोःकुरुसत्तम॥किमन्यैर्बहुभिर्वाक्यैःप्रशंसापरमैर्भुवि ॥ एकादश्याः
परतरंत्रैलोक्येनहिविद्यते ॥ अत्रदानंतुगोदानंभूमिदानमथापिवा ॥ गोरोमबीजमूलानांसमसंख्यायुगानिहि ॥ दातारोविष्णुभव
नएकादश्यांवसंतिहि ॥ येपिशृण्वंतिसततंकथ्यमानांकथामिमाम् ॥ तेपिपापविनिर्मुक्ताःस्वर्गंयांतिनसंशयः ॥ इत्याकर्ण्यार्जुनोवाक्यंकृष्ण
स्यपरमाद्भुतम् ॥ आनंदंपरमंप्रापसौख्यंचापिनिरंतरम् ॥ इतिपुराणोक्तमुभयैकादशीव्रतोद्यापनंसंपूर्णम् ॥ अथाषाढशुक्लैकादश्यांगोपद्मव्र
तोद्यापनविधिः ॥ तत्रपूजाविधिः ॥ चतुर्भुजंमहाकायंजांबूनदसमप्रभम्॥शंखचक्रगदापद्मरमागरुडशोभितम्॥सेवितंमुनिभिर्देवैर्यक्षगंधर्वकि
न्नरैः ॥ एवंविधंहरिंध्यात्वाततोयजनमारभेत् ॥ ध्यानम् ॥ पुरुषोत्तमदेवेशभक्तानामभयप्रद ॥ संस्निग्धंवरदंशांतंमनसावाहयाम्यह
म् ॥ आवाहयामि ॥ सुवर्णमणिभिर्दिव्यैःखचितेदेवनिर्मिते ॥ दिव्यसिंहासनेस्निग्धेप्रविशत्वंसुराधिप ॥ आसनम् ॥ गंगोद

१ प्रणमेत्प्रभुमित्यपिपाठः ।

कंसुरश्रेष्ठसुवर्णकलशस्थितम् ॥ गंधपुष्पाक्षैर्युक्तं गृहाणरमयासह ॥ पाद्यम् ॥ अष्टगंधसमायुक्तंस्वर्णपात्रेस्थितंजलम् ॥ अर्घ्यंगृहाणभोदेवभक्तानामभयप्रद ॥ अर्घ्यम् ॥ देवदेवनमस्तुभ्यंपुराणपुरुषोत्तम ॥ मयादत्तमिदंतोयंगृह्णीष्वाचमनंकुरु ॥ आचम० ॥ पयोदधिघृतंदेवमधुशर्करयायुतम् ॥ पंचामृतंमयानीतंस्नानार्थंप्रतिगृह्यताम् ॥ पंचामृतस्नानम् ॥ नदीनांचैवसरसांमयानीतंजलंशुभम् ॥ अनेनस्नानंकुरुभोमंत्रैर्वारुणसंभवैः ॥ स्नानम् ॥ वस्त्रयुग्मंसमानीतंपट्टसूत्रेणनिर्मितम् ॥ सूक्ष्मंकार्पासतंतूनांसुवर्णेनाविराजितम् ॥ वस्त्रम् ॥ नारायणनमस्तेस्तुत्राहिमांभवसागरात् ॥ ब्रह्मसूत्रंसोत्तरीयंगृहाणपुरुषोत्तम ॥ यज्ञोपवीतम् ॥ केयूरमुकुटैर्युक्तान्नूपुरैरंगुलीयकैः ॥ मयाहृतानलंकारान्गृहाणमधुसूदन ॥ आभरणानि ॥ चंदनंमलयोद्भूतंकस्तूर्यगुरुसंयुतम् ॥ कर्पूरेणचसंमिश्रंस्वीकुरुष्वानुलेपनम् ॥ चंदनम् ॥ शतपत्रैः कर्णिकारैश्चंपकैर्मल्लिकादिभिः ॥ पुष्पैर्नानाविधैश्चैवपूजयामिसुरेश्वर ॥ पुष्पाणि ॥ दशांगोगुग्गुलूद्भूतः सुगंधिश्चमनोहरः ॥ आघ्रेयोदेवदेवेशधूपोयंप्रतिगृह्यताम् ॥ धूपम् ॥ एकार्तिकंसुरश्रेष्ठगोघृतेनसुवर्तिना ॥ संयुक्तंतेजसाकृष्णगृहाणादित्यदीपितम् ॥ दीपम् ॥ अन्नंचपायसंभक्ष्यंसितालेह्यसमन्वितम् ॥ दधिक्षीरघृतैर्युक्तंगृहाणसुरपूजित ॥ नैवेद्यम् ॥ नागवल्लीदलैर्युक्तंपूगीफलसमन्वितम् ॥ कर्पूरखदिरैर्युक्तंतांबूलंप्रतिगृह्यताम् ॥ तांबूलम् ॥ हिरण्यगर्भेतिदक्षिणाम् ॥ नीराजनंगृहाणेशपंचवर्तिभिरावृतम् ॥ तेजोराशेमयादत्तंलोकानंदकरप्रभो ॥ नीराजनम् ॥ अञ्जलिस्थानिपुष्पाणि अर्पयामिजगत्पते ॥ गृहाणसुमुखोभूत्वाजगदानंददायक ॥ पुष्पांजलिम् ॥ यानिकानीतिप्रदक्षिणाम् ॥ नमस्तेदेवदेवेशनमस्तेगरुडध्वज ॥ नमस्तेविष्णवेतुभ्यंव्रतस्यफलदायक ॥ नमस्कारान् ॥

मंत्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वर ॥ यत्पूजितंमयादेवपरिपूर्णंतदस्तुमे ॥ प्रार्थना ॥ कृतस्यकर्मणःसांगतासिद्ध्यर्थंवायनप्रदानंकरिष्येइतिसं
कल्प्य ॥ परमान्नमिदंदिव्यंकांस्यपात्रेणसंयुतम् ॥ वाणकंद्विजवर्यायसाहिरण्यंददाम्यहम् ॥ वायनम् ॥ इतिपूजासमाप्ता ॥ अथकथा ॥ व्या
संवसिष्ठनप्तारंशक्तेःपौत्रमकल्मषम् ॥ पराशरात्मजंवंदेशुकताततपोनिधिम् ॥ १ ॥ सूतउवाच ॥ द्वापरेद्वारवत्यांचनारदःकृष्णदर्शनात् ॥
उत्साहेनाभ्यगात्तत्रददर्शयदुनंदनम् ॥ २ ॥ पूजितश्चैवकृष्णेनविष्टरादिभिरादरात् ॥ ततःप्रोवाचतंविष्णुर्नारदंलोकपूजितम् ॥ ३ ॥ श्रीकृष्ण
उवाच ॥ शृणुलोकज्ञदेवर्षेभुवनेविचरन्सदा ॥ लोकांतरेषुचरितंयद्विशेषंवदस्वमे ॥ ४ ॥ नारदउवाच ॥ भगवन्देवदेवेशभक्तोऽस्मितवचांकितः ॥
तत्राश्चर्यमिदंवक्ष्येधर्मस्यसदसिस्थितम् ॥ तत्रसर्वेसमासीनाःसुराइंद्राश्चतुर्दश ॥५॥ तथैकादशरुद्राश्चआदित्याद्वादशापिच ॥ वसवोऽष्टौतथा
नागायक्षराक्षसपन्नगाः ॥ ६ ॥ तेसर्वेयममाहुश्चस्थितंसिंहासनेशुभे ॥ मानुष्यंदुंदुभेश्चर्माच्छादनार्थंवदस्वनः ॥७ ॥ यमउवाच ॥ चातुर्मास्य
व्रतंचैकंसंक्रांतिव्रतमेवच ॥ नकुर्वंति[1]चयानार्यस्तासामाच्छादनंत्वचा ॥ ८ ॥ कुर्वंतुदुंदुभेश्चास्यविचरध्वंमहाभटाः ॥ तेतस्यवचनंश्रुत्वाभटाः
प्रविविशुर्भुवम् ॥ ९ ॥ स्वामिन्निदंमहाश्चर्यमतस्त्वांप्रवदामिच ॥ तच्छ्रुत्वात्वरितंकृष्णःप्राहलोकान्पुरःस्थितान् ॥ १० ॥ तथाकुर्वंतुलोकाश्च
नार्यःपुर्यांवसंतिहि ॥ तच्छ्रुत्वाचरितंकृष्णनारीभिर्नगरेषुच ॥ ११ ॥ कृष्णाज्ञयाकृष्णदूताःप्रोचुस्तेसर्वयोषितः ॥ पुरःसराःप्रकुर्वंत्योनग
रस्थाश्चयोषितः ॥ १२ ॥ अन्यत्रयत्रकुत्रापिऊचुस्तायदुनंदनम् ॥ त्वत्सोदरींविनास्वामिन्नान्यानार्यौत्रसंतिहि ॥ १३ ॥ तच्छ्रुत्वाभयसं

---

१ व्रतमकुर्वत्यइतिशेषः ।

त्रस्तःसोदरींप्रत्यभाषत ॥ कृष्णउवाच ॥ सुभद्रेकिंकरोषीहआगतायमसेवकाः ॥ १४ ॥ व्रतंयन्नकृतंभद्रेचैकंपुण्योद्भवंपुरा ॥ सुभद्रोवाच ॥
सर्वव्रतान्यहंकृष्णाकार्षमत्रनसंशयः ॥ १५ ॥ नोचेत्त्वत्सोदरीनस्यांयोषिच्चाप्यर्जुनस्यच ॥नस्यांमाताऽभिमन्योर्वैयमदूताःकथंविभो॥१६॥
कृष्णउवाच ॥ कुरु[2]त्वंभगिनीमेऽद्यव्रतमेकंशुभप्रदम् ॥ १७ ॥ गोपद्मामितिविख्यातंव्रतंलोकेषुविश्रुतम् ॥ सूतेनकथितंपूर्वमृषीणांहितकाम्य
या ॥ नैमिषेहिमवत्पार्श्वेसिद्धाश्रममनुत्तमम् ॥ १८ ॥ तत्रसूतोगमद्द्रष्टुंमुनीनांयज्ञमुत्तमम् ॥ तंदृष्ट्वामुनयःसर्वेहर्षिताश्चमुहुर्मुहुः ॥ १९॥
अर्चितश्चततःसर्वैरर्घ्यादिभिर्यथाविधि ॥ अभ्यर्च्यसूतंतंविप्राऊचुस्तेप्रीतिपूर्वकम् ॥ २० ॥ ऋषयऊचुः ॥ भवांल्लोकस्यधर्मज्ञोभक्तानां
ज्ञानसाधनम् ॥ समर्थंसर्वमुक्तीनांसर्वसौभाग्यकारकम् ॥ २१ ॥ कृपयाम्[3]मुनिशार्दूलकथयस्वोत्तमंव्रतम् ॥ सूतउवाच ॥ शृणुध्वमृषयःस
र्वेव्रतानामुत्तमंव्रतम् ॥ २२ ॥ गोपद्मामितिविख्यातंसर्वपापहरंपरम् ॥ सर्वदुःखोपशमनंसर्वसंपत्प्रदायकम् ॥ २३ ॥ यमस्यदंडनंयस्मादूरी
कृतमनुत्तमम् ॥ सुवासिन्यास्तुसौभाग्यपुत्रपौत्रप्रवर्द्धनम् ॥ २४ ॥ ऋषयऊचुः ॥ कस्मिन्मासिकथंकार्यंकिंफलंकस्यपूजनम् ॥ केनचीर्णंपुरासाधोतत्सर्वंकथयस्वनः ॥ २५ ॥ सूतउवाच ॥ आषाढशुक्लपक्षस्यएकादश्यांविशेषतः ॥ तदारभ्यकार्तिकस्यद्वादश्यंतंव्रतंचरेत् ॥
॥ २६ ॥ गोष्ठेचशुद्धेगोस्थानेगोमयेनोपलिप्यच ॥ त्रयस्त्रिंशच्चपद्मानिकारयेद्व्रीहिपिष्टकैः ॥ २७ ॥ शोभयेत्पंचरंगैश्चगंधपुष्पैःप्रपू
जयेत् ॥ तत्संख्ययाचकर्तव्यानमस्कारप्रदक्षिणाः ॥ २८ ॥ तत्संख्ययाह्यपूपांश्च ब्राह्मणायनिवेदयेत् ॥ वायनंद्विजवर्यायप्रथमेवत्सरेशु

१ आगताइतिशेषः । २ तथापिभगिनित्वंहिव्रतमेकंचरस्वहेतिपाठः । ३ मननशीलानांमध्येश्रेष्ठ ।

भम् ॥ २९ ॥ द्वितीयेवत्सरेदद्यात्पायसंसुविनिर्मितम् ॥ तृतीयेमंडकान्दद्याच्चतुर्थेगुडमिश्रितान् ॥ ३० ॥ पंचमेघारिकादद्यात्पूर्णे उद्यापनंचरेत् ॥ एकादश्यामुपवसेद्दंतधावनपूर्वकम् ॥ अभ्यंगंतुप्रकुर्वीतस्वार्चितैर्ब्राह्मणैःसह ॥ ३१ ॥ मंडपंकारयेत्तत्रकदलीस्तंभमंडितम् ॥ ३२ ॥ नानापुष्पैश्चशोभाढ्यंमखरंतत्रकारयेत् ॥ तन्मध्येसर्वतोभद्रंपंचरंगैःसमन्वितम् ॥ ३३ ॥ पुण्याहंवाचयित्वातुप्रतिमायांयजेद्धरिम् ॥ कर्षमात्रसुवर्णेनतदर्धार्द्धेनवापुनः ॥ ३४ ॥ माषमात्रसुवर्णेनावित्तशाठ्यंनकारयेत् ॥ आचार्यंवरयित्वाचकलशंस्थापयेत्ततः ॥ ३५ ॥ लक्ष्मीनारायणंस्थाप्यसौवर्णेनप्रकल्पितम् ॥ ब्रह्माद्यावाहनंतत्रपूजयेद्धूपदीपकैः ॥ ३६ ॥ द्वादशैवतुनामानिप्रत्येकंपूजयेद्व्रती ॥ रात्रौजागरणंकृत्वागीतवाद्यादिमंगलैः ॥ ३७ ॥ ततःप्रभातेउत्थायस्नात्वाहोमंतुकारयेत् ॥ सतिलाज्यसमिद्द्रव्यंहुनेद्द्वादशनामभिः ॥ ३८ ॥ पायसंचशतंचाष्टौहुत्वापूर्णाहुतिंचरेत् ॥ वत्सेनसहितांधेनुमाचार्यायनिवेदयेत् ॥ ३९ ॥ विप्रान्पंचसपत्नीकान्भोजयेत्षड्रसैर्व्रती ॥ भुंजीतबंधुभिःसार्द्धमेकाग्रकृतमानसः ॥ ४० ॥ अन्यानपियथाशक्त्याब्राह्मणानपिभोजयेत् ॥ कृत्वाचेदंव्रतंपुण्यंसर्वान्कामानवाप्नुयात् ॥ ४१ ॥ अंतेस्वर्गपदंगच्छेत्सर्वपापविवर्जितः ॥ ऋषयऊचुः ॥ त्वत्प्रसादात्कृतार्थाभोगच्छामःस्वाश्रमान्वयम् ॥ ४२ ॥ प्रणम्यमुनिभिःसाकंसूतश्चांतर्हितोऽभवत् ॥ मुनिभिःसर्वलोकेषुकथितंव्रतमुत्तमम् ॥ ४३ ॥ नातःपरतरंपुण्यंत्रिषुलोकेषुविश्रुतम् ॥ कृष्णस्यवचनंश्रुत्वासुभद्रातत्तथाऽकरोत् ॥ ४४ ॥ पंचाब्दंव्रतमंतेहिरात्रौयामचतुष्टयम् ॥ अकरोज्जागरं

१ निर्मितायामितिशेषः ।

प्रातर्जुहावचहुताशनम् ॥ ४५ ॥ एवंव्रतेकृतेपश्चात्पुर्यांयमभटाविशन् ॥ यमभटाऊचुः ॥ सुभद्रेतवदेहस्यचर्मार्थंचागतावयम् ॥ ॥ ४६ ॥ लोकेऽस्मिंस्तुव्रतंयेननकृतंभाक्तिपूर्वतः ॥ तच्चर्मणापिनद्धव्यःपटहोयमशासनात् ॥ ४७ ॥ सुभद्रोवाच ॥ भटाःपश्यतमेचीर्णंगोपद्मव्रतमुत्तमम् ॥ दत्तापुंवत्ससहिताधेनुर्विप्रायदक्षिणा ॥ ४८ ॥ गोष्ठेपद्मानिचान्यत्रसर्वैंपश्यंतुहेभटाः ॥ अन्योन्यवादसमयेविष्णुदूताःसमागताः ॥ ४९ ॥ तान्दृष्ट्वाताडयामासुर्व्रतस्यास्यप्रभावतः ॥ पलायितामहाभीताःस्मरंतोयमशासनम् ॥ ५० ॥ तान्दृष्ट्वारक्तदिग्धांगान्यमोभयसमन्वितः ॥ कस्येदंकृत्यमितिचज्ञात्वातींद्रियदर्शनान् ॥ ५१ ॥ उवाचदूताःशृणुतयत्रसंपूज्यतेहरिः ॥ नगंतव्यंभवद्भिश्चसत्यंसत्यंवदाम्यहम्॥५२॥प्राप्तवंतोदैववशाद्धिविशध्वंमहाभटाः ॥इत्युक्त्वाधर्मराजोऽसौशालायांचविवेशह ॥५३॥ तेनदेवर्षिणामह्यंकथितंव्रतमीदृशम् ॥ दमयंत्यातथाबालेराज्यभ्रंशात्कृतंव्रतम् ॥ ५४ ॥ व्रतस्यास्यप्रभावेणराज्यसौभाग्यसंपदः ॥ पुत्रपौत्रादिसौभाग्यंभुक्त्वामोक्षमवाप्नुयात् ॥ ५५ ॥ इतिश्रीभविष्योत्तरपुराणेगोपद्मव्रतोद्यापनंसंपूर्णम् ॥ ॥ अथपुरुषोत्तममासस्यैकादशी ॥ युधिष्ठिरउवाच[1] ॥ भगवञ्छ्रोतुमिच्छामिव्रतानामुत्तमंव्रतम् ॥ सर्वपापहरंचैवभुक्तिमुक्तिप्रदायकम् ॥ १ ॥ पुरुषोत्तममासस्यकथांब्रूहिजनार्दन ॥ कोविधिःकिंफलंतस्यकोदेवस्तत्रपूज्यते ॥ २ ॥ अधिमासेतुसंप्राप्तेव्रतंब्रूहिजनार्दन ॥ कस्यदानस्यकिंपुण्यंकिंकर्तव्यंनृभिःप्रभो ॥ ३ ॥ कथंस्नानंचकिंजप्यंकथंपूजाविधिःस्मृतः ॥ किंभोज्यमुत्तमंचान्नंमासेवैपुरुषोत्तमे ॥ ४ ॥ श्रीकृष्णउवाच ॥ कथयिष्यामिराजें

१ अत्रप्रश्नप्रत्युत्तरयोर्वैषम्यंविचारणीयम् ।

द्रभवतःस्नेहकारणात् ॥ अधिमासेतुसंप्राप्तेभवेदेकादशीतुया ॥ ५ ॥ कमलानामनामेतितिथीनामुत्तमातिथिः ॥ तस्याश्चैवप्रभावे
णकमलाभिमुखीभवेत् ॥ ६ ॥ ब्राह्ममुहूर्तेचोत्थायस्मृत्वातंपुरुषोत्तमम् ॥ स्नात्वाचैवविधानेनव्रतीनियममाचरेत् ॥ ७ ॥ गृहेत्वेकगु
णंजाप्यंनद्यांदशगुणंस्मृतम् ॥ गवांगोष्ठेशतगुणमग्न्यगारेदशाधिकम् ॥ ८ ॥ शिवक्षेत्रेषुतीर्थेषुदेवतानांचसन्निधौ ॥ सहस्रशतकोटीनामनंतं
विष्णुसन्निधौ ॥ ९ ॥ अवंत्यामभवद्विप्रःशिवधर्मेतिनामतः ॥ तस्यपंचस्वात्मजेषुकनिष्ठोदुष्टकर्मकृत् ॥ १० ॥ तदापित्रापरित्यक्तस्त्यक्तः
स्वजनबंधुभिः ॥ स्वकर्मणःप्रभावेणगतोदूरतरंवनम् ॥ ११ ॥ एकदादैवयोगेनतीर्थराजंसमागमत् ॥ क्षुत्क्षामोदीनवदनस्त्रिवेण्यांस्नानमाचरत् ॥
॥ १२ ॥ ऋषीणामाश्रमांस्तत्रविचिन्वन्क्षुधयाऽर्दितः ॥ हरिमित्रमुनेस्तत्रत्वाश्रमंचददर्शह ॥ १३ ॥ [१]पुरुषोत्तममासेतुश्रद्धयाकमलास्तुता ॥
एकादशीपुण्यतमाभुक्तिमुक्तिप्रदायिनी ॥ १४ ॥ पुरुषोत्तममासेतुजनानांचसमागमे ॥ तत्राश्रमेकथयतांकथांकल्मषनाशिनीम् ॥ १५ ॥
जपन्छद्मेणतांश्रुत्वाकमलांपापहारिणीम् ॥ व्रतंकृत्वाचतैःसार्द्धंस्थितःशून्यालयेतदा ॥ १६ ॥ निशीथेसमनुप्राप्तेकमलाऽत्रसमागता ॥ वरंद
दामिभोविप्रकमलायाःप्रभावतः ॥ १७ ॥ विप्रउवाच ॥ कात्वंकस्यासिरंभोरुप्रसन्नाचकथंमम ॥ ऐंद्रीत्वमिंद्रदेवस्यभवानीशंकरस्यच
॥ १८ ॥ वधूर्वाचंद्रसूर्यस्यगांधर्वीकिन्नरीतथा ॥ त्वत्सदृशीनदृष्टाचनश्रुताचशुभानने ॥ १९ ॥ लक्ष्मीरुवाच ॥ प्रसन्नासांप्रतंजातावैकुण्ठा

१ तत्राश्रमेपुरुषोत्तममासस्यकल्मषनाशिनींकथांकथयतांजनानांसमागमेपुरुषोत्तममासाधिकरणिकाभुक्तिमुक्तिप्रदायिनीपुण्यतमाकमलाख्यायाएकादशीश्रद्धयास्तुताअर्थात्तैस्तांपापहारिणींकमलांश्रुत्वाजपन्संस्तैर्जनैः सार्धंव्रतंकृत्वाशून्यालयेस्थितआसीदितिश्लोकत्रयान्वयः ।

दहमागता ॥ प्रेरिताहरिदेवेनएकादश्याःप्रभावतः ॥ २० ॥ पुरुषोत्तममासस्यशुक्लेकृष्णेतुयाभवेत् ॥ कमलानामसाप्रोक्ताकमलांदातुमाग
ता ॥ २१ ॥ पुरुषोत्तममासस्ययापक्षेप्रथमेभवेत् ॥ तस्यांव्रतंत्वयाचीर्णंप्रयागेमुनिसन्निधौ ॥ २२ ॥ व्रतस्यास्यप्रभावेणवशगाहंनसंशयः॥
तववंशेभविष्यंतिमानवाद्विजसत्तम ॥ २३ ॥ लभंतेमत्प्रसादंतुसत्यंतेव्याहृतंमया ॥ विप्रउवाच ॥ प्रसन्नायदिमेपद्मेव्रतंविस्तरतोवद
॥२४॥ यत्कथासुप्रवर्ततेराजानोयेजगद्धिताः ॥ लक्ष्मीरुवाच ॥ श्रोतॄणांपरमंश्राव्यंपवित्राणामनुत्तमम् ॥२५॥ दुःस्वप्ननाशनंपुण्यंश्रोतव्यं
यत्नतस्ततः ॥ उत्तमःश्रद्धयायुक्तःश्लोकंश्लोकार्द्धमेवच ॥ २६ ॥ पठित्वामुच्यतेसद्योमहापातककोटिभिः॥ मासानांपरमोमासःपक्षिणांगरुडो
यथा ॥ २७ ॥ नदीनांचयथागंगातिथीनांद्वादशीतिथिः ॥ तस्यामर्चंतिविबुधानारायणमनामयम् ॥ २८ ॥ येयजंतिसदाभक्त्यानारायण
मनामयम् ॥ तानर्चयंतिसततंब्रह्माद्यादेवतागणाः ॥ २९ ॥ नारायणपरायेचहरिकीर्तनतत्पराः ॥ परिप्रजागरायेचकृतार्थास्ते
कलौयुगे ॥ ३० ॥ शुक्लेवायदिवाकृष्णेभवेदेकादशीद्वयम् ॥ गृहस्थानांचपूर्वातुयतीनामुत्तरास्मृता ॥ ३१ ॥ [1]एकादशीं
द्वादशींचरात्रिशेषेत्रयोदशीं ॥ व्रतेक्रतुशतंपुण्यंत्रयोदश्यांतुपारणम् ॥ ३२ ॥ एकादश्यांनिराहारःस्थित्वाहमपरेहनि ॥ भोक्ष्या
मिपुंडरीकाक्षशरणंमेभवाच्युत ॥ ३३ ॥ अमुंमंत्रंसमुच्चार्यदेवदेवस्यचक्रिणः ॥ भक्तिभावेनतुष्टात्माचोपवासंसमर्पयेत् ॥ ३४ ॥
देवदेवस्यपुरतो[2]जागरंनियतोव्रती ॥ गीतैर्वाद्यैश्चनृत्यैश्चपुराणपठनादिभिः ॥ ३५ ॥ ततःप्रातःसमुत्थायद्वादशीदिवसेव्रती ॥ स्नात्वा

१ इदंतुउपोष्याद्वादशीशुद्धेत्येतद्वचनसंवादि । २ कुर्यादितिशेषः ।

विष्णुंसमभ्यर्च्यविधिवत्प्रयतेंद्रियः ॥ ३६ ॥ पंचामृतेनसंस्नाप्यएकादश्यांजनार्दनम् ॥ द्वादश्यांचपयःस्नानं[1]हरेःसारूप्यमश्नुते ॥ ३७ ॥
अज्ञानतिमिरांधस्यव्रतेनानेनकेशव ॥ प्रसीदसुमुखोनाथज्ञानदृष्टिप्रदोभव ॥ ३८ ॥ एवंविज्ञाप्यदेवेशंदेवदेवंचचक्रिणम् ॥ ब्रा
ह्मणान्भोजयेत्पश्चात्तेभ्योदद्याच्चदक्षिणाम् ॥ ३९ ॥ ततःस्वबंधुभिःसार्द्धंनारायणपरायणः ॥ कृत्वापंचमहायज्ञान्स्वयंभुंजीतवाग्यतः ॥
॥ ४० ॥ एवंयःप्रयतःकुर्यात्पुण्यमेकादशीव्रतम् ॥ सयातिविष्णुभवनंपुनरावृत्तिदुर्लभम् ॥ ४१ ॥ इत्युक्त्वाकमलातस्मैप्रसन्नातस्यवंशं[2]गा ॥
सोपिविप्रोधनीभूत्वापितुर्गेहंसमाविशत् ॥ ४२ ॥ एवंयःकुरुतेराजन्कमलाव्रतमुत्तमम् ॥ शृणुयाद्वासरेविष्णोःसर्वपापैःप्रमुच्यते ॥ ४३ ॥
इति श्रीब्रह्मांडपुराणेपुरुषोत्तममासेकमलानामैकादशीमाहात्म्यंसंपूर्णम् ॥ भाद्रपदेश्रवणैकादश्यांमध्याह्नेवामनावतारः ॥ श्रवणयुक्त
शुक्लैकादश्यलाभेतुदशमीविद्धापिश्रवणयुताग्राह्या ॥ तथाचमदनरत्नेवह्निपुराणे ॥ दशम्यैकादशीयत्रसानोपोष्याभवेत्तिथिः ॥ श्रवणे
नतुसंयुक्तासोपोष्यासर्वकामदा ॥ अथकार्तिकशुक्लैकादश्यांप्रबोधविधिः ॥ हेमाद्रौब्राह्मे ॥ एकादश्यांतुशुक्लायांकार्तिकेमासिकेशवम् ॥
प्रसुप्तंबोधयेद्रात्रौश्रद्धाभक्तिसमन्वितः ॥ नृत्यैर्गीतैस्तथावेदैर्ऋग्यजुःसाममंगलैः ॥ वीणापणवशब्दैश्चपुराणश्रवणेनच ॥ वासुदे
वकथाभिश्चस्तोत्रैरन्यैश्चवैष्णवैः ॥ सुभाषितैरिंद्रजालैर्भूरिशोभाभिरेवच ॥ पुष्पैर्धूपैश्चनैवेद्यैर्दीपवृक्षैःसुशोभनैः ॥ होमैर्भक्ष्यैरपूपै
श्चफलैःशर्करपायसैः ॥ इक्षोर्विकारैर्मधुरैर्द्राक्षाक्षौद्रैःसदाडिमैः ॥ कुठेरकस्यमंजर्यामालत्याकमलेन[3]च ॥ कुठेरकःपर्णाशः ॥ कृष्णतुलसी

१ दत्वेतिशेषः । २ अभवदितिशेषः । ३ कट्फलेनेतिक्वचित्पाठः ।

तिकेचित् ॥ हृताभ्यांश्वेतरक्ताभ्यांचंदनाभ्यांचसर्वदा ॥ कुंकुमालक्तकाभ्यांचरक्तसूत्रैःसकंकणैः ॥ तथानानाविधैःपुष्पैर्द्रव्यैर्वीराक्रियाहृतैः ॥ विक्रेत्राप्रथमतोऽभिहितंमूल्यंदत्वाक्रियमाणःक्रयोवीरक्रयः ॥ तस्यांरात्र्यांव्यतीतायांद्वादश्यामरुणोदये ॥ आदौघृतेनैक्षवेणमधुनास्नापयेत्ततः ॥ दध्नाक्षीरेणचतथापंचगव्येनशास्त्रवित् ॥ उद्वर्तनंमाषचूर्णमधुरामलकानिच ॥ सर्षपाश्चप्रियंगुश्चमातुलिंगरसस्तथा ॥ सर्वौषध्यःसर्वगंधाःसर्वबीजानिकांचनम् ॥ मंगलानियथाकामंरत्नानिचकुशोदकम् ॥ एवंसंशोध्यदेवेशंदद्याद्गोरोचनंशुभम् ॥ ततस्तुकलशान्स्थाप्ययथाप्राप्तांस्त्वलंकृतान् ॥ जातीपल्लवसंयुक्तान्सफलांश्चसकांचनान् ॥ पुण्याहवेदशब्देनवीणावेणुरवेणच ॥ एवंसंस्नाप्यगोविंदंस्वनुलिप्तंस्वलंकृतम् ॥ सुवाससंतुसंपूज्यसुमनोभिःसकुंकुमैः ॥ धूपैर्दीपैर्मनोज्ञैश्चपायसेनचभूरिणा ॥ हविष्यैश्चान्नदानैश्चहोमैःपुष्पैःसदक्षिणैः ॥ वासोभिर्भूषणैरन्यैर्गोभिरश्वैर्मनोजवैः ॥ ब्राह्मणाःपूजनीयाश्चविष्णोरीड्याश्चमूर्तयः ॥ यत्तुशिष्टामृतंपश्चाद्भोक्तव्यंब्राह्मणैःसह ॥ इतिप्रबोधोत्सवविधिः ॥ अथ कार्तिकशुक्लैकादश्यांभीष्मपंचकव्रतंहेमाद्रौनारदीये ॥ नारदउवाच ॥ यदेतदचलंपुण्यंव्रतानामुत्तमंव्रतम् ॥ कर्तव्यंकार्तिकेमासिप्रयत्नाद्भीष्मपंचकम् ॥ १ ॥ विधानंतस्यविस्पष्टंफलंचापिततोवरम् ॥ कथयस्वप्रसादेनमुनीनांहितकाम्यया ॥ २ ॥ ब्रह्मोवाच ॥ प्रवक्ष्यामिमहापुण्यंव्रतंव्रतविदांवर ॥ भीष्मेणैवचसंप्राप्तंव्रतंपंचादिनात्मकम् ॥ ३ ॥ सकाशाद्वासुदेवस्यतेनोक्तंभीष्मपंचकम् ॥ व्रतस्यास्यगुणान्वक्तुंकःशक्तःकेशवादृते ॥ ४ ॥ व्रतंचैतन्महापुण्यंमहापातकनाशनम् ॥ अतोवरंप्रयत्नेनकर्तव्यंभीष्मपंचकम्[2] ॥ ५ ॥ सनत्कुमारसंहितायाम् ॥



१ व्रतवतामित्यपिपाठः । २ एतदग्रिमंविध्यादिकथनंसविस्तरंव्रतार्कादवगंतव्यम् ।

वालखिल्याऊचुः ॥ कार्तिकस्यामलेपक्षेस्नात्वासम्यग्यतव्रतः ॥ एकादश्यांतुगृह्णीयाद्व्रतंपंचदिनात्मकम् ॥ ६ ॥ शरपंजरसुप्तेनभीष्मे
णतुमहात्मना ॥ राजधर्मादानधर्मामोक्षधर्मास्ततःपरम् ॥ ७ ॥ कथिताःपांडुदायादैःकृष्णेनापिश्रुतास्तदा ॥ ततःप्रीतेनमनसावासुदेवेनभा
षितम् ॥ ८ ॥ धन्यधन्योसिभीष्मत्वंधर्माःसंश्राविताम्त्वया ॥ एकादश्यांकार्तिकस्ययाचितंचजलंत्वया ॥ ९ ॥ अर्जुनेनसमानीतं
गांगंबाणस्यवेगतः ॥ तुष्टानितवगात्राणितस्मादेवदिनादिह ॥ १० ॥ पूर्णांतंसर्वलोकास्त्वांतर्पयंत्वर्घ्यदानतः ॥ तस्मात्सर्वप्रयत्नेनम
मसंतुष्टिकारकम् ॥ ११ ॥ एतद्व्रतंप्रकुर्वंतुभीष्मपंचकसंज्ञितम् ॥ कार्तिकस्यव्रतंकृत्वानकुर्याद्भीष्मपंचकम् ॥ १२ ॥ कार्तिकस्यव्रतं
सर्वंवृथातस्यभविष्यति ॥ अशक्तश्चेन्नरोभूयादसमर्थश्चकार्तिके ॥ १३ ॥ भीष्मस्यपंचकंकृत्वाकार्तिकस्यफलंलभेत् ॥ सत्यव्रतायशुचये
गांगेयायमहात्मने ॥ १४ ॥ भीष्मायैतद्ददाम्यर्घ्यमाजन्मब्रह्मचारिणे ॥ सव्येनानेनमंत्रेणतर्पणंसार्ववर्णिकम् ॥ १५ ॥ व्रतांगत्वात्पूर्णिमायां
प्रदेयःपापपूरुषः ॥ अपुत्रेणप्रकर्तव्यंसर्वथाभीष्मपंचकम् ॥ १६ ॥ यःपुत्रार्थीव्रतंकुर्यात्सस्त्रीकोभीष्मपंचकम् ॥ तंदत्वापापपुरुषंवर्षमध्ये
सुतंलभेत् ॥ १७ ॥ अवश्यमेवकर्तव्यंतस्माद्भीष्मस्यपंचकम् ॥ विष्णुप्रीतिकरंप्रोक्तंमयाभीष्मस्यपंचकम् ॥ १८ ॥ अत्रैवहिप्रकर्तव्यः
प्रबोधस्तुहरेःखग ॥ हतःशंखासुरोदैत्योनभसःशुक्लपक्षके ॥ १९ ॥ एकादश्यांततोविष्णुश्चातुर्मास्येप्रसुप्तवान् ॥ क्षीरोदधौजाग्रतोसावेका
दश्यांतुकार्तिके ॥ २० ॥ अतःप्रबोधनंकार्यमेकादश्यांतुवैष्णवैः ॥ उत्तिष्ठोत्तिष्ठशंखघ्नउत्तिष्ठांभोधिचारक ॥ कूर्मरूपधरोत्तिष्ठत्रैलोक्येमंग
लंकुरु ॥ २१ ॥ उत्तिष्ठोत्तिष्ठवाराहदंष्ट्रोद्धृतवसुंधर ॥ हिरण्याक्षप्राणघातिन्त्रैलोक्येमंगलंकुरु ॥ २२ ॥ हिरण्यकशिपुघ्नत्वंप्रह्लादानंददायक ॥

लक्ष्मीपतेसमुत्तिष्ठत्रैलोक्येमंगलंकुरु ॥ २३ ॥ उत्तिष्ठबलिदर्पघ्नदेवेंद्रपददायक ॥ उत्तिष्ठादितिपुत्रत्वंत्रैलोक्येमंगलंकुरु ॥ २४ ॥
उत्तिष्ठहैहयाधीशसमस्तकुलनाशन ॥ रेणुकाघ्नत्वमुत्तिष्ठत्रैलोक्येमंगलंकुरु ॥ २५ ॥ उत्तिष्ठरक्षोदलनअयोध्यास्वर्गदायक ॥
समुद्रसेतुकर्तस्त्वंत्रैलोक्ये० ॥ २६ ॥ उत्तिष्ठकंसहरणमदघूर्णितलोचन ॥ उत्तिष्ठहलपाणेत्वंत्रै० ॥ २७ ॥ उत्तिष्ठत्वंगयावासिंस्त्य
क्तलौकिकवृत्तक ॥ उत्तिष्ठपद्मासनगत्रै० ॥ २८ ॥ उत्तिष्ठम्लेच्छनिवहखड्गसंहारकारक ॥ अश्ववाहयुगांतेत्वंत्रै० ॥ २९ ॥
उत्तिष्ठोत्तिष्ठगोविंदउत्तिष्ठगरुडध्वज ॥ उत्तिष्ठकमलाकांतत्रैलोक्येमंगलंकुरु ॥ ३० ॥ इत्युक्त्वाशंखभेर्यादिप्रातःकालेतुवादयेत् ॥ वीणावे
णुमृदंगादिगीतनृत्यादिकारयेत् ॥ ३१ ॥ उत्थापयित्वादेवेशंपूजांतस्याविधायच ॥ सायंकालेप्रकर्तव्यस्तुलस्युद्वाहनोविधिः ॥ ३२ ॥ अ
वश्यमेवकर्तव्यःप्रतिवर्षंतुवैष्णवैः ॥ विधिंतस्यप्रवक्ष्यामियथासांगाक्रियाभवेत् ॥ ३३ ॥ विष्णोस्तुप्रतिमांकुर्यात्पलस्यस्वर्णजांशुभाम् ॥
तदर्धार्धंतुलस्यास्तुयथाशक्त्याप्रकल्पयेत् ॥ ३४ ॥ प्राणप्रतिष्ठांकुर्यात्तुतुलसीविष्णुरूपयोः ॥ ततउत्थापयेद्देवंपूर्वोक्तैश्वस्तवादिभिः
॥ ३५ ॥ उपचारैःषोडशभिःपुरुषसूक्तेनपूजयेत् ॥ देशकालौततःस्मृत्वागणेशंतत्रपूजयेत् ॥ ३६ ॥ पुण्याहंवाचयित्वाथनांदीश्राद्धंसमाच
रेत् ॥ वेदवाद्यादिनिर्घोषैर्विष्णुमूर्त्तिंसमानयेत् ॥ ३७ ॥ तुलस्यानिकटेसातुस्थाप्याचांतरितापटैः ॥ आगच्छभगवन्देवअर्चयिष्यामिकेशव
॥ ३८ ॥ तुभ्यंददामितुलसींसर्वकामप्रदोभव ॥ दद्यात्त्रिवारमर्घ्यंचपाद्यंविष्टरमेवच ॥ ३९ ॥ ततश्चाचमनीयंचत्रिरुक्त्वाचप्रदापयेत् ॥ ततो
दधिघृतंक्षौद्रंकांस्यपात्रपुटीकृतम् ॥ ॥ ४० ॥ मधुपर्कंगृहाणत्वंवासुदेवनमोस्तुते ॥ ततोयेस्वकुलाचाराः कर्तव्याविष्णुतुष्टये ॥ ४१ ॥

हरिद्रालेपनाभ्यंगकार्यंसर्वंविधायच ॥ गोधूलिसमयेपूज्यौतुलसीकेशवौपुनः ॥ ४२ ॥ पृथक्पृथक्ततःकार्यौसंमुखौमंगलंपठेत् ॥ ईषद्दृष्टे
भास्करेतुसंकल्पंतुसमाचरेत् ॥ ४३ ॥ स्वगोत्रप्रवरानुक्त्वातथात्रिपुरुषादिकम् ॥ अनादिमध्यनिधनत्रैलोक्यप्रतिपालक ॥ ४४ ॥ इमांगृ
हाणतुलसींविवाहविधिनेश्वर ॥ पार्वतीबीजसंभूतांवृंदाभस्मनिसंस्थिताम् ॥ ४५ ॥ अनादिमध्यनिधनांवल्लभांतेददाम्यहम् ॥ पयोघटैश्चसे
वाभिःकन्यावद्वर्धितामया ॥ ४६ ॥ त्वत्प्रियांतुलसींतुभ्यंदास्यामित्वंगृहाणभोः ॥ एवंदत्वातुतुलसींपश्चात्तौपूजयेत्ततः ॥ ४७ ॥
रात्रौजागरणंकुर्यात्कार्तिकव्रतसिद्धये ॥ वालखिल्याऊचुः ॥ ततःप्रभातसमयेतुलसींविष्णुमर्चयेत् ॥ ४८ ॥ वह्निसंस्थापनंकृत्वाद्वाद
शाक्षरविद्यया ॥ पायसाज्यक्षौद्रतिलैर्हुनेदष्टोत्तरंशतम् ॥ ४९ ॥ ततःस्विष्टकृतंहुत्वादद्यात्पूर्णाहुतिंततः ॥ आचार्यंचसमभ्यर्च्य
होमशेषंसमापयेत् ॥ ५० ॥ चतुरोवार्षिकान्मासान्नियमोयस्ययःकृतः ॥ कथयित्वाद्विजेभ्यस्तंतथान्यत्परिपूजयेत् ॥ ५१ ॥
इदंव्रतंमयादेवकृतंप्रीत्यैतवप्रभो ॥ न्यूनंसंपूर्णतांयातुत्वत्प्रसादाज्जनार्दन ॥ ५२ ॥ रेवतीतुर्यचरणेद्वादशीसंयुतेनरः ॥ नकुर्या
त्पारणंकुर्वन्व्रतंनिष्फलतांव्रजेत् ॥ ५३ ॥ ततोयेषांपदार्थानांवर्जनंतुकृतंभवेत् ॥ चातुर्मास्येथवाचोजैंर्ब्राह्मणेभ्यःसमर्पयेत् ॥ ५४ ॥ ततः
सर्वंसमश्नीयाद्यद्यत्त्यक्तंव्रतेस्थितः ॥ दंपतिभ्यांसहैवात्रभोक्तव्यंवाद्विजैःसह ॥ ५५ ॥ ततोभुक्त्युत्तरंयानिगलितानिदलानिच ॥ तुणस्या
स्तानिभुक्त्वातुसर्वपापैःप्रमुच्यते ॥५६॥ भोजनानंतरंविष्णोरर्पितंतुलसीदलम् ॥ तद्भक्षणात्पापमुक्तिश्चांद्रायणशताधिका॥५७॥ इक्षुखंडंत
थाधात्रीफलंचबदरीफलम् ॥ भुक्त्वातुभोजनस्यांतेतस्योच्छिष्टंविनश्यति ॥ ५८ ॥ एषुत्रिषुनभुक्तंचेदेकैकमपियेनतु ॥ ज्ञेयउच्छि

ष्टआवर्षनरोसौनात्रसंशयः ॥ ५९ ॥ ततःसायंपुनःपूज्याविष्णुदंडैश्चमंडितौ ॥ तुलसीवासुदेवौचकृतकृत्योभवेत्ततः ॥ ६० ॥ ततोविसर्जनंकु
र्याद्दत्त्वादायादिकंहरेः ॥ वैकुंठंगच्छभगवंस्तुलस्यासहितःप्रभो ॥ ६१ ॥ मत्कृतंपूजनंगृह्यसंतुष्टोभवसर्वदा ॥ गच्छगच्छसुरश्रेष्ठस्वस्था
नेपरमेश्वर ॥ ६२ ॥ यत्रब्रह्मादयोदेवास्तत्रगच्छजनार्दन ॥ एवंविसृज्यदेवेशमाचार्यायप्रदापयेत् ॥ ६३ ॥ मूर्त्यादिकंसर्वमेवकृतकृत्योभ
वेन्नरः ॥ प्रतिवर्षंकरोत्येवंतुलस्युद्वहनंशुभम् ॥ इहलोकेपरत्रापिविपुलंसद्यशोलभेत् ॥ ६४ ॥ प्रतिवर्षंतुयःकुर्यात्तुलसीकरपीडनम् ॥ भक्ति
मान्धनधान्यैश्वयुक्तोभवतिनिश्चितम् ॥ ६५ ॥ इतिश्रीसनत्कुमारसंहितायांकार्तिकशुक्लैकादश्यांभीष्मपंचकव्रतप्रबोधोत्सवतुलसीविवाह
विधिःसंपूर्णः ॥ ॥ अथमार्गशीर्षकृष्णैकादशीव्रतम् ॥ अर्जुनउवाच ॥ ॐ नमोनारायणायाव्यक्तायात्मस्वरूपिणे ॥ सृष्टिस्थित्यंतक
र्त्रेचकेशवायनमोस्तुते ॥ १ ॥ त्वमेवजगतांनाथअंतर्यामीत्वमेवच ॥ शास्त्राणांचकवीशश्चवक्तात्वंचजगत्पते ॥ २ ॥ एकादशीकथं
स्वामिन्नुत्पन्नाइतिगीयते ॥ एतंहिसंशयंमेऽद्यच्छेत्तुमर्हसित्वंप्रभो ॥ ३ ॥ ब्रूयुःस्निग्धस्यशिष्यस्यगुरवोगुह्यमप्युत ॥ ममोपरिकृपांकृत्वाइ
दानींवक्तुमर्हसि ॥ ४ ॥ मार्गशीर्षेकृष्णपक्षेकिंनामैकादशीभवेत् ॥ किंफलंकोविधिस्तस्याःकोदेवस्तत्रपूज्यते ॥ ५ ॥ कृताकेनपुरादेव
एतद्विस्तरतोवद ॥ श्रीकृष्णउवाच ॥ शृणुराजन्प्रवक्ष्यामिकथांपातकनाशिनीम् ॥ ६ ॥ पृष्टाचयात्वयाराजँल्लोकानांहितकाम्यया ॥ मा
र्गशीर्षेकृष्णपक्षेचोत्पत्तिर्नामनामतः ॥ ७ ॥ तस्यामुपोषणेनैवधार्मिकोजायतेनरः ॥ धर्माद्भवतिसत्यंवैलक्ष्मीसत्यानुसारिणी ॥ ८ ॥ पुरा
वैमुरनाशायउत्पन्नांममवल्लभाम् ॥ येकुर्वंतिनराराजंस्तेषांसौख्यंभवेद्ध्रुवम् ॥ ९ ॥ तथापापानिनश्यंतितेनयांतियमालयम् ॥ अर्जुनउ

वृषभोराजतःकार्यःपृष्ठेतस्यसुपीठकम् ॥ तस्योपरिन्यसेद्देवमुमाकांतंत्रिलोचनम् ॥ ६५ ॥ पंचवक्त्रंदशभुजमर्धांगेगिरिजांसतीम् ॥ सौवर्णीं प्रतिमांकृत्वाताम्रकुंभंजलैर्युतम् ॥ ६६ ॥ पंचरत्नफलोपेतंपंचपल्लवशोभितम् ॥ चंदनेनसुगंधेनमिश्रितंशोभितंतथा ॥ ६७ ॥ रौप्यपात्रंततः कृत्वाकुंभस्योपरिविन्यसेत् ॥ अशक्तोमृन्मयंकुंभंवंशपात्रमथापिवा॥६८॥पूर्णंशरावंसंस्थाप्यसौवर्णींप्रतिमांतथा॥शक्त्याकृतांप्रतिष्ठाप्यवस्त्र माल्यविभूषणैः ॥ ६९ ॥ पूजयित्वाविधानेनरात्रौजागरणंचरेत् ॥ पुष्पमंडपिकामादौकृत्वाश्रद्धासमान्वितः ॥ आवाहयेत्प्रथमतोमंत्रेणानेनसुव्रत ॥ ७० ॥ एह्येहित्वमुमाकांतस्थानेचात्रास्थिरोभव ॥ यावद्व्रतंसमाप्येतकृपयादीनवत्सल ॥ ७१ ॥ आवाहनम् ॥ आसनेऽस्मिन्नुमाकांतसुखस्पर्शेसुनिर्मले ॥ उपविश्यमृडेदानींसर्वशांतिप्रदोभव ॥ ७२ ॥ आसनम् ॥ पाद्यंचतेमयादत्तंपुष्पगंधसमन्वितम् ॥ गृहाणदेवदेवशप्रसन्नोवरदोभव ॥ ७३ ॥ पाद्यम् ॥ ताम्रपात्रास्थितंतोयंफलगंधादिसंयुतम् ॥ अर्घ्यंगृहाणदेवेशमयादत्तंहिभक्तितः ॥ ७४ ॥ अर्घ्यम् ॥ शीतलंनिर्मलंतोयंकर्पूरेणसुवासितम् ॥ आचम्यतांसुरश्रेष्ठमयादत्तंहिभक्तितः ॥ ७५ ॥ आचमनीयम् ॥ पंचामृतेनस्नपनंतत्तन्मंत्रैश्चकारयेत् ॥ ७६ ॥ गोक्षीरधामन्देवेशगोक्षीरेणमयाकृतम् ॥ स्नपनंदेवदेवेशगृहाणपरमेश्वर ॥ ७७ ॥ दुग्धस्नानम् ॥ दध्नाचैवमयादेवस्नपनंक्रियतेतव ॥ गृहाणभक्त्यादत्तंमेसुप्रसन्नोभवाव्यय ॥ ७८ ॥ दधिस्नानम् ॥ सर्पिषादेवदेवेशस्नपनंक्रियतेमया ॥ उमाकांतगृहाणेदंश्रद्धयासुरसत्तम ॥ ७९ ॥ घृतस्नानम् ॥ इदंमधुमयादत्तंतवतुष्ट्यर्थमेवच ॥ गृहाणशंभोत्वंभक्त्याममशांतिप्रदोभव ॥ ८० ॥ मधुस्नानम् ॥ सितयादेवदेवेशस्नपनंक्रियतेमया ॥ गृहाणशंभोमेभक्त्यासुप्रसन्नोभवप्रभो ॥ ८१ ॥ शर्करास्नानम् ॥ कावेरीनर्मदावेणीतुंगभद्रासरस्वती ॥

गंगाचयमुनाचैवताभ्यःस्नानार्थमाहृतम् ॥ गृहाणत्वमुमाकांतस्नानायश्रद्धयाजलम् ॥ ८२ ॥ स्नानम् ॥ एतद्वासोमयादत्तंसोत्तरीयं सुशोभनम् ॥ गृहाणत्वंसुरश्रेष्ठममवासःप्रदोभव ॥ ८३ ॥ वस्त्रम् ॥ यज्ञोपवीतंसौवर्णंमयादत्तंचशंकर ॥ गृहाणपरयातुष्ट्यातुष्टिदोभव सर्वदा ॥ ८४ ॥ उपवीतम् ॥ सुगंधंचंदनंदिव्यंमयादत्तंतवप्रभो ॥ भक्त्यापरमयाशंभोसुभगंकुरुमांभव ॥ ८५ ॥ चंदनम् ॥ मालती चंपकादीनिकुसुदान्युत्पलानिच ॥ बिल्वपत्राणिपूजार्थंस्वीकुरुत्वमुमापते ॥ ८६ ॥ पुष्पम् ॥ धूपंविशिष्टंपरमंसर्वौषधिविजृंभितम् ॥ गृहाणपरमेशानममोपरिदयांकुरु ॥ ८७ ॥ धूपम् ॥ दीपंचपरमंशंभोघृतवर्तिसुयोजितम् ॥ दत्तंगृहाणदेवेशममज्ञानप्रदोभव ॥ ८८ ॥ दीपम् ॥ शाल्योदनघृतापूपपायसादिसमन्वितम् ॥ नैवेद्यंविविधंदत्तंभक्त्यामेप्रतिगृह्यताम् ॥ ८९ ॥ नैवेद्यम् ॥ नैवेद्यमध्येपानीयंमयादत्तं हिभक्तितः ॥ स्वीकुरुष्वमहादेवप्रसन्नोभवसर्वदा ॥ ९० ॥ मध्येपानीयम् ॥ उत्तरापोशनार्थंवाआनीतंजलमुत्तमम् ॥ गृहाणत्वमु माकांतसर्वदुःखनिवारक ॥ उत्तरापोशनम् ॥ ९१ ॥ कर्पूरैलालवंगादिपूगीफलसमन्वितम् ॥ तांबूलंकल्पितंभक्त्यागृहाण गिरिजाप्रिय ॥ ९२ ॥ तांबूलम् ॥ इदंफलंमयादेवस्थापितंपुरत० ॥ ९३ ॥ फलम् ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ दक्षिणाकांचनीदेवस्थापितामेतवाग्रतः ॥ ९४ ॥ दक्षिणाम् ॥ दीपावलीमयादत्तासुवर्तिघृतसंयुता ॥ आरार्तिकप्रदानेनममते जःप्रदोभव ॥ ९५ ॥ आरार्तिकम् ॥ यानिकानिचपापानि० ॥ ९६ ॥ प्रदक्षिणाम् ॥ मृत्युंजयाय रुद्राय नीलकंठाय शंभवे ॥ अमृतेशाय शर्वाय महादेवाय तेनमः ॥ ९७ ॥ नमस्कारान् ॥ सेवंतिकाबकुलचंपकपाटलाब्जैःपुन्नागजातिकरवीररसालपुष्पैः ॥ बिल्व

प्रवालतुलसीदलमालतीभिस्त्वांपूजयामिजगदीश्वरमेप्रसीद ॥ ९८ ॥ मंत्रपुष्पम् ॥ निपत्यदंडवद्भूमौप्रणम्यचपुनःपुनः ॥ क्षमापयित्वादे
वेशंरात्रौजागरणंचरेत् ॥ ९९ ॥ गीतवादित्रनृत्याद्यैर्गृहेवादेवतालये ॥ वितानमंडपं[1]कुर्यान्नानावर्णैःसमन्वितम् ॥१०० ॥ प्रभातायांतुशर्वर्यां
नद्यादौविमलेजले ॥ स्नात्वापुनःसमभ्यर्च्यजुहुयात्पायसेनच ॥ १ ॥ ( उमयासहितंरुद्रंपृथगष्टोत्तरंहुनेत् ॥ गौरीर्मिमायमंत्रेणत्र्यंबकेणच
शंकरम् ) आचार्यंचसपत्नीकंवस्त्रालंकारचंदनैः ॥ तोषयित्वाशुचिंदांतंगांदद्याच्चपयस्विनीम् ॥ २ ॥ ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिः
प्रतोषयेत् ॥ दीनानाथांश्चसंतर्प्यह्यच्छिद्रंवाचयेत्ततः ॥ ३ ॥ लब्ध्वानुज्ञांब्राह्मणेभ्योबंधुभिःसहितःशुचिः ॥ हृदिस्मरञ्छिवंभक्त्याभुं
जीतनियतोव्रती ॥ ४ ॥ अनेनैवविधानेनकुर्यादुद्यापनेविधिम् ॥ एवंयःकुरुतेभक्त्याप्रदोषव्रतमुत्तमम् ॥५॥ शनिवारेणसंयुक्तंसो
द्यापनविधिंनरः ॥ आयुरारोग्यमैश्वर्यं[2]पुत्रपौत्रसमन्वितः ॥ ६ ॥ शत्रून्विजयतेनित्यंप्रसादाच्छंकरस्यच ॥ तस्मात्त्वमपिदेवेंद्रपूजयस्व
सदाशिवम् ॥ एवंप्रदोषविधिनायुद्धेवृत्रंविजेष्यसि ॥ ७ ॥ एवंनिशम्यगुरुणाकथितंतदानीमिंद्रोप्यनेनविधिनागिरिशंप्रपूज्य ॥ लो
कंग्रसंतमिवदैत्यपतिंप्रवृद्धंतंतत्क्षणादगमयत्क्षयमीशतुष्ट्या ॥ ८ ॥ इतिस्कंदपुराणेकेदारखंडेशनिप्रदोषव्रतकथासंपूर्णा ॥ मदनरत्ने
स्कांदेप्रकारांतरम् ॥ देव्युवाच ॥ देवकेनविधानेनप्रदोषव्रतमुत्तमम् ॥ विधातव्यंनरैःस्त्रीभिःसंतानफलसिद्धये ॥ ईश्वरउवाच ॥ यदात्रयो
दशीशुक्लामंदवारेणसंयुता ॥ आरब्धव्यंव्रतंतत्रसंतानफलसिद्धये ॥ ऋणनिर्मोचनार्थाय[4]भौमवारेणसंयुता ॥ सौभाग्यस्त्रीसमृद्ध्यर्थंशुक्र

१ अयंमंडपोहोमार्थः । २ पुंस्त्वमार्षम् । ३ लभतेइंतिशेषः । ४ यदाशुक्लात्रयोदशी भौमवारेणयुतातदाऋणनिर्मोचनार्थायव्रतमारब्धव्यमित्यन्वयः । एवमुत्तरत्रापिबोध्यम् ।

वारेणसंयुता ॥ आयुरारोग्यसिद्ध्यर्थंभानुवारेणसंयुता ॥ एकवत्सरपर्यंतंप्रतिपक्षंत्रयोदशी[1] ॥ प्रदोषेशिवमभ्यर्च्यनक्तंभोक्ष्यामिशंकर ॥ प्रातश्चानेनमंत्रेणव्रतसंकल्पमाचरेत् ॥ ततस्तुलोहितेभानौस्नात्वासनियमोव्रती ॥ पूजास्थानंततोगत्वाप्रदोषेशिवमर्चयेत् ॥ पूजामंत्राः ॐ [2]भवायनमः महादेवाय० रुद्राय० नीलकंठाय० शशिमौलिने० उग्राय० उमाकांताय० ईशानाय० विश्वेश्वराय० त्र्यंबकाय० त्रिपुरुषाय० त्रिपुरांकाय० त्रिकाग्निकालाय० कालाग्निरुद्रा० नीलकंठाय० सर्वेश्वराय० १६ पंचामृतेनस्नपनमेभिर्मंत्रैःप्रपूजयेत् ॥ दधिभक्तेननैवेद्यंपक्वान्नैर्घृतसंयुतम् ॥ दत्त्वासुमुखवासंचतांबूलंक्रमुकादिकम् ॥ समर्पयेदष्टदिक्षुदीपानाज्यसमन्वितान् ॥ यथाभवान्समस्तानांपशूनांपापमोचकः ॥ तथाव्रतेनसंतुष्टःपुत्रंदेहिसुलक्षणम् ॥ ऋणरोगादिदारिद्र्यपापक्षुदपमृत्यवः ॥ भयशोकमनस्तापानश्यंतुममसर्वदा ॥ पृथिव्यांयानितीर्थानिसागरांतानियानिच ॥ अंडमाश्रित्यतिष्ठंतिप्रदोषेगोवृषस्यतु ॥ स्पृष्ट्वातुवृषणौतस्यशृंगमध्येविलोक्यच ॥ पुच्छंचककुदंचैवसर्वपापैःप्रमुच्यते ॥ निवेद्यकर्मजातंचदद्याद्वित्तानुसारतः ॥ दक्षिणाब्राह्मणेभ्यश्चततोमौनंविसर्जयेत् ॥ एवंसंवत्सरंकुर्यात्त्रयोदश्यामिदंव्रतम् ॥ अथवामंदवारेणयुक्ताएवत्रयोदशी ॥ यश्चतुर्विंशतिंकुर्याद्यथोक्तफलमाप्नुयात् ॥ इतिमदनरत्नोक्तंप्रकारान्तरम् ॥ [3]अथप्रदोषव्रतम् ॥ ॥ सूतउवाच ॥ काचिच्चविप्रवनितासपुत्रादुःखकर्शिता ॥ शांडिल्यस्यमुखाच्छ्रुत्वाप्रदोषेशिवपूजनम् ॥ १ ॥



१ त्रयोदश्यामित्यर्थः छांदसोविभक्तिलुक् । २ व्रतार्के तु भवाय महादेवाय रुद्राय नीलकंठाय शशिमौलिने उग्राय भीमाय ईशानाय ॥भवाद्यैःषोडशोपचारैःपूजामष्टप्रदक्षिणानमस्कारांश्चकुर्यात् ॥ सयावकंचनैवेद्यंसाज्यंसफलशर्करमित्यग्रेदत्त्वेत्यादिवर्तते । ३ कृत्वेतिशेषः । ४ इदंव्रतंत्रसार्कादावदृष्टत्वादन्याधाराभावाच्चतथैवस्थापितम् ।

तंप्रणम्याथपप्रच्छशिवपूजाविधिंक्रमात् ॥ २ ॥ शांडिल्यउवाच ॥ पक्षद्वयेत्रयोदश्यांनिराहारोभवेद्दिवा ॥ घटित्रयादस्तमयात्पूर्वंस्नानं समाचरेत् ॥ ३ ॥ शुक्लांबरधरोभूत्वावाग्यतोनियमान्वितः ॥ कृतसंध्याजपविधिःशिवपूजांसमारभेत् ॥ ४ ॥ देवस्यपुरतःसम्यगुपलिप्य नवांभसा ॥ विधायमंडपंरम्यंधौतवस्त्रादिभिर्वृतम् ॥ ५ ॥ वितानाद्यैरलंकृत्यफलपुष्पनवांकुरैः ॥ विचित्रंपद्ममुल्लिख्यवर्णपंचकसंयुतम् ॥ ६ ॥ तत्रोपविश्यतुशुभेसूपविष्टःस्थिरासने ॥ सम्यक्संपादिताशेषपूजोपकरणःशुचिः ॥ ७ ॥ आगमोक्तेनमंत्रेणपीठमामंत्रयेत्सुधीः ॥ ततःकृत्वात्मशुद्धिंचभूतशुद्ध्यादिकंक्रमात् ॥ ८ ॥ प्राणायामत्रयंकुर्याद्बीजमन्त्रैःसबिंदुकैः ॥ मातृकान्यस्यविधिवद्ध्यात्वातांदेवतांपराम् ॥ ९ ॥ वामभागेगुरुंनत्वादक्षिणेगणपंयजेत् ॥ अंसोरुयुग्मेधर्मादीन्न्यस्यनाभौचपार्श्वयोः ॥ १० ॥ अधर्मादीननंतादीन्हृदिपीठमनुंन्यसेत् ॥ आधारशक्तिमारभ्यज्ञानात्मानमनुक्रमात् ॥ ११ ॥ उक्तक्रमेणविन्यस्यहृदयेसाधुभाविते ॥ नवशक्तिमयेरम्येध्यायेद्देवमुमापतिम् ॥ १२ ॥ चंद्रकोटिप्रतीकाशंत्रिनेत्रंचंद्रभूषणम् ॥ आपिंगलजटाजूटंरत्नमौलिविराजितम् ॥ १३ ॥ नीलग्रीवमुदारांगंनानाहारोपशोभितम् ॥ वरदाभयहस्तंचहरिणंचपरश्वधम् ॥ १४ ॥ दधानंनागवलयंकेयूरांगदभूषणम् ॥ व्याघ्रचर्मपरीधानंरत्नसिंहासनेस्थितम् ॥ १५ ॥ ध्यात्वातद्वामभागेचगिरिजांभक्तवत्सलाम् ॥ भास्वज्जपाप्रसूनाभामुदयार्कसमप्रभाम् ॥ १६ ॥ विद्युत्कंजनिभांतन्वींमनोनयननंदिनीम् ॥ बालेंदुशेखरांस्निग्धांनीलाकुंचितकुंतलाम् ॥ १७ ॥ भृंगसंघातरुचिरनीलालकविराजिताम् ॥ मणिकुंडलविद्योतमुखमंडलविभ्रमाम् ॥ १८ ॥ नवकुंकुमपंकाभांकपोलतलदर्पणाम् ॥ मधुरस्मितविभ्राजदरुणाधरपल्लवाम् ॥ १९ ॥ कंबु

कंठींशिवामुद्यत्कुचपंकजकुड्मलाम् ॥ पाशांकुशाभयाभीष्टविलसंतींचतुर्भुजाम् ॥ २० ॥ अनेकरत्नविलसत्कंकणांगदशो
भिताम् ॥ वलित्रयेणविलसद्धेयकांचीगुणान्विताम् ॥ २१ ॥ रक्तमाल्यांबरधरांदिव्यचंदनचर्चिताम् ॥ दिक्पालवनितामौलि
सन्नतांघ्रिसरोरुहाम् ॥ २२ ॥ रत्नसिंहासनारूढांसर्पराजपरिच्छदाम् ॥ एवंध्यात्वामहादेवंदेवींचगिरिजांशुभाम् ॥ २३ ॥ न्यासक्रमेणसं
पूज्यदेवंगंधादिभिःक्रमात् ॥ पंचभिर्ब्रह्मभिःकुर्यात्प्रोक्तस्थानेषुवाह्यदि ॥ २४ ॥ पृथक्पुष्पांजलिंदद्देहेमूलेनचहृदित्रयम् ॥ पुनःस्वयंशिवो
भूत्वामूलमंत्रेणसाधकः ॥ २५ ॥ ततःसंपूजयेद्देवंबाह्यपीठेपुनःक्रमात् ॥ संकल्पंप्रवदेत्तत्रपूजारंभेसमाहितः ॥ २६ ॥ कृतांजलिपुटोभूत्वा
चिंतयेद्धृदिशंकरम् ॥ ऋणपातकदौर्भाग्यदारिद्र्यविनिवृत्तये ॥ २७ ॥ अशेषाघविनाशायप्रसीदममशंकर ॥ दुःखशोकाग्निसंततंसं
सारभयपीडितम् ॥ २८ ॥ बहुरोगाकुलंदीनंत्राहिमांवृषवाहन ॥ आगच्छदेवदेवेशमहादेवाभयंकर ॥ २९ ॥ गृहाणसहपार्वत्यात्वंचपूजां
मयाकृताम् ॥ इतिसंकल्प्यविधिवद्बाह्यपूजांसमाचरेत् ॥ ३० ॥ गुरुंगणपतिंचैवयजेत्सव्यापसव्ययोः ॥ क्षेत्रेशमीशकोणेतुयजेद्वास्तोष्पतिं
क्रमात् ॥ ३१ ॥ वाग्देवींचयजेत्तत्रततःकात्यायनींयजेत् ॥ धर्मज्ञानंसवैराग्यमैश्वर्यंचनमोंतकैः ॥ ३२ ॥ स्वरैरीशादिकोणेषुपीठपादेष्व
नुक्रमात् ॥ आभ्यांबिंदुविसर्गाभ्यामधर्मादीन्प्रपूजयेत् ॥ ३३ ॥ गात्ररूपांचतुर्दिक्षुमध्येऽनंतंसतारकम् ॥ सत्त्वादित्रिगुणांस्तंतुरूपान्पीठेषु
विन्यसेत् ॥ ३४ ॥ अतऊर्ध्वंच्छदेमायालक्ष्म्यौदेव्याशिवेनच ॥ तदंतेचांबुजंभूयःसकलंमंडलोत्तमम् ॥ ३५ ॥ यत्रकेसरकिंजल्कव्यातंत
त्राक्षरैःक्रमात् ॥ आत्मत्रयमथाभ्यर्च्यमध्येमंडपमादरात् ॥ ३६ ॥ वामांज्येष्ठांचगौरींचभावार्थेंदिक्षुपूजयेत् ॥ वामाद्यानवशक्तीश्चनवस्व

रयुतायजेत् ॥ ३७॥ हृदिबीजत्रयाद्यैश्चपीठमंत्रेणचार्चयेत् ॥ आवृत्तिःप्रथमांगैस्तुपंचभिर्मूर्तिपंक्तिभिः ॥ ३८ ॥ त्रिंशद्भिर्मूर्तिभिश्चान्यै
र्निधिद्वयसमन्वितैः ॥ अनंताद्यैःपराद्यान्यामातृभिश्चवृषादिभिः ॥ ३९ ॥ सिद्धिभिश्चाणिमाद्याभिरिंद्राद्यैश्चतदायुधैः ॥ वृषभक्षेत्रचंडेशदुर्गा
श्चस्कंदनंदिनौ ॥ ४० ॥ गणेशसैन्यपौचैवस्वस्वलक्षणलक्षितौ ॥ अणिमामहिमाचैवगरिमालघिमातथा ॥ ४१॥ ईशित्वंचवशित्वंचप्राप्तिः
प्राकाम्यमेवच ॥ अष्टैश्वर्याणिचोक्तानितेजोरूपाणिकेवलम् ॥ ४२ ॥ पंचभिर्ब्रह्मभिःपूर्वंहृल्लेखाद्यादिभिःक्रमात् ॥ अंगैरुमाद्यैरिंद्राद्यैःपूर्वो
क्तैर्मुनिभिःस्तुतैः ॥ ४३ ॥ उमांचंडेश्वरादींश्चपूजयेदुत्तरादितः ॥ एवमावरणैर्युक्तंतेजोरूपंसदाशिवम् ॥ ४४ ॥ उमयासहितंदेवमुपचारैः
प्रपूजयेत् ॥ सुप्रतिष्ठितशंखस्यतीर्थैःपंचामृतैरपि ॥ ४५ ॥ अभिषिच्यमहादेवंरुद्रसूक्तैःसमाहितः ॥ कल्पयेद्धृदिकैर्मंत्रैरासनाद्युप
चारवान् ॥ ४६ ॥ आसनंकल्पयेद्धैमंदिव्यवस्त्रसमन्वितम् ॥ अर्घ्यमष्टगुणोपेतंपाद्यंशुद्धोदकेनच ॥ ४७ ॥ तेनैवाचमनंदद्या
न्मधुपर्कमधूत्तमम् ॥ पुनराचमनंदत्त्वास्नानमंत्रैःप्रकल्पयेत् ॥ ४८ ॥ वासांतेचोपवीतंचभूषणानिनिवेदयेत् ॥ गंधमष्टांगसंयुक्तं
सुपूतंविनिवेदयेत् ॥ ४९ ॥ ततश्चबिल्वमंदारकह्लारसरसीरुहम् ॥ धत्तूरंकर्णिकारंचद्रोणपुष्पंचमल्लिकाम् ॥ ५० ॥ अपामार्गं
चतुलसीमाधवीचंपकादिकम् ॥ बृहतीकरवीराणियथालब्धानिभामिनि ॥ ५१ ॥ निवेदयेत्सुगंधीनिमाल्यानिविविधानिच ॥ धूपंकाला
गुरूत्पन्नंदीपंचविमलंशुभम् ॥ ५२ ॥ अथपायसनैवेद्यंसघृतंसोपदंशकम् ॥ मोदकापूपसंयुक्तंशर्करागुडसंयुतम् ॥ ५३ ॥ मधुरान्नंदधि
युतंजलपानसमन्वितम् ॥ तेनैवहविषावह्नौजुहुयान्मंत्रभाविते ॥ ५४ ॥ आगमोक्तेनविधिनागुरुवाक्यनियंत्रितः ॥ नैवेद्यंशंभवेभूयोदत्त्वातां

बूलमुत्तमम् ॥ ५५ ॥ फलंनीराजनंदिव्यंछत्रंदर्पणमुत्तमम् ॥ समर्पयित्वाविधिवन्मंत्रैर्वैदिकतांत्रिकैः ॥ ५६ ॥ यद्यशक्तःस्वयंनिःस्वोयथा
विभवमर्चयेत् ॥ भक्त्यादत्तेनगौरीशःपुष्पमात्रेणतुष्यति ॥ ५७ ॥ अथांगभूतान्सकलान्गणेशादीन्प्रपूजयेत् ॥ स्तवैर्नानाविधैःस्तु
त्वासाष्टांगंप्रणमेद्बुधः ॥ ५८ ॥ ततःप्रदक्षिणीकृत्यवृषचंडेश्वरादिकान् ॥ पूजांसमर्प्यविधिवत्प्रार्थयेद्गिरिजापतिम् ॥ ५९ ॥ जयदेवजगन्ना
थजयशंकरशाश्वत ॥ जयसर्वसुराध्यक्षजयसर्वसुरार्चित ॥ ६० ॥ जयसर्वगुणातीतजयसर्ववरप्रद ॥ जयनित्यनिराधारजयविश्वंभराव्यय ॥
जयविश्वैकवंद्येशजयनागेंद्रभूषण ॥ ६१ ॥ जयगौरीपतेशंभोजयनित्यनिरंजन ॥ जयनाथकृपासिंधोजयभक्तार्तिभंजन ॥ ६२ ॥ जयदु
स्तारसंसारसागरोत्तारणप्रभो ॥ प्रसीदमेमहादेवसंसारादद्यखिद्यतः ॥ ६३ ॥ सर्वपापक्षयंकृत्वारक्षमांपरमेश्वर ॥ महादारिद्र्यमग्नस्यमहापाप
हतस्यच ॥ ६४ ॥ महाशोकनिविष्टस्यमहारोगातुरस्यच ॥ ऋणभारपरीतस्यदह्यमानस्यकर्मभिः ॥ ६५ ॥ ग्रहैःप्रपीडयमानस्यप्रसी
दममशंकर ॥ दरिद्रःप्रार्थयेद्देवंपूजान्तेगिरिजापतिम् ॥ ६६ ॥ अभाग्योवापिराजावाप्रार्थयेद्देवमीश्वरम् ॥ दीर्घमायुःसदारोग्यंकोशवृद्धिर्बलोन्नतिः
॥ ६७ ॥ ममास्तुनित्यमानंदःप्रसादात्तवशंकर ॥ शत्रवश्चक्षयंयांतुप्रसीदंतुममप्रजाः ॥ ६८ ॥ नश्यंतुदस्यवोराज्येजनाः संतुनि
रापदः ॥ दुर्भिक्षमारिसंतापाःशमंयांतुमहीतले ॥ ६९ ॥ सर्वसस्यसमृद्धिश्चभूयात्सुखमयादिशः ॥ एवमाराधयेद्देवंप्रदोषेगिरिजापतिम् ॥
॥ ७० ॥ ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणोभिश्चपूजयेत् ॥ सर्वपापक्षयकरीसर्वदारिद्र्यनाशिनी ॥ ७१ ॥ शिवपूजेयमाख्यातासर्वाभीष्टफल
प्रदा ॥ महापातकसंघातमधिकंचोपपातकम् ॥ शिवद्रव्यापहरणात्सर्वमन्यद्विनाशयेत् ॥ ७२ ॥ ब्रह्महत्यादिपापानांपुराणेषुस्मृ

तिष्वपि ॥ प्रायश्चित्तानिदृष्टानिनाशिवद्रव्यहारिणाम् ॥ ७३ ॥ बहुनात्रकिमुक्तेनश्लोकार्धेनब्रवीम्यहम् ॥ ब्रह्महत्याशतंवापिशिवपूजा
विनाशयेत् ॥ ७४ ॥ मयाकथितमेतत्तेप्रदोषेशिवपूजनम् ॥ रहस्यंसर्वजंतूनामत्रास्त्येवनसंशयः ॥ ७५ ॥ एताभ्यामपिपुत्राभ्यांशिवपूजा
विधीयताम् ॥ अतःसंवत्सरादेवपरांसिद्धिमवाप्स्यथ ॥७६॥ इतिशांडिल्यवचनमाकर्ण्यद्विजभामिनी ॥ ताभ्यांतुसहबालाभ्यांप्रणनाममुनेः
पदे॥७७॥स्त्र्युवाच ॥ अहमद्यकृतार्थास्मितवदर्शनमात्रतः॥एतौकुमारौभगवंस्त्वामेवशरणंगतौ ॥७८॥एषमेतनयोब्रह्मन्छुचिव्रतइतीरितः॥
एषराजसुतोनाम्नाधर्मपुत्रःकृतोमया ॥ ७९ ॥ एतावहंचभगवन्भवच्चरणकिंकराः ॥ समुद्धरास्मिन्पतितान्घोरेदारिद्र्यसागरे ॥ ८० ॥
इतिप्रपन्नाशरणंद्विजांगनातस्याथवाक्यैरमृतोपमानैः ॥ उपादिदेशापितयोःकुमारयोर्मुनिःशिवाराधनमंत्रविद्याम् ॥ ८१ ॥ अथोपदिष्टौ
मुनिनाकुमारौब्राह्मणीचसा ॥ तंप्रणम्यसमामंत्र्यजग्मुस्तेशिवमंदिरात् ॥ ८२ ॥ ततःप्रभृतितौबालौमुनिवर्योपदेशतः ॥ प्रदोषेपार्वती
शस्यपूजांचक्रतुरंजसा ॥ ८३ ॥ एवंपूजयतोर्देवंद्विजराजकुमारयोः ॥ सुखेनैवव्यतीयायतयोर्मासचतुष्टयम् ॥ ८४ ॥ कदाचिद्रा
जपुत्रेणविनासौद्विजनंदनः ॥ स्नातुंगतोनदीतीरेचचारबहुलीलया ॥ ८५ ॥ तत्रनिर्झरनिष्पातनिर्भिन्नेवप्रकर्दमे ॥ निधानकलशंस्थूलं
प्रस्फुरंतंददर्शह ॥ ८६ ॥ तंदृष्ट्वासहसागत्यहर्षकौतुकविह्वलः ॥ दैवोपपन्नंमन्वानोगृहीत्वाशिरसादधौ ॥ ८७ ॥ ससंभ्रमंसमानी
यनिधानकलशंबलात् ॥ निधायभवनस्यांतर्मातरंसमभाषत ॥ ८८ ॥ मातर्मातरिमंपश्यप्रसादंगिरिजापतेः ॥ निधानंकुंभरूपेणदर्शि
तंकरुणात्मना ॥ अथसाविस्मितासाध्वीसमाहूयनृपात्मजम् ॥ ८९ ॥ स्वपुत्रंप्रतिनंद्याहमानयंतीशिवार्चनम् ॥ शृणुतांमेवचःपुत्रोनि

धानकलशीमिमाम् ॥ समंविभज्यगृह्णीतंममशासनगौरवात् ॥ ९० ॥ इतिमातृवचःश्रुत्वातुतोषाद्विजनंदनः ॥ प्रत्याहराजपुत्रस्तांविश्र
ब्धःशंकरार्चने ॥ ९१ ॥ मातस्तवसुतस्यैवसुकृतेनसमागतम् ॥ नाहंग्रहीतुमिच्छामिविभक्तंधनसंचयम् ॥ ९२ ॥ आत्मनःसुकृता
ल्लब्धंस्वयमेवभुनक्त्यसौ ॥ सएवभगवानीशःकरिष्यतिकृपांमयि ॥ ९३ ॥ एवमभ्यर्चतोःशंभुंभूयोपिपरयामुदा ॥ संवत्सरोव्यतीयायत
स्मिन्नेवगृहेतयोः ॥ ९४ ॥ अथैकदाराजसूनुःसहतेनद्विजन्मना ॥ वसंतसमयेप्राप्तेविजहारवनांतरे ॥ ९५ ॥ अथदूरंगतौकापिवनेद्विजनृपा
त्मजौ ॥ गंधर्वकन्याःक्रीडंतीःशतशस्तावपश्यताम् ॥ ९६ ॥ ताःसर्वाश्चारुसर्वांगीर्विहरंतीर्मनोहरम् ॥ दृष्ट्वाद्विजात्मजोदूरादुवाचनृपनंदन
म् ॥ ९७ ॥ इतःपरंनगंतव्यंविहरंत्यग्रतास्त्रियः ॥ स्त्रीसंविधानंविबुधास्त्यजंतिविमलाशयाः ॥९८॥ एताःकैतवधारिण्योधनयौवनदुर्मदाः ॥
मोहयंत्योजनंदृष्ट्वावाचानुनयकोविदाः ॥ ९९ ॥ अतःपरित्यजेत्स्त्रीणांसन्निधिंसहभाषणम् ॥ निजधर्मरतोविद्वान्ब्रह्मचारीविशेषतः ॥
॥ १०० ॥ अतोहंनोत्सहेगंतुंक्रीडास्थानंमृगीदृशाम् ॥ इत्युक्त्वाद्विजपुत्रस्तुनिवृत्तोदूरतःस्थितः ॥ १ ॥ अथासौराजपुत्रस्तुकौतुकाविष्टमान
सः ॥ तासांविहारपदवीमेकएवाभयोययौ ॥ २ ॥ तत्रगंधर्वकन्यनांमध्येत्वेकावरांगना ॥ दृष्ट्वायांतंराजपुत्रंचिंतयामासचेतसा॥३॥अहोको
यमुदारांगोयुवासर्वांगसुंदरः ॥ मत्तमातंगगमनोलावण्यामृतवारिधिः ॥ ४ ॥ लीलालोलविशालाक्षोमधुरास्मितपेशलः ॥ मदनोपमरूपश्रीः
सुकुमारांगलक्षणः॥५॥इत्याश्चर्ययुताबालादूराद्दृष्ट्वानृपात्मजम्॥सर्वाःसखीःसमालोक्यवचनंचेदमब्रवीत् ॥६॥ इतोप्यदूरेहेसख्योवनमस्त्येक
मुत्तमम्॥विचित्रचंपकाशोकपुन्नागबकुलैर्युतम्॥७॥तत्रगत्वातरून्सर्वान्प्रसिच्यकुसुमोत्तरान् ॥ भवंत्यःपुनरायांतुतावत्तिष्ठाम्यहंत्विह ॥ ८॥

इत्यादिष्टः सखीवर्गोंजगामापिवनांतरम् ॥ सापिगंधर्वजातस्थौन्यस्तद्दृष्टिर्नृपात्मजे ॥ ९ ॥ तांसमालोच्यतन्वंगींनवयौवनशालिनीम् ॥ बालांस्वरूपसंपत्त्यापरिभूततिलोत्तमाम् ॥ ११० ॥ राजपुत्रःसमागम्यकौतुकोत्फुल्ललोचनः ॥ अवापदैवयोगेनमदनस्यशरव्यथाम् ॥ ॥ ११ ॥ गंधर्वतनयासापिप्राप्तायनृपसूनवे ॥ उत्थायतरसातस्मैप्रददौपल्लवासनम् ॥ १२ ॥ कृतोपचारमासीनंतमासाद्यसुमध्यमा ॥ पप्रच्छतद्रूपगुणैर्ध्वस्तवीर्याकुलेंद्रिया ॥ १३ ॥ कस्त्वंकमलपत्राक्षकस्माद्देशादिहागतः ॥ कस्यपुत्रइतिप्रेम्णापृष्टःसर्वंन्यवेदयत् ॥ १४ ॥ विदर्भराजतनयंविध्वस्तापितृमातृकम् ॥ शत्रुभिश्चहृतस्थानमात्मानंपरयागिरा ॥ १५ ॥ सर्वभावेनभूयस्तांपप्रच्छनृपनंदनः ॥ कात्वंवामोरुकिंचात्रकार्यंतेकस्यचात्मजा ॥ १६ ॥ किमिवध्यायसिहृदिकिंवावक्तुमिहेच्छसि ॥ इत्युक्तासापुनःप्राहशृणुराजेंद्रसत्तम ॥ १७ ॥ आस्तेविद्रविकोनामगंधर्वाणांकुलाग्रणीः ॥ तस्याहमस्मितनयानाम्नाचांशुमतीशुभा ॥ १८ ॥ त्वामायांतंविलोक्याहंत्वत्संभाषणलालसा ॥ त्यक्त्वासखीजनंसर्वमेकैवास्मिमहामते ॥ १९ ॥ सर्वसंगीतविद्यासु[१]नमत्तोन्यास्तिकाचन ॥ ममगानेनतुष्यंतिसर्वाअपिसुरस्त्रियः ॥ ॥ १२० ॥ साहंसर्वकलाभिज्ञाज्ञातसर्वजनेंगिता ॥ तवाहमीप्सितंवेद्मिमयितेसंगतंमनः ॥ २१ ॥ तथाममापितेसौख्यंदैवेनप्रतिपादितम् ॥ आवयोःस्नेहभेदोत्रनाभिभूयादितःपरम् ॥ २२ ॥ इतिसंभाष्यतेनाशुप्रेम्णागंधर्वकन्यका ॥ मुक्ताहारंददौतस्मैस्वकुचांतरभूषणम् ॥ २३ ॥ तमादायाद्भुतंहारंसतस्याः परमाकुलः ॥ गूढहर्षपरासिक्तामिदमाहनृपात्मजः ॥ २४ ॥ सत्यमुक्तंत्वयाभीरुतथाप्येकंवदा

१ निपुणेतिशेषः ।

म्यहम् ॥ त्यक्तराज्यस्यनिःस्वस्यकथंमेभवासिप्रिया ॥ २५ ॥ यात्वंपितृमतीबालाविलंघ्यपितृशासनम् ॥ स्वच्छंदाचरणंकर्तुंमूढेत्वंकथम र्हसि ॥ २६ ॥ इतितस्यवचःश्रुत्वातंप्रत्याहशुचिस्मिता ॥ अस्तुनामतथैवाहंकरिष्येपश्यकौतुकम् ॥ २७ ॥ गच्छस्वभवनंकांतपरश्वः प्रातरेवतु ॥ आगच्छपुनरत्रैवकार्यमस्तिचनोमृषा॥२८॥इत्युक्तातंनृपंकांतंसासंगतसखीजना ॥ अपाक्रमतचार्वंगीसचापिनृपनंदनः ॥२९॥ ससमभ्येत्यहर्षेणद्विजपुत्रस्यसन्निधिम् ॥ सर्वमाख्यायतेनैवसार्धंस्वभवनंययौ ॥१३०॥ तांचविप्रसतींभूयोहर्षयित्वानृपात्मजः ॥ परश्वोद्वि जपुत्रेणसार्धंतास्मिन्वनेययौ ॥ ३१ ॥ सतयापूर्वनिर्दिष्टंस्थानंप्राप्यनृपात्मजः ॥ गंधर्वराजमद्राक्षीद्दुहित्राचसमन्वितम् ॥ ३२ ॥ सगंधर्व पतिःप्राप्तावभिनंद्यकुमारकौ ॥ उपवेश्यासनेरम्येराजपुत्रमभाषत ॥ ३३ ॥ गंधर्वउवाच ॥ राजेंद्रपुत्रपूर्वेद्युःकैलासंगतवानहम् ॥ तत्रा पश्यंमहादेवंपार्वत्यासहितंविभुम् ॥ ३४ ॥ आहूयमांसदेवेशःसर्वेषांत्रिदिवौकसाम् ॥ सन्निधावाहभगवान्करुणामृतवारिधिः ॥ ३५ ॥ धर्म गुप्ताह्वयःकश्चिद्राजपुत्रोस्तिभूतले ॥ अकिंचनोभ्रष्टराज्योहतबंधुश्चशत्रुभिः ॥ ३६ ॥ सबालोगुरुवाक्येनमदर्चायांरतःसदा ॥ अद्यतत्पितरः सर्वेमांप्राप्तास्तत्प्रभावतः ॥ ३७ ॥ तस्यत्वमपिसाहाय्यंकुरुगंधर्वसत्तम ॥ यथासनिजराज्यस्थोहतशत्रुर्भविष्यति ॥ ३८ ॥ इत्याज्ञप्तोहमी शेनसंप्राप्यनिजमंदिरम् ॥ अनयाचदुहित्राचबहुशोभ्यर्थितस्तथा ॥ ३९ ॥ ज्ञात्वेमंसकलंशंभोर्नियोगंकरुणात्मनः ॥ आदायेमांदुहित रंप्राप्तोस्मीदंवनांतरम् ॥ १४० ॥ अतएनांप्रयच्छामिकन्यामंशुमतींतव ॥ हत्वाशत्रून्स्वराष्ट्रेत्वांस्थापयामिशिवाज्ञया ॥ ४१ ॥ तस्मिन्पुरे त्वमनयाभुक्त्वाभोगान्यथोचितान् ॥ दशवर्षसहस्रांतेगंतासिगिरिशालयम् ॥ ४२ ॥ तत्रापिममकन्येयंत्वामेवप्रतिपत्स्यते ॥ अनेनैवस्वदे

हेनादिव्येनशिवसन्निधौ ॥ ४३ ॥ इतिगंधर्वराजस्तमाभाष्यनृपनंदनम् ॥ तस्मिन्वनेस्वदुहितुःपाणिग्राहमकारयत् ॥ ४४ ॥ पारिबर्हमदात्त
स्मैरत्नभारान्महोज्ज्वलान् ॥ चूडामणिंचंद्रनिभंमुक्ताहारांश्चभास्वरान् ॥ ४५ ॥ दिव्यालंकारवासांसिकार्तस्वरपरिच्छदान् ॥ गजाना
मयुतंभूयोनियुतंनीलवाजिनाम् ॥ ४६ ॥ स्यंदनानांसहस्राणिसौवर्णानिमहांतिच ॥ पुनरेकंरथंदिव्यंधनुश्चक्रायुधैर्युतम् ॥ ४७ ॥ मंत्रास्त्रा
णांसहस्राणितूणौचाक्षय्यसायकौ ॥ अभेद्यांसर्वजंतूनांशक्तिंचरिपुमर्दिनीम् ॥ ४८ ॥ दुहितुःपरिचर्यार्थंदासीनांचसहस्रकम् ॥ ददौप्रीतम
नास्तस्मैधनानिविविधानिच ॥ ४९ ॥ गंधर्वसैन्यमत्युग्रंचतुरंगसमन्वितम् ॥ पुनश्चतत्सहायार्थंगंधर्वाधिपतिर्ददौ ॥ १५० ॥ इत्थंराजेंद्रत
नयःसंप्राप्यश्रियमुत्तमाम् ॥ अभीष्टजायासहितोमुमुदेनिजसंपदा ॥ ५१ ॥ कारयित्वास्वदुहितुर्विवाहंसमयोचितम् ॥ ययौविमानमारुह्य
गंधर्वाधिपतिर्दिवम् ॥ ५२ ॥ धर्मगुप्तःकृतोद्वाहःसहगंधर्वसेनया ॥ निःशेषितारातिबलःप्रविवेशनिजंपुरम् ॥ ५३ ॥ ततोभिषिक्तःसचिवैर्ब्राह्म
णैश्चमहोत्तमैः ॥ रत्नसिंहासनारूढश्चक्रेराज्यमकंटकम् ॥ ५४ ॥ याविप्रवनितापूर्वंतमपुष्णात्स्वपुत्रवत् ॥ सैवमाताभवत्तस्यसभ्राताद्विजनं
दनः ॥ ५५ ॥ गंधर्वतनयाजायाविदर्भविषयेश्वरः ॥ आराध्यदेवंगिरिशंधर्मगुप्तोनृपोभवत् ॥ ५६ ॥ एवमन्येसमाराध्यप्रदोषेगिरिजापति
म् ॥ लभंतेभीप्सितान्कामान्देहांतेतुपरांगतिम् ॥ ५७ ॥ सूतउवाच ॥ एतन्महाव्रतंपुण्यंप्रदोषेशंकरार्चनम् ॥ धर्मार्थकाममोक्षाणांयदेत
त्साधनंपरम् ॥५८॥ यएतच्छृणुयान्नित्यमाख्यानंपरमाद्भुतम् ॥ प्रदोषेशिवपूजांतेकथयेद्वासमाहितः ॥५९॥ नभवेत्तस्यदारिद्र्यंजन्मांतरश
तेष्वपि ॥ ज्ञानैश्वर्यसमायुक्तःसोंतेशिवपुरंव्रजेत् ॥ १६० ॥ येप्राप्यदुर्लभमिदंमनुजाःशरीरंकुर्वंत्यहोत्रपरमेश्वरपादपूजाम् ॥ धन्यास्तएवनि

जपुण्यजितात्रिलोकास्तेषांपदांबुजरजोभुवनंपुनाति ॥ १६१ ॥ अस्योद्यापनंशनिप्रदोषवत् ॥ इतिश्रीस्कंदपु० सोद्यापनंपक्षप्रदोषव्रतंसमाप्तम् ॥
अथमार्गशीर्षशुक्लत्रयोदश्यामनंगत्रयोदशीव्रतम् ॥ ॥ श्रीकृष्णउवाच ॥ शृणुपार्थव्रतंश्रेष्ठंनाम्नानंगत्रयोदशी ॥ याशिवायैपुराप्रोक्ताप्रसन्ने
नेंदुमौलिना ॥ गौर्युवाच ॥ पुरासौभाग्यकरणीख्याताऽनंगत्रयोदशी ॥ तस्याव्रतंमहादेवममापिकथयप्रभो ॥ कस्मिन्मासेप्रकर्तव्यंसं
पूर्णंचकथंभवेत् ॥ पूज्यानिकानिनामानिविधिनाकेनवैमृड ॥ दुर्भगानांचनारीणांसौभाग्यकरणंप्रभो ॥ वंध्यानांपुत्रजनकंधनधान्यविवर्धनम् ॥
एतद्व्रतंमहादेवप्रसादाद्वक्तुमर्हसि ॥ ईश्वरउवाच ॥ कथयामिनसंदेहोमहापुण्यंमहाफलम् ॥ चीर्णेनयेनदेवेशिसर्वंसंपद्यतेसुखम् ॥ नारीभिश्चनृभि
श्चैवविधातव्यंप्रयत्नतः ॥ हेमंतेहिऋतौप्राप्तेमासिमार्गशिरेशुभे ॥ शुक्लपक्षेत्रयोदश्यामुपवासंतुकारयेत् ॥ अश्वत्थदंतकाष्ठंचपूजाचमरुवेण[1]
तु ॥ नारिंगेणार्घ्यदानंचनैवेद्येफेणिकास्तथा ॥ गंधपुष्पैस्तथाधूपैरर्चयेच्चयथाविधि ॥ अक्षतैश्चफलैश्चैवएकाग्रहृदयःस्थितः ॥ सम्यग्जि
तेंद्रियोभूत्वाह्यनंगंहृदिकल्पयेत् ॥ पश्चात्प्रदक्षिणांकृत्वाअर्घ्यंचैवनिवेदयेत् ॥ नमस्कुर्यादनंगंचमंत्रेणानेनभामिनि ॥ नमोस्त्वनंगदेवाय
सर्वसंघनिवासिने ॥ हृदयस्थायनित्यायसूक्ष्मायपरमेष्ठिने ॥ स्वर्गेचैवतुपातालेमर्त्यलोकेतथैवच ॥ सर्वव्यापिन्ननंगत्वंगृहाणार्घ्यंनमो
स्तुते ॥ इत्यर्घ्यम् ॥ पूजयेत्स्वस्थचित्तेनप्राशयेन्मधुवैनिशि ॥ रंभातुल्याभवेन्नारीसौभाग्यमतुलंलभेत् ॥ नश्यंतिसर्वपापानिह्यन्यजन्म
कृतानिच ॥ लावण्यमतुलंचैवरूपैश्वर्यसमन्वितम् ॥ अश्वमेधस्ययज्ञस्यफलंप्राप्नोतिमानवः ॥ पौषे[2]शुक्लत्रयोदश्यामौदुंबरंदंतधावनम् ॥ जा

१ मरुबकपुष्पेण । २ पौषस्यैवतुमासस्येतिपाठः ।

तिपुष्पैः पूजनंस्याद्दाडिमेनार्घ्यमेवच॥ अशोकवर्तिकाःस्निग्धानैवेद्यंचप्रकल्पयेत् ॥ उपोष्यपूजयेद्देवंभक्त्यानाट्येश्वरंप्रिये॥ नाट्येश्वरायशर्वाय
ईश्वरायनमोनमः ॥ नमस्तेभुवनेशायगृहाणार्घ्यंनमोनमः॥ इत्यर्घ्यम्॥ व्रतस्थःस्वस्थचित्तेनचंदनंप्राशयेन्निशि॥ सर्वपापविशुद्धात्मासौभाग्यम
तुलंलभेत् ॥ माघशुक्लत्रयोदश्यामुपवासंचकारयेत्॥ न्यग्रोधदंतकाष्ठेनदंतान्संशोधयेच्छुचिः॥ कुंदपुष्पैःसमभ्यर्च्यअर्घ्यंचबीजपूरकैः ॥ नैवेद्ये
शर्करांदद्याद्देवोयोगेश्वरस्तथा॥ योगेश्वरायदेवाययोगे[1]जंबूनिवासिने ॥ गृहाणार्घ्यंमयादत्तंयोगेश्वरनमोस्तुते ॥ इत्यर्घ्यम् ॥ मौक्तिकं[2]प्राशये
द्रात्रौवाजपेयफलंलभेत् ॥ फाल्गुनस्यसितेपक्षेबादरंदंतधावनम् ॥ जपापुष्पैः पूजनंस्यादर्घ्यंकंकोलकेनच ॥ अपूपैश्चैवनैवेद्यंवीरेशं
नामपूजयेत्॥ वीरेश्वरवीरभद्रउमाकांतसुरेश्वर ॥ हिममध्यनिवासिंस्त्वंगृहाणार्घ्यंमहेश्वर ॥ सीतातुल्याभवेन्नारीकंकोलंप्राशयेन्निशि॥ चैत्रशु
क्लत्रयोदश्यांमल्लिकादंतधावनम्॥ दमनेनार्चयेद्देवंद्राक्षयार्घ्यंप्रकल्पयेत्॥ नैवेद्येवटकाःप्रोक्ताविश्वरूपंतुपूजयेत् ॥ नमस्तेविश्वरूपायस्वरूपाय
महात्मने ॥ गृहाणार्घ्यंमयादत्तंविश्वरूपनमोस्तुते ॥ इत्यर्घ्यम् ॥ उमातुल्याभवेन्नारीकर्पूरंप्राशयेन्निशि ॥ वैशाखशुक्लपक्षेत्वपामार्गंदंतधा
वनम् ॥ पूजाचमल्लिकापुष्पैःखर्जूरार्घ्यंतुदापयेत् ॥ नैवेद्येसक्तवःप्रोक्तामहारूपंतुपूजयेत् ॥ महारूपायनमस्तेसर्वविज्ञानरूपिणे ॥ गृहा
णार्घ्यंमयादत्तंमहारूपनमोस्तुते ॥ इत्यर्घ्यम्॥ प्राशयेद्रात्रिसमयेजातीफलमनुत्तमम् ॥ ज्येष्ठेशुक्लत्रयोदश्यांनिर्गुंडीदंतधावनम् ॥ पूजाबकुल
पुष्पैश्चश्रीफलेनार्घ्यकल्पना ॥ नैवेद्येमंडकान्दद्याल्लवंगंप्राशयेन्निशि॥ प्रद्युम्नंपूजयेद्देवंसर्वपापप्रणाशनम् ॥ नमस्तेपशुपतये[3]प्रद्युम्नभवनेश्वर ॥

---

१ स्थानविशेषः । २ मौक्तिकोदकमित्यर्थः । ३ प्रकृष्टंयत्द्युम्नंधनंतद्भवनेश्वरः ।

गृहाणार्घ्यंमयादत्तंप्रद्युम्नपरमेश्वर॥इत्यर्घ्यम्॥सुवर्णशतदानस्यफलमष्टगणंलभेत् ॥ शुचिशुक्लेत्रयोदश्यांनारिंगंदंतधावनम् ॥ कदंबैःपूजयेद्देवं नारिकेलार्घ्यकल्पना ॥ नैवेद्यंदधिभक्तंचपूजयेच्चउमापतिम् ॥ स्वस्थेनमनसातत्रतिलतोयंपिबेन्निशि॥उमापतेमहाबाहोकामदाहकतेनमः ॥ गृहाणार्घ्यंमयादत्तंचंद्रमौलेनमोस्तुते ॥ इत्यर्घ्यम् ॥ वाजपेयस्ययज्ञस्यफलंप्राप्नोतिमानवः ॥ श्रावणस्यसितेपक्षेत्रयोदश्यांशुभव्रतः ॥ कारंजंदंतकाष्ठंचपद्मपुष्पैस्तुपूजनम् ॥ रंभाफलेनार्घ्यदानंकुर्यात्प्रह्वेणचेतसा ॥ नैवेद्यंपायसंदद्याच्छूलपाणिंतुपूजयेत् ॥ प्राशयेद्गंधतो यंचरात्रौजागरणंचरेत् ॥ नमस्तेगिरिजानाथनमस्तेभक्तिभावन ॥ गृहाणार्घ्यंमयादत्तंशूलपाणेनमोस्तुते ॥ इत्यर्घ्यम् ॥ सौत्रामणे श्चयज्ञस्यफलमष्टगुणंलभेत् ॥ भाद्रेशुक्लत्रयोदश्यांकंकोलंदंतधावनम् ॥ अर्चयेच्चंपकैः पुष्पैर्नैवेद्यंघृतपूरिकाः ॥ अर्घ्यंपूगीफलंदद्यात्सद्यो जातंतुपूजयेत् ॥ ततःस्वस्थमनाभूत्वाअगुरुंप्राशयेन्निशि ॥ त्रिदशेशायदेवायसद्योजातायवैनमः ॥ गृहाणार्घ्यंमयादत्तंसद्योजातनमो स्तुते ॥ इत्यर्घ्यम् ॥ दशानामश्वमेधानांफलमाप्नोतिमानवः ॥ आश्विनेचत्रयोदश्यांकंकतीदंतधावनम् ॥ अर्चयेत्करवीरैस्तुअर्घ्यंकर्क टिकाफलम् ॥ त्रिदशाधिपतिःपूज्योनैवेद्येशुभ्रमंडकान् ॥ प्राशयेत्कांचनंतोयंनिशिदेवंप्रपूज्यच ॥ त्रिदशाधिपदेवेशउमाकांतमहे श्वर ॥ त्रिधारूपमयस्त्वंहिअर्घोयंप्रतिगृह्यताम् ॥ इत्यर्घ्यम् ॥ चातुर्मास्यस्ययज्ञस्यफलंदशगुणंलभेत् ॥ कार्तिकेचत्रयोदश्यां कादंबंदंतधावनम् ॥ रक्तोत्पलैःपूजनंचकूष्मांडार्घ्यंप्रदापयेत् ॥ नैवेद्येपूरिकादद्यात्पूजयेज्जगदीश्वरम् ॥ प्राशयेन्मदनफलंनिशिचैवं समाहितः ॥ नमस्तेजगदीशायतापिनेशूलपाणये ॥ गहाणार्घ्यंमहेशानजगदीशनमोस्तुते ॥ इत्यर्घ्यम् ॥ पूजांतेजागरंकुर्याद्गीतवा

द्यमहोत्सवैः ॥ अर्धनारीश्वरंकुर्यात्सौवर्णंरौप्यमेववा ॥ वस्त्रयुग्मेनसंवेष्ट्यशय्यायांविनिवेशयेत् ॥ एवंकृत्वातुदेवेशंशोभांतत्र
तुकारयेत् ॥ श्वेतपुष्पैस्तुसंपूज्यश्वेतचंदनचर्चितम् ॥ धूपैर्दीपैश्चनैवेद्यैःसवत्सांगांपयस्विनीम् ॥ श्वेतवस्त्रपरीधानांघंटाभरणभूषि
ताम् ॥ सुसूक्ष्मवस्त्रयुगलामाचार्यायनिवेदयेत् ॥ तथैवदक्षिणांदद्यादासनंचैवपादुके ॥ छत्रंचमुद्रिकांचैवकंकणंभूषणंशुभम् ॥ श
य्यादिव्याप्रदेयातुतूलाच्छादनसंयुता ॥ गृहोपस्करसंयुक्ताभक्तिसंयक्तचेतसा ॥ तत्रोपवेश्यचाचार्यमुपवासव्रतीततः ॥ पादौमूर्ध्निसमारो
प्यप्रणिपत्यवचोवदेत् ॥ भगवंस्त्वत्प्रसादेनव्रतसंपूर्णताम्मम ॥ एवमस्त्वितिसब्रूयात्तवतुष्टोस्तुशंकरः ॥ ईश्वरउवाच ॥ ॥ एवंकृत्वाप्रयत्नेनदंप
तीचैवपूजयेत् ॥ तयोश्चभोजनंदद्याद्दंपत्योःपारितोषिकम् ॥ अनेनविधिनातुष्याम्यहंयुक्तस्त्वयानघे ॥ तेभ्योदत्तंचयत्किंचिद
क्षयंनात्रसंशयः ॥ आचार्यमग्रतःकृत्वातस्यादेशंतुकारयेत् ॥ नह्याचार्यसमंतीर्थंनह्याचार्यसमंतपः ॥ तस्याहंकायमास्थायसर्वसिद्धिं
नयेध्रुवम् ॥ तेनैवाचार्यदानेनसर्वंभवतिचाक्षयम् ॥ एतद्व्रतंममश्रेष्ठंगुह्याद्गुह्यतरंपरम् ॥ राज्यमर्थान्सुतान्सिद्धिमवैधव्यंप्रयच्छति ॥
रूपंधनंधान्यमायुरारोग्यंचप्रदापयेत् ॥ इष्टलाभंचसौभाग्यंवर्धयेच्चवरानने ॥ त्रयोदशीव्रतान्नास्तिसौभाग्यकरणंपरम् ॥ इतिभ॰अनं
गत्रयोदशीव्र॰सं॰ ॥ इतित्रयोदशीव्रतानिसमाप्तानि ॥ ॥ अथ चतुर्दशीव्रतानिलिख्यंते ॥ ॥ तत्रचैत्रशुक्लचतुर्दशीपूर्वाग्राह्या ॥
निशिभ्रमंतिभूतानिशक्तयःशूलभृद्यतः ॥ ॥ अतस्तत्रचतुर्दश्यांसत्यांतत्पूजनंभवेदितिब्रह्मवैवर्तात् ॥ मधोःश्रावणमासस्यशुक्लायातु

१ आदेशमाज्ञाम् ।

चतुर्दशी ॥ सारात्रिव्यापिनीग्राह्यानान्याशुक्लाकदाचनेतिहेमाद्रौबौधायनोक्तेश्च ॥ अस्यामेवचतुर्दश्यांविशेषःस्मर्यतेपृथ्वीचंद्रोदयेपु
लस्त्यः ॥ चैत्रशुक्लचतुर्दश्यांयःस्नायाच्छिवसन्निधौ ॥ नप्रेतत्वमवाप्नोतिगंगायांतुविशेषतः ॥ इतिचैत्रशुक्लचतुर्दशी ॥ ॥ अथवैशा
खशुक्लचतुर्दश्यांनृसिंहचतुर्दशीव्रतम् ॥ तच्चप्रदोषव्यापिन्यांकार्यम् ॥ तदुक्तंनृसिंहपुराणेहेमाद्रौ ॥ वैशाखेशुक्लपक्षेतुचतुर्दश्यांनिशामु
खे ॥ मज्जन्मसंभवंपुण्यंव्रतंपापप्रणाशनम् ॥ वर्षेवर्षेचकर्तव्यंममसंतुष्टिकारणमिति ॥ स्कांदेपि ॥ वैशाखस्यचतुर्दश्यांसोमवारेऽनिलर्क्षे
के ॥ अवतारोनृसिंहस्यप्रदोषसमयेद्विजाइति ॥ अनिलर्क्षंस्वाती ॥ दिनद्वयेतद्व्याप्तावंशतःसमव्याप्तौचपरा ॥ अनंगेनसमायुक्तानसोपो
ष्याचतुर्दशी ॥ धनापत्यैर्वियुज्येततस्मात्तांपरिवर्जयेदितितत्रैवनिषेधात् ॥ विषमव्याप्तौत्वधिकव्याप्तिमती ॥ दिनद्वयेप्यव्याप्तौपरा ॥
परदिनेगौणकालव्याप्तेःसत्त्वात्पूर्वदिनेचतदभावात् ॥ अस्यांचसंकल्परूपव्रतोपक्रमोमध्याह्नएवकर्तव्यः ॥ ततोमध्यांह्नवेलायांनद्यादौस्नान
माचरेत् ॥ परिधायततोवासोव्रतकर्मसमारभेदितिनृसिंहपुराणोक्तेः ॥ तथेयमेवयोगविशेषेणातिप्रशस्ता ॥ तदुक्तंतत्रैव ॥ स्वातीनक्ष
त्रयोगेचशनिवारेमहद्व्रतम् ॥ सिद्धियोगस्यसंयोगेवणिजेकरणेतथा ॥ पुंसांसौभाग्ययोगेनलभ्येतदैवयोगतः ॥ एभियोंगैर्विनापिस्यान्मद्दिनं
पापनाशनम् ॥ सर्वेषामेववर्णानामधिकारोस्तिमद्व्रते ॥ इदंचसंयोगपृथक्त्वन्यायेननित्यंकाम्यंच ॥ विज्ञायमद्दिनंयस्तुलंघयेत्पापकृन्नरः ॥
सयातिनरकंघोरंयावच्चंद्रदिवाकरावितिस्कांदेउक्तत्वात् ॥ ममसंतुष्टिकारणमितिफलश्रवणाच्च ॥ इति व्रतनिर्णयः ॥ अथकथा ॥ सूतउ
वाच ॥ हिरण्यकशिपुंहत्वादेवदेवंजगद्गुरुम् ॥ सुखासीनंचनहरिंशांतकोपंरमापतिम् ॥ १ ॥ प्रह्लादोज्ञानिनांश्रेष्ठःपालयन्राज्यमुत्तमम् ॥

एकाकीचतदुत्संगेप्रियंवचनमब्रवीत् ॥ २ ॥ प्रह्लादउवाच ॥ नमस्तेभगवन्विष्णोनृसिंहरूपिणेनमः ॥ त्वद्भक्तोहंसुरेशैकंत्वांपृच्छामितु
तत्त्वतः ॥ ३ ॥ स्वामिंस्त्वयिममा[1]भिन्नाभक्तिर्जातात्वनेकधा ॥ कथंचतेप्रियोजातःकारणंमेवदप्रभो ॥ ४ ॥ नृसिंहउवाच ॥ कथयामिम
हाप्राज्ञशृणुष्वैकाग्रमानसः ॥ भक्तेर्यत्कारणंवत्सप्रियत्वस्यचकारणम् ॥ ५ ॥ पुराकालेह्यभूद्विप्रःकिंचित्त्वंनाप्यधीतवान् ॥ नाम्नात्वंवासु
देवोहिवेश्यासंसक्तमानसः ॥ ६ ॥ तस्मिञ्ज्ञां[2]तुनचैवत्वंचकर्थसुकृतंकियत् ॥ कृतवान्मद्व्रतंचैकंवेश्यासंगतिलालसः ॥ ७ ॥ मद्व्रतस्यप्रभा
वेणभक्तिर्जातातवानघ ॥ प्रह्लादउवाच ॥ श्रीनृसिंहोच्यतांतावत्कस्यपुत्रश्चकिंव्रतम् ॥ ८ ॥ वेश्यायांवर्तमानेनकथंतच्चकृतंमया ॥ येन
त्वत्प्रीतिमापन्नोवक्तुमर्हसिसांप्रतम् ॥ ९ ॥ नृसिंहउवाच ॥ पुराऽवंतीपुरेह्यासीद्ब्राह्मणोवेदपारगः ॥ तस्यनामसुशर्मेतिबहुलोकेषुविश्रुतः
॥ १० ॥ नित्यहोमक्रियांचैवविदधातिद्विजोत्तमः ॥ ब्राह्मक्रियासुनियतंसर्वासुकिलतत्परः ॥ ११ ॥ अग्निष्टोमादिभिर्यज्ञैरिष्टाःसर्वेसुरो
त्तमाः ॥ तस्यभार्यासुशीलाभूद्विख्याताभुवनत्रये ॥ १२ ॥ पतिव्रतासदाचारापतिभक्तिपरायणा ॥ जज्ञिरेऽस्यांसुताःपंचतस्माद्द्विजवरात्तथा
॥ १३ ॥ सदाचारेषुविद्वांसःपितृभक्तिपरायणाः ॥ तेषांमध्येकनिष्ठस्त्वंवेश्यासंगतितत्परः ॥१४॥ तयानिषेध्यमानेनसुरापानंत्वयाकृतम् ॥
सुवर्णंचाप्यपहृतंचौरैःसार्धंत्वयाबहु ॥ १५ ॥ विलासिन्यासमंचैवत्वयाचीर्णमघंबहु ॥ एकदातद्गृहेचासीन्महान्कलिस्त्वयासह ॥ १६ ॥
तेनकलहभावेनव्रतं[3]मेतत्त्वयाकृतम् ॥ अज्ञातान्मद्व्रतंजा[4]तंव्रतानामुत्तमंहितत्[5] ॥ १७ ॥ तस्यांविहारायोगेनरात्रौजागरणंकृतम् ॥ वेश्याया

१ मित्रेइत्यपिपाठः । २ जन्मनिनैवेत्यपिपाठः । ३ भोजनंनत्वयेत्यपिपाठः । ४ चक्रेइत्यपिपाठः । ५ व्रतमित्यपिपाठः ।

वँल्लभंकिंचित्प्रजातंनत्वयासह ॥१८॥ रात्रौजागरणंचीर्णंत्यक्तंभोग्यमनेकधा ॥ व्रतेनानेनचीर्णेनमोदंतिदिविदेवताः ॥१९॥ सृष्ट्यर्थंचपुरा ब्रह्माचक्रेह्येतदनुत्तमम् ॥ मद्व्रतस्यप्रभावेणनिर्मितंसचराचरम् ॥ २० ॥ ईश्वरेणपुराचीर्णंवधार्थंत्रिपुरस्यच ॥ माहात्म्येनव्रतस्याशुत्रि पुरस्तुनिपातितः ॥ २१ ॥ अन्यैश्चबहुभिर्देवैर्ऋषिभिश्चपुरानघ ॥ राजभिश्चमहाप्राज्ञैर्विहितंव्रतमुत्तमम् ॥ २२ ॥ एतद्व्रतप्रभावेणसर्वे सिद्धिमुपागताः ॥ वेश्यापिमत्प्रियाजातात्रैलोक्येसुखचारिणी ॥ २३ ॥ ईदृशंमद्व्रतंवत्सत्रैलोक्येतुसुविश्रुतम् ॥ कलहेनविलासिन्याव्रत मेतदुपस्थितम् ॥ २४ ॥ प्रह्लादतेनतेभक्तिर्मयिजाताह्यनुत्तमा ॥ धूर्तयाचविलासिन्याज्ञात्वाव्रतदिनंमम ॥ २५ ॥ कलहश्चकृतोयेनम द्व्रतंचकृतंभवेत् ॥ सावेश्यात्वप्सराजाताभुक्ताभोगाननेकशः ॥ २६ ॥ मुक्ताकर्मविलीनातुत्वंप्रह्लादविशंस्वमाम् ॥ कार्यार्थंचभवानास्ते मच्छरीरपृथक्तया ॥ २७ ॥ विधायसर्वकार्याणिशीघ्रंचैवगमिष्यसि ॥ इदंव्रतमवश्यंयेप्रकरिष्यंतिमानवाः ॥ २८ ॥ नतेषांपुनरावृत्तिर्मत्तः कल्पशतैरपि ॥ अपुत्रोलभतेपुत्रान्मद्भक्तश्चसुवर्चसः ॥ २९ ॥ दरिद्रोलभतेलक्ष्मींधनदस्यचयादृशी ॥ तेजःकामोलभेत्तेजोराज्येच्छूरा ज्यमुत्तमम् ॥ ३० ॥ आयुःकामोलभेदायुर्यादृशंचाशिवस्यहि ॥ स्त्रीणांव्रतमिदंसाधुपुत्रदंभाग्यदंतथा ॥ ३१ ॥ अवैधव्यकरंतासांपुत्रशोक विनाशनम् ॥ धनधान्यकरंचैवजातिश्रैष्ठ्यकरंशुभम् ॥३२॥ सार्वभौमसुखंतासांदिव्यंसौख्यंभवेत्ततः ॥ स्त्रियोवापुरुषाश्चापिकुर्वंतिव्रतमुत्त मम् ॥३३॥ तेभ्योहंप्रददेसौख्यंभुक्तिमुक्तिसमन्वितम् ॥ बहुनोक्तेनकिंवत्सव्रतस्यास्यफलंमहत् ॥३४॥ मद्व्रतस्यफलंवक्तुंनाहंशक्तोनशंकरः॥

१ प्रियमिष्टमित्यर्थः । २ तयेतिशेषः । ३ सुविस्मयइत्यपिपाठः । ४ आर्षमिदम् ।

ब्रह्माचतुर्भिर्वक्त्रैश्चनलभेन्महिमावधिम् ॥ ३५ ॥ प्रह्लादउवाच ॥ भगवंस्त्वत्प्रसादेनश्रुतंव्रतमनुत्तमम् ॥ व्रतस्यास्यफलंसाधुत्वयिमेभक्ति
कारणम् ॥ ३६ ॥ स्वामिन्ज्ञातंविशेषेणत्वत्तःपापनिकृंतनम् ॥ अधुनाश्रोतुमिच्छामिव्रतस्यास्यविधिंपरम् ॥ ३७ ॥ कस्मिन्मासेभवे
देतत्कस्मिन्वातिथिवासरे ॥ एतद्विस्तरतोदेववक्तुमर्हसिसांप्रतम् ॥ ३८ ॥ विधिनायेनवैस्वामिन्समग्रफलभुग्भवेत् ॥ ममोपरिकृपांकृत्वा
ब्रूहित्वंसकलंप्रभो ॥ ३९ ॥ नृसिंहउवाच ॥ साधुसाधुमहाभागव्रतस्यास्यविधिंपरम् ॥ सर्वंकथयतोमेऽद्यत्वमेकाग्रमनाःशृणु ॥ ४० ॥ वै
शाखशुक्लपक्षेतुचतुर्दश्यांसमाचरेत् ॥ मज्जन्मसंभवंपुण्यंव्रतंपापप्रणाशनम् ॥ ४१ ॥ वर्षेवर्षेतुकर्तव्यंममसंतुष्टिकारकम् ॥ महापुण्यमिदंश्रे
ष्ठंमानुषैर्भवभीरुभिः ॥ ४२ ॥ तेनैवक्रियमाणेनसहस्रद्वादशीफलम् ॥ जायतेतद्व्रतंवच्मिमानुषाणांमहात्मनाम् ॥ ४३ ॥ स्वातीनक्षत्रयो
गेनशनिवारेणसंयुते ॥ सिद्धियोगस्यसंयोगेवणिजेकरणेतथा ॥ ४४ ॥ पुण्यसौभाग्ययोगेनलभ्यतेदैवयोगतः ॥ सर्वैरेतैस्तुसंयुक्तंहत्या
कोटिविनाशनम् ॥ ४५ ॥ एतदन्यतरेयोगेतद्दिनंपापनाशनम् ॥ केवलेपिचकर्तव्यंमद्दिनेव्रतमुत्तमम् ॥ ४६ ॥ अन्यथानरकंयातियावच्चं
द्रदिवाकरौ ॥ यथायथाप्रवृत्तिःस्यात्पातकस्यकलौयुगे ॥ ४७ ॥ तथातथाप्रणश्यंतिसर्वेधर्मानसंशयः ॥ एतद्व्रतप्रभावेणमद्भक्तिःस्याद्दुरा
त्मनाम् ॥ ४८ ॥ विचार्येत्थंप्रकर्तव्यंमाधवेमासितद्व्रतम् ॥ नियमश्चप्रकर्तव्योदंतधावनपूर्वकम् ॥ ४९ ॥ श्रीनृसिंहमहोग्रस्त्वंदयांकृत्वा
ममोपरि ॥ अद्याहंतेविधास्यामिव्रतंनिर्विघ्नतांनय ॥५०॥इतिनियममंत्रः॥व्रतस्थेननकर्तव्यासंगतिःपापिभिःसह॥मिथ्यालापोनकर्तव्यःसम

---

१ कस्मिंश्चवासरेतिथौइत्यपिपाठः । २ गुप्तमित्यपिपाठः ।

ग्रफलकांक्षिणा ॥ ५१ ॥ स्त्रीभिर्दुष्टैश्च आलापान्व्रतस्थो नैव कारयेत् ॥ स्मर्तव्यं च महारूपं मद्दिने सकलं शुभे ॥ ५२ ॥ ततो मध्याह्नवेलायां नद्यादौ विमले जले ॥ गृहे वा देवखाते वा तडागे विमले शुभे ॥ ५३ ॥ वैदिकेन च मंत्रेण स्नानं कृत्वा विचक्षणः ॥ मृत्तिकागोमयेनैव तथा धात्रीफलेन च ॥ ५४ ॥ तिलैश्च सर्वपापघ्नैः स्नानं कृत्वा महात्मभिः ॥ परिधाय शुचिर्वासो नित्यकर्म समाचरेत् ॥ ५५ ॥ ततो गृहं समागत्य स्मरन्मां भक्तियोगतः ॥ गोमयेन प्रलिप्याथ कुर्यादष्टदलं शुभम् ॥ ५६ ॥ कलशं तत्र संस्थाप्य ताम्रं रत्नसमन्वितम् ॥ तस्योपरि न्यसेत्पात्रं वंशजं व्रीहिपूरितम् ॥ ५७ ॥ हैमीं तत्र च मन्मूर्तिः स्थाप्या लक्ष्म्यास्तथैव च ॥ पलेन वा तदर्धेन तदर्धार्धेन वा पुनः ॥ ५८ ॥ यथाशक्त्यथवा कार्या वित्तशाठ्यविवर्जितैः ॥ पंचामृतेन संस्नाप्य पूजनं तु समाचरेत् ॥ ५९ ॥ ततो ब्राह्मणमाहूय तमाचार्यमलोलुपम् ॥ सदाचारसमायुक्तं शांतं दांतं जितेंद्रियम् ॥ ६० ॥ आचार्यवचनाद्धीमान्पूजां कुर्याद्यथाविधि ॥ मंडपं कारयेत्तत्र पुष्पस्तबकशोभितम् ॥ ॥ ६१ ॥ ऋतुकालोद्भवैः पुष्पैः पूजयेत्स्वस्थमानसः[1] ॥ उपचारैः षोडशभिर्मंत्रैर्वेदोद्भवैस्तथा[2] ॥ ६२ ॥ शुभैः पौराणिकैर्मंत्रैः पूजनीयो यथाविधि ॥ चंदनं शीतलं दिव्यं चंद्रकुंकुममिश्रितम् ॥ ददामि तव तुष्ट्यर्थं नृसिंह परमेश्वर ॥ ६३ ॥ चंदनम् ॥ कालोद्भवानि पुष्पाणि तुलस्यादीनि वै प्रभो ॥ सम्यक्गृहाण देवेश लक्ष्म्या सह नमोस्तुते ॥ ६४ ॥ पुष्पाणि ॥ कृष्णागुरुमयं धूपं श्रीनृसिंह जगत्पते ॥ तव तुष्ट्यै प्रदास्यामि सर्वदेव नमोस्तुते ॥ ६५ ॥ धूपम् ॥ सर्वतेजोद्भवं[3] तेजस्तस्माद्दीपं ददामि ते ॥ श्रीनृसिंह महाबाहो तिमिरं मे विना

[1] घृतेत्यपिपाठः । [2] मन्मंत्रैर्नामभिरित्यपिपाठः । [3] दीपः पापहरः प्रोक्तस्तमोराशिविनाशनः । दीपेन लभ्यते तेजस्तस्माद्दीपं ददामि ते इति पुस्तकांतरे ।

शय ॥ ६६ ॥ दीपम् ॥ नैवेद्यंसौख्यदंचारुभक्ष्यभोज्यसमन्वितम् ॥ ददामितेरमाकांतसर्वपापक्षयंकुरु ॥ ६७ ॥ नैवेद्यम् ॥ नृसिंहाच्युतदेवेशलक्ष्मीकांतजगत्पते ॥ अनेनार्घ्यप्रदानेनसफलाःस्युर्मनोरथाः ॥ ६८ ॥ अर्घ्यम् ॥ पीतांबरमहाबाहोप्रह्लादभयनाशन ॥ यथाभूतेनार्चनेनेनयथोक्तफलदोभव ॥ ६९ ॥ इतिप्रार्थना ॥ रात्रौजागरणंकार्यंगीतवादित्रनिःस्वनैः ॥ पुराणश्रवणाद्यैश्चश्रोतव्याश्चकथाःशुभाः ॥ ७० ॥ ततःप्रभातसमयेस्नानंकृत्वाजितेंद्रियः ॥ पूर्वोक्तेनविधानेनपूजयेन्मांप्रयत्नतः ॥ ७१ ॥ वैष्णवान्प्रजपेन्मंत्रान्मदग्रेस्वस्थमानसः ॥ ततोदानानिदेयानिवक्ष्यमाणानिचानघ ॥ ७२ ॥ पात्रेभ्यस्तुद्विजेभ्योहिलोकद्वयजिगीषया ॥ सिंहःस्वर्णमयोदेयोममसंतोषकारकः ॥ ७३ ॥ गोभूतिलहिरण्यानिदेयानिचफलेप्सुभिः ॥ शय्यासतूलिकादेयासप्तधान्यसमन्विता ॥ ७४ ॥ अन्यानिचयथाशक्त्यादेयानिममतुष्टये॥वित्तशाठ्यंनकुर्वीतयथोक्तफलकांक्षया ॥ ७५ ॥ ब्राह्मणान्भोजयेद्भक्त्यातेभ्योदद्याच्चदक्षिणाम् ॥ निर्धनेनापिकर्तव्यंदेयंशक्त्यनुसारतः ॥ ७६ सर्वेषामेववर्णानामधिकारोस्तिमद्व्रते ॥ मद्भक्तैस्तुविशेषेणकर्तव्यंमत्परायणैः ॥ ७७ ॥ तद्वंशेनभवेद्दुःखंनदोषोमत्प्रसादतः ॥ मद्वंशेयेनराजातायोनिष्पत्तिपरायणाः ॥ ७८ ॥ तान्समुद्धरदेवेशदुस्तराद्भवसागरात् ॥ पातकार्णवमग्नस्यव्याधिदुःखांबुवासिभिः ॥ ७९ ॥ जीवैस्तुपरिभूतस्यमोहदुःखगतस्यमे ॥ करावलंबनंदेहिशेषशायिञ्जगत्पते ॥ ८० ॥ श्रीनृसिंहरमाकांतभक्तानांभयनाशन ॥ क्षीरांबुनिधिवासिंस्त्वंचक्रपाणेजनार्दन ॥ ८१ ॥ व्रतेनानेनदेवेशभुक्तिमुक्तिप्रदोभव ॥ एवंप्रार्थ्यततोदेवंविसृज्यचयथाविधि ॥ ८२ ॥ उपहारादिकंसर्वमाचार्यायनिवेदयेत् ॥ दक्षिणाभिस्तुसंतोष्यब्राह्मणांस्तुविसर्जयेत् ॥ ८३ ॥ मध्याह्नेतुसुसंयत्तोभुंजीतसहबंधु

भिः ॥ यइदंशृणुयाद्भक्त्याव्रतंपापप्रणाशनम् ॥ तस्यश्रवणमात्रेणब्रह्महत्याव्यपोहति ॥ ८४ ॥ पवित्रंपरमंगुह्यंकीर्तयेद्यस्तुमानवः ॥ सर्वा
न्कामानवाप्नोतिव्रतस्यास्यफलंलभेत् ॥ इतिहेमाद्रौनृसिंहपुराणेनृसिंहचतुर्दशीव्रतकथासमाप्ता ॥ अथअनंतचतुर्दशीव्रतम् ॥ ॥ सापरा
कार्यापूजनकालव्यापित्वात् ॥ अनंतंपूजयेद्यस्तुप्रातःकाले समाहितः ॥ अनंतांलभतेसिद्धिंचक्रपाणेःप्रसादतइतिब्रह्मपुराणात् ॥ तदभावे
पूर्वा ॥ उभयदिनेसूर्योदयव्यापित्वेपूर्णायुक्तत्वेनपरैवग्राह्या ॥ भाद्रेसितेचतुर्दश्यामनंतंपूजयेत्सुधीः ॥ ह्रासेनसर्वकर्माणिप्रातरेवहिपूजनम् ॥
शुक्लाभाद्रपदस्यापिअनंताख्याचतुर्दशी ॥ उदयव्यापिनीग्राह्याघटिकैकापियाभवेदितिहेमाद्रिः ॥ तस्मात्परैवेतिसर्वसंमतम् ॥ ॥ अथ
अनंतव्रतविधिः ॥ ॥ प्रातर्नद्यादिकेस्नात्वानित्यकर्मसमाप्यच ॥ अनंतंहृदयेकृत्वाशुचिस्तत्रसमाहितः ॥ मंडलंसर्वतोभद्रंकृत्वाकुंभंतु
विन्यसेत् ॥ तत्रचाष्टदलेपद्मेपूजयेद्विष्णुमव्ययम् ॥ कृत्वादर्भमयंशेषंफणासप्तकमंडितम् ॥ अनंतमच्युतंकृष्णमनिरुद्धंतुपद्मजम् ॥ दैत्या
रिंपुंडरीकाक्षंगोविंदंगरुडध्वजम् ॥ कूर्मंजलनिधिंविष्णुंवामनंजलशायिनम् ॥ प्रतिवर्षंक्रमेणैवंनामानिचचतुर्दश ॥ तस्याग्रतोदृढंसूत्रंकुंकु
माक्तंसुशोभनम् ॥ चतुर्दशग्रंथियुतमुपस्थाप्यप्रपूजयेत् ॥ ततस्तुमूलमंत्रेणनमस्कृत्यचतुर्भुजम् ॥ नवाम्रपल्लवाभासंपिंगभ्रूश्मश्रुलोचनम्
पीतांबरधरंदेवंशंखचक्रगदाधरम् ॥ प्रसन्नवदनंविष्णुंविश्वरूपंविचिंतयेदिति ॥ मासपक्षाद्युल्लिख्यममसकुटुंबस्यक्षेमस्थैर्यायुरारोग्यचतुर्विध
पुरुषार्थसिद्ध्यर्थंमयाआचरितस्यआचीर्यमाणस्यचव्रतस्यसंपूर्णफलप्राप्त्यर्थंश्रीमदनंतपूजनमहंकरिष्ये ॥ तथाचासनादिकलशाराधना
दिकरिष्ये ॥ इतिसंकल्प्य कलशस्य० सर्वे समुद्राःसितासिते०कलशेवरुणंसंपूज्य ॥ ततःशंखंघंटांचपूजयेत् अपवित्रःपवित्रोवा० पूजाद्र

व्याणिआत्मानंचप्रोक्ष्ययमुनांपूजयेत् ॥ श्रीमदनंतव्रतांगत्वेनश्रीयमुनापूजनंकरिष्ये ॥ तद्यथा ॥ लोकपालस्तुतांदेवीमिंद्रनीलसमुद्भवाम् ॥
यमुनेत्वामहंध्यायेसर्वकामार्थसिद्धये ॥ ध्यानम् ॥ सरस्वतिनमस्तुभ्यंसर्वकामप्रदायिनि ॥ आगच्छदेवियमुनेव्रतसंपूर्तिहेतवे ॥ इमंमेगंगे०
इत्यावाह्य ॥ सिंहासनसमारूढेदेवशक्तिसमन्विते ॥ सर्वलक्षणसंपूर्णेयमुनायैनमोस्तुते ॥ आसनम् ॥ रुद्रपादेनमस्तुभ्यंसर्वलोकहित
प्रिये ॥ सर्वपापप्रशमनितरंगिण्यैनमोस्तुते ॥ पाद्यम् ॥ गरुडपादेनमस्तुभ्यंशंकरप्रियभामिनि ॥ सर्वकामप्रदेदेवियमुनेतेनमोनमः ॥ अर्घ्य
म् ॥ विष्णुपादोद्भवेदेविसर्वाभरणभूषिते ॥ कृष्णमूर्तेमहादेविकृष्णावेण्यैनमोनमः ॥ आचमनम् ॥ सर्वपापहरेदेविविश्वस्यप्रियदर्शने ॥
सौभाग्यंयमुनेदेहियमुनायैनमोस्तुते ॥ मधुपर्कम् ॥ नंदिपादेमहादेविशंकरार्धशरीरिणि ॥ सर्वलोकहितेदेविभीमरथ्यैनमोस्तुते ॥ पंचामृत
स्नानम् ॥ सिंहपादोत्तमेदेविनारासिंहसमप्रभे ॥ सर्वलक्षणसंपूर्णेभवनाशिनितेनमः ॥ शुद्धोदकस्नानम् ॥ विष्णुपादाब्जसंभूतेगंगेत्रिपथगा
मिनि ॥ सर्वपापहरेदेविभागीरथ्यैनमोस्तुते ॥ श्वेतवस्त्रम् ॥ त्र्यंबकस्यजटोद्भूतेगौतमस्याघनाशिनि ॥ सप्तधासागरंयांतिगोदावरिनमोस्तुते ॥
कंचुकीम् ॥ माणिक्यमुक्तावलिकौस्तुभांश्वगोमेदवैदूर्यसुपुष्परागैः ॥ वज्रैश्चनीलैश्वसुशोभितानिगृहाणसर्वाभरणानिदेवि ॥ आभरणानि ॥
चंदनागुरुकस्तूरीरोचनंकुंकुमंतथा ॥ कर्पूरेणसमायुक्तंगंधंदाम्निचभक्तितः ॥ गंधम् ॥ श्वेतांश्वचंद्रवर्णाभान्हरिद्रारागरंजितान् ॥ अक्षतांश्वसु
रश्रेष्ठेददामियमुनेशुभे ॥ अक्षतान् ॥ मंदारमालतीजातीकेतकीपाटलैःशुभैः ॥ पूजयामिचदेवेशियमुनेभक्तवत्सले ॥ पुष्पाणि ॥ अथांग
पूजा ॥ चंचलायैनमःपादौपूजयामि ॥ चपलायै० जानुनीपू० ॥ भक्तवत्सलायै० ॥ कटीपू० ॥ हरायै० नाभिंपू० ॥ मन्मथवासिन्यै० ॥ गुह्यं

पू० ॥ अज्ञानवासिन्यै० ॥ हृदयंपू० ॥ भद्रायै० ॥ स्तनौपू० ॥ अघहंत्र्यै० ॥ भुजौपू० ॥ रक्तकंठच्यै० ॥ कंठंपू० ॥ भवहर्त्यै० ॥ मुखं पू० ॥ गौर्यै० ॥ नेत्रेपू० ॥ भागीरथ्यै० ॥ लालटंपू० ॥ यमुनायै० ॥ शिरःपू० ॥ सरस्वत्यै० ॥ सर्वांगंपू० ॥ अथनामपूजा ॥ यमुनायैनमः ॥ सीतायै० ॥ कमलायै० ॥ उत्पलायै० ॥ अभीष्टप्रदायै० ॥ धात्र्यै० ॥ हरिहररूपिण्यै ॥ गंगायै० ॥ नर्मदायै० ॥ गौर्यै० ॥ भागीरथ्यै० ॥ तुंगायै० ॥ भद्रायै० ॥ कृष्णावेण्यै० ॥ भवनाशिन्यै० ॥ सरस्वत्यै० ॥ कावेर्यै० ॥ सिंधवे० ॥ गौतम्यै० ॥ गोमत्यै० ॥ गायत्र्यै० ॥ गरुडायै० ॥ गिरिजाजे० ॥ चंद्रचूडायै० ॥ सर्वेश्वर्यै० ॥ महालक्ष्म्यैनमः ॥ सर्वपापहरेदेविसर्वोपद्रवनाशिनि ॥ सर्वसंपत्प्रदेदेवियमुनायनमोस्तुते ॥ इतिनामपूजा ॥ दशांगोगुग्गुलोद्भूतश्चंदनागुरुसंयुतः ॥ कपिलाघृतसंयुक्तोधूपोयंप्रतिगृह्यताम् ॥ धूपम् ॥ घृतवर्तिसमायुक्तंवह्निनायोजितंमया ॥ गृहाणदीपकंदेविसर्वैश्वर्यप्रदायिनि ॥ दीपम् ॥ शर्करामधुसंयुक्तदधिक्षीराज्यसंयुतम् ॥ पक्वमन्नंमयादत्तंनैवेद्यंप्रतिगृह्यताम् ॥ नैवेद्यम् ॥ पानीयंपावनंश्रेष्ठंगंगादिसरिदुद्भवम् ॥ हस्तप्रक्षालनंदेविगृहाणमुखशोधनम् ॥ हस्तप्रक्षालनम् ॥ मुखप्रक्षालनम् ॥ कर्पूरेणसमायुक्तंयमुनेचारुचंदनम् ॥ समर्पितंमयातुभ्यंकरोद्वर्तनकंकुरु ॥ करोद्वर्तनार्थेचंदनम् ॥ इदंफलमितिफलम् ॥ पूगीफलमितितांबूलम् ॥ हिरण्यगर्भेतिदक्षिणाम् ॥ त्रैलोक्यपावनेगंगेअंधकारविनाशिनि ॥ पंचार्तिक्यंगृहाणेदंविश्वप्रीत्यैनमोस्तुते ॥ आर्तिक्यम् ॥ केतकीजातिकुसुमैर्मल्लिकामालतीभवैः ॥ पुष्पांजलिर्मयादत्तस्तवप्रीत्यैनमोस्तुते ॥ पुष्पांजलिम् ॥ यानिकानिचेतिप्रदक्षिणाम् ॥ अन्यथाशरणंनास्तीतिनमस्कारम् ॥ सुरासुरेंद्रादिकिरीटमौक्तिकैर्युक्तंसदायत्तवपादपंकजम् ॥ पराव

रंपातुवरंसुमंगलंनमामिभक्त्यातवकामसिद्धये ॥ भवानिचमहालक्ष्मिसर्वकामप्रदायिनि ॥ व्रतंसंपूर्णतांयातुयमुनायैनमोस्तुते॥इतिप्रार्थना॥
इतियमुनापूजासमाप्ता ॥ यमुनाकलशोपरिपूर्णपात्रंनिधायास्योपरिसप्तफणायुतंशेषंसंस्थाप्यपूजयेत् ॥ अथध्यानम् ॥ ब्रह्मांडाधारभूतंचय
मुनांतरवासिनम् ॥ फणासप्तसमायुक्तंध्यायेऽनंतंहरिप्रियम् ॥ ध्यायामि ॥ शेषंसप्तफणायुक्तंकालपन्नगनायकम् ॥ अनंतशयनार्थंत्वां
भक्त्याह्यावाहयाम्यहम् ॥ आवाहनम् ॥ नवनागकुलाधीशशेषोद्धारककाश्यप ॥ नानारत्नसमायुक्तमासनंप्रतिगृह्यताम् ॥ आसनम् ॥
अनंतप्रियशेषेशजगदाधारविग्रह ॥ पाद्यंगृहाणभक्त्यात्वंकाद्रवेयनमोस्तुते ॥ पाद्यम् ॥ कश्यपानंदजनकमुनिवंदितभोप्रभो ॥ अर्घ्यंगृहाण
सर्वज्ञसादरंशंकराप्रिय ॥ अर्घ्यम् ॥ सहस्रफणिरूपेणवसुधोद्धारकप्रभो ॥ गृहाणाचमनंदेवपावनंचसुशीतलम् ॥ आचमनम् ॥
कुमाररूपिणेतुभ्यंदधिमध्वाज्यसंयुतम् ॥ मधुपर्कंप्रदास्यामिसर्पराजनमोस्तुते ॥ मधुपर्कम् ॥ ततःपंचामृतस्नानम् ॥ गंगादिपुण्यतीर्थै
स्त्वामभिषिंचेयमादरात् ॥ बलभद्रावतारेशनंददश्रीपतेःसखे ॥ स्नानम् ॥ कौशेययुग्मंदेवेशप्रीत्यातवमयार्पितम् ॥ गृहाणपन्नगाधीशता
क्ष्यंशत्रोनमोस्तुते ॥ वस्त्रम् ॥ सुवर्णनिर्मितंसूत्रंग्रंथितंकण्ठहारकम् ॥ अनेकरत्नैः खचितंसर्पराजनमोस्तुते ॥ यज्ञोपवीतम् ॥ अनेकरत्नान्वि
तहेमकुंडलेमाणिक्यसंकाशितकंकणद्वयम्॥हेमांगुलीयंकृतरत्नमुद्रिकंहैमंकिरीटंफणिराजतोर्पितम्॥सर्वाभरणम् ॥ श्रीखंडंचं० ॥ चंदनम् ॥
अक्षताश्चसु० ॥ अक्षतान् ॥ करवीरैर्जातिकुसुमैश्चं० ॥ पुष्पाणि ॥ अथांगपूजा ॥ सहस्रपादाय० पादौपू० ॥ गूढगुल्फाय० गुल्फौपू० ॥
हेमजंघायन० जंघेपू० ॥ मंदगतये० जानुनीपू०॥ पीतांबरधरायन० कटींपू०॥ गंभीरनाभायन० नाभिंपूज० ॥ पवनाशनाय० उदरंपू०॥

उरगाय० हस्तौपू० ॥ कालियाय० भुजौपूजयामि ॥ कम्बुकण्ठायन० कण्ठंपूजयामि ॥ विषवक्त्रायन० वक्त्रंपूजयामि ॥ फणाभूषणाय० ललाटंपू० ॥ लक्ष्मणाय० शिरःपूजयामि ॥ अनंतप्रियाय० सर्वांगंपूजयामि ॥ इत्यंगपूजा ॥ वनस्पति० ॥ साज्यंचवर्तिं० ॥ दीपम्॥नैवेद्यंगृ०॥नैवेद्यम्॥ मध्येपानीयम्॥ करोद्वर्तनार्थेचंदनम्॥ पूगीफलं०॥ तांबूलम्॥ इदंफलमितिफलम्॥हिरण्यगर्भेतिदक्षिणाम्॥ श्रियेजातइति नीराज०॥नानाकुसुमसंयुक्तंपुष्पांजलिमिमंप्रभो॥कश्यपानंदजनकसर्पेशप्रतिगृह्यताम्॥मंत्रपुष्पम् ॥ यानिकानि०॥ प्रदक्षिणाम्॥ नमोऽस्त्वनंताय० ॥ नमस्कारान् ॥ अनंतकल्पोक्तफलंदेहिमेत्वंमहीधर॥ त्वत्पूजारहितश्चार्द्धंफलंप्राप्नोतिमानवः॥ प्रार्थनाम्॥ इतिशेषपूजा ॥ प्राग्द्वारे ॥ द्वारश्रियै० नंदायै० सुनन्दायै० धात्र्यैन० विधात्र्यैन० चिच्छक्त्यै० शंखनिधयेन० पद्मनिधये० ॥ दक्षिणद्वारे ॥ द्वारश्रियै० चंडायै० प्रचंडायै० धात्र्यैन० चिच्छक्त्यैन० मायाशक्त्यै० शंखनिधये ॥ पद्मनिधयेनमः ॥ पश्चिमद्वारे ॥ द्वारश्रियै० बलायैन० प्रबलायै० धात्र्यै० विद्यायै० चिच्छक्त्यैन० मायाशक्त्यै० शंखनिधये० पद्मनिधये० ॥ उत्तरद्वारे ॥ द्वारश्रियै० महाबलायै० प्रबलायैनमः॥ धात्र्यै० विधात्र्यै० चिच्छक्त्यै० मायाशक्त्यै० शंखनिधये० पद्मनिधये० ॥ अथपीठपूजा ॥ मध्ये वास्तुपुरुषायन० मंडूकाय० कालाग्निरुद्रायन० आधारशक्त्यैन० कूर्मायन० पृथिव्यै० अमृतार्णवाय० श्वेतद्वीपाय० कल्पवृक्षेभ्यो० मणिमन्दिरायन० हेमपीठाय० धर्माय० अधर्माय० ज्ञानाय० वैराग्याय० ऐश्वर्याय० अनैश्वर्याय० सहस्रफणान्वितायानंताय० सर्वसत्त्वाय० पद्माय० आनंदकंदाय० संविन्नालाय० विकारमयकेसरेभ्यो० प्रकृतिमयपत्रेभ्यो० सूर्यमंडलाय० चंद्रमंडलाय० वह्निमंडलाय० संसत्त्वाय० रंरजसे० तंतमसे०

आत्मनेन॰ परमात्मनेन॰ अंतरात्मनेन॰ ज्ञानात्मने॰ प्राणात्मने॰ कालात्मनेन॰ विद्यात्मनेन॰ पूर्वादिदिक्षु ॥ जयायैनमः विजयायैनमः अजितायैनमः अपराजितायै॰ नित्यायै॰ विनाशिन्यै॰ दोग्ध्यैनमः अघोरायैनमः मंगलायैनमः अपारशक्तिकमलासनायैनमः ॥ इतिपीठपूजा ॥ अस्यश्रीप्राणप्रतिष्ठामंत्रस्यब्रह्मविष्णुमहेश्वराऋषयः ॥ ऋग्यजुःसामाथर्वाणिछंदांसि ॥ पराप्राणशक्तिर्देवता ॥ आं बीजम् ॥ ह्रीं शक्तिः ॥ क्रौं कीलकम् ॥ श्रीमदनंतस्यप्राणप्रतिष्ठापनेविनियोगः ॥ ॐ ॥ आंह्रींक्रौंअंयंरंलंवंशंषंसंहंळंक्षंअः क्रौंह्रीं आं अनंतस्य प्राणाइहप्राणाः ॥ ॐ आंह्रीं॰अनंतस्यजीवइहस्थितः ॥ ॐ आंह्रींक्रौंअं॰ अनंतस्यसर्वेंद्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानीहागत्यसुखंचिरंतिष्ठंतुस्वाहा ॥ असुनीते॰ चत्वारिवाक्॰ गर्भाधानादिसंस्कारसिद्ध्यर्थं पंचदशप्रणवावृत्तीःकरिष्ये ॥ ॐ ॐ॰ ॥ १८ ॥ ॥ रक्तांभोधिस्थपो॰ परानः ॥ अथानंतपूजा ॥ ततस्तुमूलमंत्रेणनमस्कृत्यजनार्दनम् ॥ नवाभ्रपल्लवाभासंपिंगलश्मश्रुलोचनम् ॥ पीतांबरधरंदेवंशंखचक्रगदाधरम् ॥ [1]अलंकृतंसमुद्रस्थंविश्वरूपंविचिंतये ॥ ध्यायामि ॥ आगच्छानंतदेवेशतेजोराशेजगत्पते ॥ [2]इमांमयाकृतांपूजांगृहाणपुरुषोत्तम ॥ सहस्रशीर्षेत्यावाहनम् ॥ नानारत्नसमायुक्तंकार्तस्वरविभूषितम् ॥ आसनंदेवदेवेशगृहाणपुरुषोत्तम ॥ पुरुषएवेदमित्यासनम् ॥ गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतम् ॥ तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्यताम् ॥ एतावानस्येतिपाद्यम् ॥ अनंतानंतदेवेशअनंतफलदायक ॥ अनंतानंतरूपोसिगृहाणार्घ्यंनमोस्तुते॥त्रिपादूर्ध्वमित्यर्घ्यम् ॥ गंगो

---

१ प्रसन्नवदनंविष्णुमित्यपिपाठः । २ क्रियमाणांमयेतिचपाठः ।

दकंसमानीतंसुवर्णकलशोस्थितम्॥आचम्यतांहृषीकेशप्रसीदपुरुषोत्तम ॥ तस्माद्विराळेत्याचमनीयम्॥अनंतगुणरूपायविश्वरूपधरायच ॥
नमोमहात्मदेवायअनंतायनमोनमः ॥ यत्पुरुषेणेतिस्नानम् ॥ ततःपंचामृतस्नानम् ॥ सुरभेस्तुसमुत्पन्नंदेवानामपिदुर्लभम् ॥ पयोददा
मिदेवेशस्नानार्थंप्रतिगृह्यताम् ॥ आप्यायस्वेतिपयःस्नानम् ॥ चंद्रमंडलसंकाशंसर्वदेवप्रियंहियत् ॥ ददामिदधिदेवेशस्नानार्थंप्रतिगृह्यताम् ॥
दधिक्राव्णोअकारिषमितिदधिस्नानम् ॥ आज्यंसुराणामाहारआज्यंयज्ञेप्रतिष्ठितम् ॥ आज्यंपवित्रंपरमंस्नानार्थं० ॥ घृतंमिमिक्षेइतिघृत
स्नानम् ॥ सर्वौषधिसमुत्पन्नंपीयूषसदृशंमधु ॥ स्नानायतेमयादत्तंगृहाणपरमेश्वर ॥ मधुवातेतिमधु० ॥ इक्षुदंडात्समुद्भूतांशर्करांमधुरां
शुभाम् ॥ स्नानायतेमयादत्तांगृहाणपरमेश्वर ॥ स्वादुःपवस्वेतिशर्करास्नानम् ॥ शुद्धोदकस्नानं नाममंत्रैः ॥ पुरुषसूक्तेन अभिषेकः ॥
ततकांचनवर्णाभंकौशेयंचसुनिर्मितम् ॥ वस्त्रंगृहाणदेवेशलक्ष्मीयुक्तनमोस्तुते ॥ तंयज्ञमितिवस्त्रम् ॥ वस्त्रानंतरमाचमनीयम् ॥ दामो
दरनमस्तेस्तुत्राहिमांभवसागरात् ॥ ब्रह्मसूत्रंसोत्तरीयंगृहाणपुरुषोत्तम ॥ यज्ञोपवीतंपरमंप० ॥ तस्माद्यज्ञादित्युपवीतानंतरंआच
मनीयम् ॥ श्रीखंडंचंदनंदि० तस्माद्यज्ञात्सर्वहु० चंदनम् ॥ अक्षताश्चसु० अक्षतान् ॥माल्यादीनि० तस्मादश्वेतिपुष्पम् ॥ अथग्रंथिपूजा ॥
श्रियैनमः॥मोहिन्यै०पद्मिन्यै०महाबलायै०अजायै०मंगलायै०वरदायै०शुभायै०जयायै०विजयायै०जयंत्यै०पापनाशिन्यै०विश्वरूपायै०
सर्वमंगलायै० ॥ १४ ॥ इतिग्रंथिपूजा ॥ अथांगपूजा ॥ मत्स्यायन० पादौपूजयामि ॥ कूर्माय० गुल्फौपू० वराहाय० जानुनीपू०
नारसिंहाय०ऊरूपू० वामनाय० कटींपू० रामाय० उदरंपू० श्रीरामाय० हृदयंपू० कृष्णाय० मुखंपू० सहस्रशिरसेन० शिरःपू० ॥ श्री

मदनंताय ० सर्वांगंपू० ॥ अथावरणपूजा ॥ अनंतस्यदक्षिणपार्श्वे ॥ रमायै० वामपार्श्वे ॥ भूम्यै० ॥ इतिप्रथमावरणम् ॥ आवरणदेवतामा
वाह्य हस्तंप्रक्षाल्य गंधपुष्पंतर्जनीमध्यमांगुष्ठैर्धृत्वा मध्येशंखोदकंगृहीत्वा मंत्रांतेशंखोदकंभूमौनिक्षिप्य पुष्पंदेवोपरिक्षिपेत् ॥ दयाब्धेत्राहि
संसारसर्पान्मांशरणागतम् ॥ भक्त्यासमर्पयेतुभ्यंप्रथमावरणार्चनम् ॥ इतिमंत्रमुच्चार्यजलंत्यक्त्वापुष्पंदेवोपरिन्यसेदिति ॥१॥पूर्वादिक्रमेण ॥
वृद्धोल्काय० महोल्काय० शतोल्काय० सहस्रोल्काय० ॥ दयाब्धेत्राहि० द्वितीयावरणार्चनम्: ॥ २ ॥ तथैव ॥ वासुदेवाय० संकर्षणाय० ॥
प्रद्युम्नाय० अनिरुद्धाय० ॥ दयाब्धेत्राहि० तृतीयावरणार्चनम् ॥ ३ ॥ प्राच्यादिक्रमेण ॥ केशवाय० नारायणाय० माधवाय० गोविंदाय०
विष्णवे० मधुसूदनाय० त्रिविक्रमाय० वामनाय० श्रीधराय० हृषीकेशाय० पद्मनाभाय० दामोदराय० ॥ दयाब्धेत्राहि० चतुर्थावरणा
र्चनम् ॥४॥ पूर्वादिक्रमेण ॥ मत्स्याय०कूर्माय०वराहाय०नारसिंहाय०वामनाय०रामाय०श्रीरामा०कृष्णाय०बौद्धाय०कल्कये०अनंताय०
विश्वरूपिणे०॥दयाब्धेत्राहि०पंचमावरणार्चनम् ॥५॥ पूर्वस्यां अनंताय०दक्षिणस्यां ब्रह्मणेन०पश्चिमायां वायवे०उत्तरस्यां ईशानाय०आग्ने
य्यां वारुण्यै० नैर्ऋत्यां गायत्र्यै० वायव्यां० भारत्यै० ईशान्यां गिरिजायै० अग्रे गरुडाय० वामे सुपुण्याय०दक्षिणे ॥ (?) दयाब्धेत्राहि०
षष्ठंह्यावरणार्चनम्॥६॥पूर्वादिक्रमेण इंद्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय०॥दयाब्धेत्रा० सप्तमाव
रणार्चनम् ॥ ७ ॥ आग्नेय्यां शेषाय० नैर्ऋत्यां विष्णवे० वायव्यां विधये० ईशान्यां प्रजापतये० ॥ दयाब्धेत्राहि० अष्टमावरणार्चन
म् ॥ ८ ॥ आग्नेय्यां गणपतये० नैर्ऋत्यां सप्तमातृभ्यो० वायव्यां दुर्गायै० ईशान्यां क्षेत्राधिपतये० ॥ दयाब्धेत्राहि० नवमावरणा

र्चनम् ॥ ९ ॥ मध्ये ब्रह्मणेन० भास्कराय० शेषाय० सर्वव्यापिने० ईश्वराय० विश्वरूपा० महाकायाय० सृष्टिकर्त्रे० कृष्णाय० हरये शिवाय० स्थितिकारकाय० अंतकाय० ॥ दयाब्धेत्राहि० दशमावरणार्चनम् ॥ १० ॥ शौरये० वैकुंठाय० महाबलाय० ॥ पुरुषोत्तमाय० अजाय० पद्मनाभाय० मंगलाय० हृशीकेशाय० अनंताय० कपिलाय० शेषाय० संकर्षणाय० हलायुधाय० तारक्षाय० सीरपाणये० बलभद्राय० ॥ दयाब्धेत्राहि० एकादशावरणार्चनम् ॥ ११ ॥ माधवाय० मधुसूदनाय०अच्युताय० अनंताय०गोविंदाय० विजयाय० अपराजिताय०कृष्णाय०॥दयाब्धेत्राहि०द्वादशावरणार्चनम् ॥ १२ ॥ क्षीराब्धिशायिने० अच्युताय० भूम्याधाराय० लोकनाथाय० फणामणिविभूषणाय० सहस्रमूर्ध्ने० सहस्रार्चिषे०॥ दयाब्धेत्राहि० त्रयोदशावरणार्चनम्॥ १३ ॥ केशवादिचतुर्विंशतिनामभिःसंपूज्य ॥ दयाब्धेत्राहि० चतुर्दशावरणार्चनम् ॥ १४ ॥ अथपत्रपूजा ॥ कृष्णाय० पलाशपत्रंसमर्पयामि ॥ विष्णवे० औदुंबरप० हरये० अश्वत्थप०शंभवे० भृंगराजप० ब्रह्मणे० जटाधारप० भास्कराय० अशोकप० शेषाय० कपित्थप० सर्वव्यापिने० वटपत्रं० ईश्वराय० आम्रप० विश्वरूपिणे० कदलीप० महाकायाय० अपामार्गप० सृष्टिकर्त्रे० करवीरप० स्थितिकर्त्रे० पुन्नागप० अनंताय० नागवल्लीप० ॥१४॥ अथ पुष्पपूजा ॥ ॐ अनंताय० पद्मपुष्पंसमर्पयामि ॥ विष्णवे० जातीपु० केशवाय० चंपकपु० अव्यक्ताय० कल्हारपु० सहस्रजिते० केतकीपु० अनंतरूपिणे० बकुलपु० इष्टाय० शतपु० विशिष्टाय० पुन्नागपुष्पं० शिष्टेष्टाय० करवीरपु० शिखंडिने० धत्तूरपु० नहुषाय० कुंदपु० विश्वबाहवे० मल्लिकापु०महीधराय०मालतीपु०अच्युताय०गिरिकर्णिकापु० ॥ १४ ॥ अथाष्टोत्तरशतनामभिःपूजयेत्॥ अनंताय०

अच्युताय॰ अद्भुतकर्मणेनम॰॥ अमितविक्रमाय॰ अपराजिताय॰ अखंडाय॰ अग्निनेत्राय॰ अग्निवपुषे॰ अदृश्याय॰ अत्रिपुत्राय॰ १॰ अनुकूला
य॰ अनाशिने॰ अनघाय॰ अप्सुनिलयाय॰ अहरहाय॰ अष्टमूर्तये॰ अनिरुद्धाय॰ अनिर्विंघ्नाय॰ अचंचलाय॰ अब्दादिकाय॰ २॰ अचलरूपा
य॰ अखिलधराय॰ अव्यक्ताय॰ अनुरूपाय॰ अभयंकराय॰ अक्षताय॰ अवपुषे॰ अयोनिजाय॰ अरविंदाक्षाय॰ अशनवर्जिताय॰ ३॰ अधोक्ष
जाय॰ अदितिपुत्राय॰ अंबिकापतिपूर्वजाय॰ अपस्मारनाशिने॰ अन्यायाय॰ अनादिनेन॰ अप्रमेयाय॰ अघशत्रवे॰ अमरारिघ्नाय॰ अनी
श्वराय॰ ४॰ अजाय॰ अघोराय॰ अनादिनिधनाय॰ अमरप्रभवे॰ अग्राह्याय॰ अक्रूराय॰ अनुत्तमाय॰ अरूपाय॰ अह्ने न॰ अमोघाधिपतये॰
५॰ अजाय॰ अक्षमाय॰ अमृताय॰ अघोरवीर्याय॰ अव्यंगाय॰ अविघ्नाय॰ अतींद्रियाय॰ अमिततेजसे॰ अमितये॰ अष्टमूर्तये॰ ६॰
अनिलाय॰ अवशाय॰ अणोरणियसे॰ अशोकाय॰ अरविंदाय॰ अधिष्ठानाय॰ अमितनयनाय॰ अरण्यवासिने॰ अप्रमत्ताय॰ अनंत
रूपाय॰ ७॰ अनलाय॰ अनिमिषाय॰ अस्त्ररूपाय॰ अग्रगण्याय॰ अप्रमेयाय॰ अंतकाय॰ अचिंत्याय॰ अपांनिधये॰ अतिसुंदराय॰
अमरप्रियाय॰ ८॰ अष्टसिद्धिप्रदाय॰ अरविंदप्रियाय॰ अरविंदोद्भवाय॰ अनयाय॰ अर्थाय॰ अक्षोभ्याय॰ अर्चिष्मते॰ अनेकमूर्तये॰
अनंतब्रह्मांडपतये॰ अनंतशयनाय॰ ९॰ अमराधिपतये॰ अनाधाराय॰ अनंतनाम्ने॰ अनंतश्रिये॰ अक्षराय॰ अमायाय॰ आश्रम
स्थाय॰ आश्रमातीताय॰ अन्नादाय॰ आत्मयोनये॰ ॥ १००॰ अवनीपतये॰ अवनीधराय॰ अनादिने॰ आदित्याय॰ अमृताय॰ अपव
र्गप्रदाय॰ अव्यक्ताय॰ अनंताय॰ १०८॥ इत्यष्टोत्तरशतनामपूजा ॥ दशांगंगुग्गुलूद्भूतंचंदनागुरुसंयुतम् ॥ सर्वेषामुत्तमंधूपंगृहाणसुरपू

तेनरोनित्यंवासुदेवमनुस्मरन्॥स्थावरेजंगमेसत्त्वेस्थूलेसूक्ष्मेशुभाशुभे॥विष्णुंपश्यतिसर्वत्रयःसविष्णुःस्वयंनरः॥ सर्वंविष्णुमयंज्ञात्वात्रैलोक्यं सचराचरम् ॥ यस्यशांतामतिस्तेनपूजितोगरुडध्वजः॥विष्णुलोकमवाप्नोतिचक्रपाणेःप्रसादतः ॥ विधिर्मासोपवासस्ययथावत्परिकीर्तितः ॥ सुतस्नेहान्मुनिश्रेष्ठसर्वलोकहितायच ॥ कृत्वाविष्णवर्चनंभक्त्यानरोविष्णुपुरींव्रजेत्॥नाभक्तायप्रदातव्यंनदेयंदुष्टचेतसे ॥ इतिश्रीविष्णुरहस्यो क्तंमासोपवासव्रतंसम्पूर्णम् ॥ ॥ अथआषाढशुक्लैकादशीमारभ्यकार्तिकशुक्लैकादशीपर्यंतंधारणापारणाव्रतंलिख्यते ॥ ॥ कृष्णउवाच ॥ शृणुकौंतेयवक्ष्यामिधारणापारणाव्रतम् ॥ बांधवादिवधोत्पन्नदोषघ्नंचसुखप्रदम् ॥ कुलवृद्धिकरंचैवसर्वेंद्रियनियाम कम् ॥ चातुर्मास्येतथाचाद्वौमासिकौंतेयसुव्रतः ॥ पुण्याहंकारयेत्पूर्वमेकादश्यांशुभेदिने ॥ पश्चात्संकल्प्यराजेंद्रतदारभ्यव्रतंचरेत् ॥ आद्वौमासितथाचांतेचातुर्मासेष्वथापिवा ॥ एकस्मिन्धारणंकार्यंपारणंचतथापरे ॥ उपवासोधारणंस्यात्पारणंभोजनंभवेत् ॥ पारण स्यदिनेप्राप्तेमंत्रमष्टाक्षरंजपेत् ॥ अष्टोत्तरशतंदद्यादर्घ्यान्देवायतन्मनाः ॥ समाप्तेमासिराजेंद्रकुर्यादुद्यापनंबुधः ॥ चातुर्मास्यव्रते चाथमासेमासेतुकारयेत् ॥ उपवासदिनेप्राप्तेपुण्याहंकारयेत्पुरा ॥ आचार्यंवरयेत्पश्चादृत्विजस्तुततःपरम् ॥ कृत्वातुप्रतिमांशुद्धां लक्ष्मीनारायणस्यवै ॥ स्थापयेदव्रणेकुंभेपूजयेदुपचारकैः ॥ पंचामृतैस्तथापुष्पैस्तुलसीदलचंपकैः ॥ मालतीकेतकीभिश्चमल्लिकाकुसुमै स्तथा ॥ रात्रौजागरणंकुर्यात्पुराणपठनादिभिः ॥ प्रातःकालेसमायातेब्राह्मणांस्तुनिमंत्रयेत् ॥ मासेमासेपंचदशयुधिष्ठिरशुचिव्र तान् ॥ पश्चात्स्नानादिकंकृत्वादेवपूजांसमाचरेत् ॥ पश्चादग्निंसमाधायहोमंकुर्याद्यथाविधि ॥ निषुसीदेतिमंत्रेणजुहुयाच्चतिलौदनम् ॥

निषसाद धृतव्रतो वरुणः पुस्त्यास्वा॥
साम्राज्याय सुक्रतुः॥

श्ररायिकाणेविकटेगिरिंगच्छसदान्वे। शिरिंविटस्युसत्वेभिस्तेभिष्ठाचातयामसि।।

अरायिकाणेमंत्रेणजुहुयाच्चघृतौदनम् ॥ अष्टाक्षरेणमंत्रेणपायसंजुहुयात्ततः ॥ पूर्णाहुतिंततोहुत्वाहोमशेषंसमापयेत् ॥ ब्राह्मणान्भोजये
त्पश्चादाचार्यंपूजयेत्ततः ॥ एवंकृत्वामहाभागब्रह्महत्यादिपातकैः ॥ मुच्यतेनात्रसंदेहस्तस्मात्कुरुमहाव्रतम् ॥ सुग्रीवस्तुपुराराजन्ह
त्वावालिनमाहवे ॥ रामादिष्टंततःकृत्वाधारणापारणाव्रतम् ॥ विमुक्तःसतदादोषान्नानापातकसंचयात् ॥ नारदेनतथाराजन्पूर्वस्मि
ञ्छूद्रजन्मनि ॥ द्विजानामुपदेशाच्चधारणापारणाकृता ॥ होमादिकंविधायाथतस्यपुण्यप्रभावतः ॥ जितेंद्रियस्ततोजातोब्रह्मलोका
दिकांश्चरन् ॥ तस्मात्सर्वप्रयत्नेनकुर्याद्धारणपारणम् ॥ इंद्रियाणांवशार्थायसर्वपापापनुत्तये ॥ तस्मात्त्वमपिराजेंद्रकुरुष्वव्रतमुत्तमम् ॥
किंदानैस्तपसाकिंवानियमैश्चव्रतैर्यमैः ॥ धारणापारणंकुर्याद्व्रतानामुत्तमंव्रतम् ॥ सर्वयज्ञेषुतीर्थेषुसर्वदानेषुयत्फलम् ॥ तत्फलंसम
वाप्नोतिकृत्वाधारणपारणम् ॥ इदंव्रतंमहापुण्यंतपसामुत्तमंतपः ॥ तस्मात्त्वमपिराजेंद्रकुर्विदंविधिपूर्वकम् ॥ बांधवादिवधाद्दो
षान्मोक्ष्यसेनात्रसंशयः ॥ इतितंसंप्रदिश्याथविष्णुःस्वांचपुरींययौ ॥ वंद्यमानःपौरजनैःसमस्तैःपांडुनंदनैः ॥ युधिष्ठिरोपिराजर्षिश्चकारे
दंमहाव्रतम् ॥ विमुक्तःसर्वपापेभ्योवंशवृद्धिस्ततोभवत् ॥ इतिश्रीभ॰पु॰धारणापारणाव्रतंसमाप्तम् ॥ **अथसंक्रांतिव्रतानिलिख्यंते** ॥
तत्रादौधान्यसंक्रांतिव्रतम् ॥ हेमाद्रौस्कांदे ॥ नंदिकेश्वरउवाच ॥ अथाहंसंप्रवक्ष्यामिधान्यव्रतमनुत्तमम् ॥ यत्कृत्वेहनरोराजन्सर्वान्का
मानवाप्नुयात् ॥ अयनेविषुवेचैवस्नानंकृत्वायथाविधि ॥ व्रतस्यनियमंकुर्याद्ध्यात्वादेवंदिवाकरम् ॥ करिष्यामिव्रतंदेवत्वद्भक्तस्त्वत्परा
यणः ॥ तत्रविघ्नोनमेभूयात्त्वद्देवप्रसादतः ॥ इत्युच्चार्यलिखेत्पद्मंकुंकुमेनाष्टपत्रकम् ॥ भास्करंपूर्वपत्रेषुआग्नेयेचतथारविम् ॥ विवस्वंतं

तथायाम्यैनैर्ऋत्येपूषणंतथा ॥ आदित्यंवारुणेपत्रेवायव्येतपनंतथा ॥ मार्तंडमितिकौबेरऐशान्येभानुमेवच ॥ एवंचक्रमशोभ्यर्च्यवि
श्वात्मामध्यदेशतः[1] ॥ कृतांजलिपुटोभूत्वाअर्घ्यंदद्यात्समंत्रकम् ॥ कालात्मासर्वदेवात्मावेदात्माविश्वतोमुखः ॥ व्याधिमृत्युजराशोकसं
सारभयनाशनः ॥ इत्यर्घ्यमंत्रः ॥ पुष्पैर्धूपैःसमभ्यर्च्यशिरसाप्रणिपत्यच ॥ रविंध्यात्वाततोदद्याद्धान्यप्रस्थंद्विजातये ॥ प्रतिमासंपुन
स्तद्वत्पूज्योदेवःसहस्रपात् ॥ एवंसदाप्रदातव्यंधान्यप्रस्थंद्विजातये ॥ एवंसंवत्सरेपूर्णेकुर्यादुद्यापनक्रियाम् ॥ अर्घ्यपात्रंहिसौवर्णंकारये
न्मंडलंशुभम् ॥ द्विभुजंपूजयेद्भानुंरक्तवस्त्रयुगान्वितम् ॥ धान्यद्रोणेनसहितंतदर्धेनस्वशक्तितः ॥ स्वर्णशृंगींरौप्यखुरींकांस्यदोहांपय
स्विनीम् ॥ रविरूपंद्विजंध्यात्वातस्मैवेदविदेतथा ॥ विद्यापात्रायविप्रायतत्सर्वंविनिवेदयेत् ॥ अग्निष्टोमसहस्राणांफलंप्राप्नोतिमानवः ॥
सप्तजन्मसहस्राणिधनधान्यसमन्वितः ॥ निर्व्याधिर्नीरुजोधीमान्रूपवानभिजायते ॥ इतिश्रीस्कंदपु० धान्यसंक्रांतिव्रतंसं० ॥ ॥ अथ
लवणसंक्रांतिव्रतंतत्रैव ॥ ॥ नंदिकेश्वरउवाच ॥ अथातः संप्रवक्ष्यामिलवणसंक्रांतिमुत्तमाम् ॥ संक्रांतिवासरंप्राप्यस्नानंकृत्वाशुभेजले ॥
वस्त्रालंकारसंवीतोभक्तिभावसमन्वितः ॥ कुंकुमेनलिखेत्पद्ममष्टपत्रंसकर्णिकम् ॥ भास्करंपूजयेद्भक्त्यायथोक्तक्रमयोगतः ॥ तदग्रेलवणं
पात्रंसगुडंस्थापयेत्ततः ॥ पूजितस्त्वंयथाशक्त्याप्रसीदममभास्कर ॥ लवणंसगुडंपात्रंब्राह्मणायनिवेदयेत् ॥ एवंसंवत्सरेपूर्णेभानुंकुर्याद्धि
रण्मयम् ॥ रक्तवस्त्रयुगच्छन्नंरक्तचंदनचार्चितम् ॥ कमलंलवणंपात्रंधेन्वासार्धंद्विजातये ॥ प्रदद्याद्भानुमुद्दिश्यविश्वात्माप्रीयतामिति ॥

१ अर्च्यइतिशेषः ।

एवंकृत्वातुयत्पुण्यंप्राप्यतेभुविमानवैः ॥ तत्केनगदितुंशक्यंवर्षकोटिशतैरपि ॥ लवणाचलदानस्यफलंप्राप्नोतिमानवः ॥ सर्वकामसमृद्धात्माविमानवरमध्यगः ॥ सूर्यलोकेवसेत्कल्पंपूज्यमानःसुरासुरैः ॥ इतिस्कंध० पु० लवणसंक्रांतिव्रतम् ॥ अथभोगसंक्रांतिव्रतंतत्रैव ॥ नंदिकेश्वरउवाच ॥ ॥ वक्ष्येहंभोगसंक्रांतिंसर्वलोकविवर्धनीम् ॥ संक्रांतिदिवसंप्राप्ययोषितस्तुसमाह्वयेत् ॥ कुंकुमंकज्जलंचैवसिंदूरंकुसुमानिच ॥ सुगंधीनिचद्रव्याणितांबूलंशशिसंयुतम् ॥ तंडुलान्फलसंयुक्तांस्ताभ्योदद्याद्विचक्षणः ॥ अन्यान्यपिहिवस्तूनिभोगसाधनकानिच ॥ दद्यात्प्रहृष्टमनसामिथुनेभ्योयथाविधि ॥ भोजयित्वायथाशक्त्यावस्त्रयुग्मंप्रदापयेत ॥ एवंसंवत्सरस्यांतेरविंसंपूज्यपूर्ववत् ॥ धेनुंसदक्षिणांदद्यात्सपत्नीकाद्विजायच ॥ एवंयःकुरुतेभक्त्याभोगसंक्रांतिमादरात् ॥ स्यात्सुखीसर्वमर्त्येषुभोगीजन्मनिजन्मनि ॥ इतिभोगसंक्रांतिव्रतम् ॥ अथरूपसंक्रांतिव्रतंतत्रैव ॥ नंदिकेश्वरउवाच ॥ अथान्यदपितेवच्मिरूपसंक्रांतिमुत्तमाम् ॥ संक्रांतिवासरेस्नानंकुर्यात्तैलेनवैसुधीः ॥ हेमपात्रे[1]घृतयुतेहिरण्येनसमन्विते ॥ स्वरूपंवीक्ष्यतत्पात्रंब्राह्मणायनिवेदयेत् ॥ एकभक्तंततःकृत्वापूजयित्वारविंव्रती ॥ व्रतांतेकांचनंदद्याद्घृतधेनुसमन्वितम् ॥ अश्वमेधसहस्राणांफलमाप्नोतिमानवः ॥ रूपयौवनसंपत्त्याआयुरारोग्यसंपदा ॥ लक्ष्मींचविपुलान्भोगाँल्लभतेनात्रसंशयः ॥ सर्वपापविनिर्मुक्तःस्वर्गलोकंचगच्छति ॥ इतिरूपसंक्रांतिः ॥ ॥ अथतेजःसंक्रांतिव्रतंतत्रैव ॥ नंदिकेश्वरउवाच ॥ अथान्यांसंप्रवक्ष्यामितेजःसंक्रांतिमुत्तमाम् ॥ संक्रांतिवासरंप्राप्यस्नानंकृत्वाविचक्षणः ॥

१ पात्रेघृतंकृत्वेतिपाठः ।

 

शालितंडुलसंयुक्तंकरकंकारयेच्छुभम् ॥ दीपंसंस्थाप्यतन्मध्येज्वलितंतुस्वतेजसा ॥ तन्मुखेमोदकंस्थाप्यब्राह्मणायनिवेदयेत् ॥ रविं संपूज्ययत्नेनअर्घ्यंदद्याद्विचक्षणः ॥ एकभक्तंचकर्तव्यंयावत्संवत्सरंभवेत् ॥ संवत्सरेतुसंपूर्णेकुर्यादुद्यापनंबुधः ॥ शोभनंदीपकंकार्यंसुवर्णेनतु नारद ॥ ताम्रस्यकरकंकुर्याद्दीपंन्यस्यतथोपरि ॥ कपिलासहदातव्याकरकेणद्विजातये ॥ सुवर्णकोटिदानस्यफलंवैप्राप्यतेनघ ॥ तेजसाऽऽदित्यसंकाशोवायोर्बलमवाप्नुयात् ॥ इतितेजःसंक्रांतिः ॥ अथसौभाग्यसंक्रांतिव्रतंतत्रैव ॥ नंदिकेश्वरउवाच ॥ अथान्यांसंप्रवक्ष्यामिसौभाग्यसंक्रांतिमुत्तमाम् ॥ शृणुनारदयत्नेनधनैश्वर्यप्रदायिनीम् ॥ संक्रांतिवासरेप्रातेस्नात्वाचैवशुचिव्रतः ॥ पूर्ववद्धानुमभ्यर्च्यतथैवचसुवासिनीम् ॥ सौभाग्याष्टकसंयुक्तंवस्त्रयुग्मंसयोषिते ॥ विप्रायवेदविदुषेभक्त्यातत्प्रतिपादयेत् ॥ एवंसंवत्सरेपूर्णेकुर्याद्ब्राह्मणपूजनम् ॥ पर्वतं लावणंकृत्वायथाविभवसारतः ॥ कांचनंकमलंकृत्वाभास्करंचैवकारयेत् ॥ गंधपुष्पादिनापूज्यविप्रायप्रतिपादयेत् ॥ ऐक्षवंतृणराजंचनिष्पावाश्चसुशोभनाः ॥ धान्यकंजीरकंचैवकौसुंभंकुंकुमंतथा ॥ लवणंचाष्टमंतद्वत्सौभाग्याष्टकमुच्यते ॥ पुष्करेचकुरुक्षेत्रेगोसहस्रफलंलभेत् ॥ साप्रियामर्त्यलोकेषुयाकरोतिव्रतंत्विदम् ॥ शंकरस्ययथागौरीविष्णोर्लक्ष्मीर्यथादिवि ॥ मर्त्यलोकेतथासापिप्रियेणसहमोदते ॥ इतिसौभाग्यसंक्रांतिः ॥ अथतांबूलसंक्रांतिव्रतंतत्रैव ॥ नंदिकेश्वरउवाच ॥ अथान्यांसंप्रवक्ष्यामितांबूलाख्यामनुत्तमाम् ॥ विधानंपूर्ववत्कुर्याद्धान्यसंक्रांतिवच्चतत् ॥ तांबूलंचंदनाद्यंचदद्याच्चैवद्विजन्मने ॥ एवंसंवत्सरंपूर्णंरात्रौरात्रौततःपरम् ॥ तांबूलंभक्षयेद्विप्रैःकारयेच्चैवनांतरम् ॥ वत्सरांतेतुकमलंकृत्वाचैवतुकांचनम् ॥ पर्णकोशंप्रकुर्वीततथापूगफलालयम् ॥ चूर्णभांडंप्रकुर्वीतपूगप्रस्फोटनंतथा ॥ मुखवासादिचूर्णानां

भांडानिविविधानिच ॥ द्विजदांपत्यमावाह्यसर्वोपस्करसंयुतैः ॥ द्रव्यैस्तुपूजयेद्भक्त्याषड्रसैर्भोजयेद्द्विजान् ॥ उपकल्पितंतुयत्किंचिद्ब्राह्म णायनिवेदयेत् ॥ एवंकरोतियानारीतांबूलाख्यंव्रतोत्तमम् ॥ भर्तापुत्रैश्चपौत्रैश्चमोदतेस्वगृहेसदा ॥ इतितांबूलसंक्रांतिः ॥ अथमनोरथसं क्रांतिव्रतंतत्रैव ॥ नंदिकेश्वरउवाच ॥ अतःपरंप्रवक्ष्यामिसंक्रांतिंचमनोरथाम् ॥ गुडेनपूर्णंकुंभंचसवस्त्रंचस्वशक्तितः ॥ संक्रांतिवासरेदद्या द्ब्राह्मणायकुटुंबिने ॥ शेषंधान्यसंक्रांतिवत् ॥ एवंसंवत्सरेपूर्णेकुर्यादुद्यापनंशुभम् ॥ गुडस्यपर्वतंकृत्वावस्त्ररत्नैश्चभूषितम् ॥ अयनेचोत्तरे दद्याद्वित्तशाठ्यंनकारयेत् ॥ यंयंकामयतेकामंतंतंप्राप्नोतिपुष्कलम् ॥ सर्वपापविनिर्मुक्तःसूर्यलोकेमहीयते ॥ इतिमनोरथसंक्रांतिव्रतम् ॥ अथाशोकसंक्रांतिव्रतंतत्रैव ॥ नंदिकेश्वरउवाच ॥ अतःपरंप्रवक्ष्याम्यशोकसंक्रांतिमुत्तमाम् ॥ अयनेविषुवेचैवव्यतीपातोभवेद्यदि ॥ एकभु क्तंनरःकुर्यात्तिलैःस्नानंतुकारयेत् ॥ कांचनंभास्करंकृत्वायथाविभवशक्तितः ॥ स्नापयेत्पंचगव्येनगंधपुष्पैस्तुपूजयेत् ॥ संछाद्यरक्त वस्त्राभ्यांताम्रपात्रेनिधायच ॥ भास्करायनमः पादौपू॰ रवयेन॰ जंघेपू॰ आदित्याय॰ जानुनीपू॰ दिवाकराय॰ ऊरूपू॰ अर्यम्णे॰ कटी पू॰ भानवे॰ उदरंपू॰ पूष्णे॰ बाहूपू॰ मित्राय॰ स्तनौपू॰ विवस्वते॰ कंठंपू॰ सहस्रांशवे॰ मुखंपू॰ तमोहंत्रे॰ नेत्रेपू॰ तेजोराशये॰ शिरः पू॰ अरुणसारथये॰ सर्वांगंपू॰ ॥ अर्घ्यंचपूर्ववत्कार्यंब्राह्मणायनिवेदयेत् ॥ एवंसंवत्सरेपूर्णेकांचनेनादिवाकरम् ॥ संपूज्यपद्मकुसु

१ इयमंगपूजाश्लोकरूपेणकथिता सौकर्यायविभज्यदर्शिता ।

मैर्यथाविभवसारतः ॥ धूपैर्दीपैश्चनैवेद्यैरक्तवस्त्रेणवेष्टितम् ॥ ततोहोमंप्रकुर्वीतरविमंत्रेणनारद ॥ द्वादशकपिलादेयावस्त्रालंकारसंयु
ताः ॥ अशक्तःकपिलामेकांवित्तशाठ्यविवर्जितः ॥ आयुरारोग्यमैश्वर्य[1]भार्यापुत्रसमन्वितः ॥ इतिअशोकसंक्रांतिः ॥ अथआयुःसंक्रांति
स्तत्रैव ॥ नंदिकेश्वरउवाच ॥ अथान्यांचप्रवक्ष्यामिआयुःसंक्रांतिमुत्तमाम् ॥ संक्रांतिदिवसेस्नात्वापूजयेच्चदिवाकरम् ॥ कांस्येक्षीरंघृतंदद्या
त्सहिरण्यंस्वशक्तितः ॥ मंत्रश्चैवपथग्दानेपूजासै[2]वप्रकीर्तिता ॥ सुक्षीरसुरभीजातपीयूषसमसर्पियुक् ॥ आयुरारोग्यमैश्वर्यमतो
देहिद्विजार्पितम् ॥ अनेनविधिनावर्षंसर्वंदद्यादतंद्रितः ॥ उद्यापनादिकंसर्वंधान्यसंक्रांतिवद्भवेत् ॥ एवंकृतेतुयत्पुण्यं
शक्यंनेदंमयोदितुम् ॥ निर्व्याधिश्चैवदीर्घायुस्तेजस्वीकीर्तिमांस्तथा ॥ अपमृत्युभयंनास्तिजीवेच्चशरदांशतम् ॥ ॥ अथधनसं
क्रांतिस्तत्रैव ॥ ॥ नंदिकेश्वरउवाच ॥ धनसक्रांतिमाहात्म्यंश्रृणुस्कंदविधानतः ॥ यत्कृत्वासर्वपापेभ्योमुच्यतेनात्रसंशयः ॥
संक्रांतिदिवसंप्राप्यशुचिर्भूत्वासमाहितः ॥ कलशंनिर्व्रणंगृह्यवारिपर्णंनिधापयेत् ॥ सुवर्णयुक्तंतंकृत्वाप्रतिमासंतुदापयेत् ॥
विधिनानेनवर्षांतेप्रीयतांमेदिवाकरः ॥ पजाविधानंसर्वत्रधान्यसंक्रांतिवद्भवेत् ॥ सौवर्णंकमलंकृत्वास्मर्यंचोपरिविन्यसेत् ॥ हस्ते
सुवर्णघटितंपंकजंविनिवेशयेत् ॥ गोदानंतत्रदातव्यमेवंसंपर्णतांव्रजेत् ॥ जन्मनांशतसाहस्रंधनयुक्तोभवेन्नरः ॥ आयुरारोग्यसं
पन्नःसूर्यलोकेमहीयते ॥ ॥ इतिधनसंक्रांतिः ॥ ॥ अथसर्वसंक्रांत्युद्यापनंलिख्यते ॥ हेमाद्रौमात्स्ये ॥ नंदिकेश्वरउवाच ॥ अथा

१ प्राप्नोतीतिशेषः ।   २ पूर्वोक्तैव ।

न्यदपिवक्ष्यामिसंक्रांत्युद्यापनंमुने ॥ विषुवेचायनेचैवसंक्रांतिव्रतमाचरेत् ॥ पूर्वेद्युरेकभक्तेनदंतधावनपूर्वकम् ॥ संक्रांतिवासरेप्राप्ते
तिलैःस्नानंसमाचरेत् ॥ रविसंक्रमणेभूमौचंदनेनाष्टपत्रकम् ॥ पद्मंसकर्णिकंकुर्यात्तास्मिन्नावाहयेद्रविम् ॥ कर्णिकायांन्यसेद्देवमादित्यंपूर्व
तस्ततः ॥ नमःसोमार्चिषेयाम्येनमोऋङ्मण्डलायच ॥ नमःसवित्रेनैर्ऋत्येवारुणेतपनंबुधः ॥ वायव्येमित्रनामानंविन्यसेत्तुयथाक्रमम् ॥
मार्तंडमुत्तरेविष्णुमीशान्येपूजयेत्क्रमात् ॥ द्विजायसोदकंकुंभंतिलपात्रंहिरण्मयम् ॥ कमलंतुयथाशक्त्याकारयित्वानिवेदयेत् ॥ चंदनो
दकपुष्पैश्चदेवायार्घ्यंनिवेदयेत् ॥ विश्वायविश्वरूपायविश्वधाम्नेस्वयंभुवे ॥ नमोनंतनमोधात्रेऋक्सामयजुषांपते ॥ अनेनविधिनासर्वंमा
सिमासिसमाचरेत् ॥ वत्सरांतेतथाकुर्यात्सूर्यंद्वादशधानरः ॥ संवत्सरांतेघृतपायसेनसंतर्प्यंवह्निंद्विजपुंगवान्वै ॥ कुंभान्पुनर्द्वादशधेनुयुक्तान्स
द्रत्नहैरण्मयपद्मगर्भान् ॥ पयस्विनीःशीलवतीश्चदद्यात्ताम्राःस्वरूपेणसुवस्त्रयुक्ताः ॥ गावोथवासप्तचकांस्यदोहामाल्यांबराढ्याश्चतुरोप्यश
क्तः ॥ तत्राप्यशक्तःकपिलामथैकांनिवेदयेद्ब्राह्मणपुंगवाय ॥ हैमींचदद्यात्पृथिवीमशेषांकृत्वाथरौप्यामथवासुताम्रीम् ॥ पैष्टीमशक्तोथतिलै
र्विधायसौवर्णसूर्येणसमंप्रदद्यात् ॥ नवित्तशाठ्यंपुरुषोत्रकुर्यात्कुर्वन्नधोयातिनसंशयोत्र ॥ यावन्महेंद्रप्रमुखानगेंद्राःपृथ्वीचसप्ताब्धियुतेह
तिष्ठेत् ॥ तावत्सगंधर्वगणैरशेषैःसंपूज्यतेनारदनाकपृष्ठे ॥ ततस्तुकर्मक्षयमाप्यसोथद्वीपाधिपःस्यात्कुलशीलयुक्तः ॥ सुष्टेर्मुखेतुंगवपुः
सभार्यःप्रभूतपुत्रोरिपुवंदितांघ्रिः ॥ इतिसर्वसंक्रांत्युद्यापनम ॥ ॥ अथधनुःसंक्रमणेविशेषः ॥ रवौधनुषिसंप्राप्तेस्नानंकृत्वारुणोदये ॥ सर्वं

१ आग्नेयेइतिशेषः । २ सर्वमितिक्वचित्पाठः ।

नित्यंचसंपाद्य[1]मुहूर्तंनगतोरविः ॥ कृसरान्नेनविप्रान्वैभोजयेद्घृतपायसैः ॥ दक्षिणाभिर्श्चसंतोष्यस्वयंभुंजीतवाग्यतः ॥ एवंनिरं[2]तरंकुर्याद्दशक्तो भानुवासरे ॥ इहभुक्त्वातुभोगान्वैसूर्यलोकंसगच्छति ॥ इतिधनुर्मासेविशेषः ॥ ॥ अथरवेर्घृतस्नापनंहेमाद्रौभविष्ये ॥ उत्तरेत्व यनेप्राप्तेघृतप्रस्थेनयोरविम् ॥ स्नापयित्वाब्राह्मणेभ्योयःप्रयच्छतिमानवः ॥ घृतधेनुंतथादद्याद्ब्राह्मणायकुटुंबिने ॥ सर्वपापविनिर्मुक्तः सूर्यलोकेचिरंवसेत् ॥ ततोभवतिभूपालःप्रजानंदविवर्धनः ॥ इतिउदगयनेघृतस्नापनम् ॥ अथमकरसंक्रांतौशिवरहस्येघृतकंबलदान महिमा ॥ ॥ माघेमासिमहादेवेयःकुर्याद्घृतकंबलम् ॥ सभुक्त्वासकलान्भोगानंतेमोक्षंचविंदति ॥ नराभूपतयोजाताघृतकंबल दानतः ॥ जातिस्मराश्चतेजातामुक्ताश्चांतेशिवार्चकाः ॥ पुरासुनागसंविप्रंजाबालिंश्रुतिपारगम् ॥ पप्रच्छशूलकर्णाख्योधर्मंदारिद्र्यनाश कम् ॥ सुनागउवाच ॥ असितायाःसितायावाधेनोर्घृतमनुत्तमम् ॥ संपादनीयंयत्नेनघनीभूतंचशोभनम् ॥ तद्घृतंतुलयोत्तीर्णं प्रस्थसार्धशतत्रयम् ॥ महाकंबलमेतद्धिघृतस्यपरिकीर्तितम् ॥ तदर्धंवातदर्धंवासायंनेयंशिवालये ॥ घृतेनान्येनदेवेशमभिषिच्य महेश्वरम् ॥ ततोघृतंघनीभूतमर्पयेच्छिवमस्तके ॥ ततस्तिलैःसर्षपैश्चबिल्वपत्रैश्चकोमलैः ॥ हेमपद्मैश्चदेवेशःपूजनीयोमहेश्वरः ॥ धूपदीपादिकंदेयंमहानैवेद्यमादरात् ॥ ततोनीराजनंदत्त्वादेयःपुष्पांजलिस्ततः ॥ प्रदक्षिणानमस्कारान्कृत्वाचतदनंतरम् ॥ शैवंपंचा क्षरंजप्त्वाशिवायैतन्निवेदयेत् ॥ ततोजागरणंकुर्याच्छिवस्मरणपूर्वकम् ॥ ततःप्रातःसमुत्थायकृत्वास्नानादिकंपुनः ॥ पूजनीयोमहादेवो

---

१ यावन्मुहूर्तंरविर्नगतस्तावदित्यर्थः । २ मासपर्यंतमित्यर्थः ।

घृतसेचनपूर्वकम् ॥ भोजनीयास्तथाशैवाभक्ष्यैर्भोज्यैश्चयत्नतः ॥ ततःस्वयंचभोक्तव्यंबंधुभिःसहसादरम् ॥ अनेनतवदारिद्र्यं नाशमेष्यतिसर्वथा ॥ भोगांश्चविपुलान्भुक्त्वाशिवलोकंगमिष्यासि ॥ इतिमकरसंक्रांतौघृतकंबलदानंस० ॥ अथमकरसंक्रमणेदधिमं थनदानम् ॥ तद्विधिः ॥ मासपक्षाद्युल्लिख्य ममेहजन्मनिजन्मांतरेचअखंडितसौभाग्यपुत्रपौत्रधनधान्याभिवृद्ध्यर्थंश्रीसवितृसूर्यनारायण स्वरूपिणेब्राह्मणायदधिमंथनदानंकरिष्ये इतिसंकल्प्यातिलोद्वर्तनपूर्वकंस्नात्वाशुचिवस्त्रंपरिधायभांडेयशोदाकृष्णयोःसुवर्णप्रतिमांसंपूज्यप्रा र्थयेत् ॥ यशोदेत्वंमहाभागेसुतंदेहिमनोरमम् ॥ पूजितासिमयादेविदधिमंथनभाजने ॥ श्रीकृष्णपरमानंदसंसारार्णवतारक ॥ पुत्रं देहिमनोज्ञंचऋणत्रयविमोक्षणम् ॥ दानमंत्रः ॥ गृहाणत्वंद्विजश्रेष्ठदधिमंथनभाजनम् ॥ नवनीतेनसहितंयशोदासहितंहरिम् ॥ प्रसादः क्रियतांमह्यंसूर्यरूपनमोस्तुते ॥ इदंचब्रह्मांडपुराणेरंगदानमाहात्म्येकृपींप्रतीतिहासपूर्वकंदुर्वाससोपदिष्टम् ॥ तथाहि ॥ कृप्युवाच ॥ पीडिताहंदरिद्रेणअपुत्राचतपोधन ॥ तपसोभंगभीत्याचयत्नंनाचरतेपतिः ॥ ममसर्वस्वमेकागौःस्वल्पदोहावयोमहत् ॥ जीवनंममत क्रेणधर्मवार्तागरीयसी ॥ केनोपायेनभोब्रह्मंस्तन्मेब्रूहिसुखंमम ॥ दुर्वासाउवाच ॥ दानंदेहिचसुभगेयेनपूर्णमनोरथा ॥ नंदजायासुतंले भेब्रह्माद्यैःपूजितंमहत् ॥ श्रीकृष्णाख्यंपरंतत्त्वंयोगिभिश्चदुरासदम् ॥ दधिमंथनदानंचपुत्रप्राप्तिकरंपरम् ॥ नान्यदस्तिदरिद्राणां दानादस्मात्कथंचन ॥ तस्मात्त्वयापिदेयंमेक्षुधितायतपस्विने ॥ भविष्यतितवसुतश्चिरंजीवीशुचिव्रतः ॥ विरच्यस्वस्तिकंपूर्वमनुलिप्य महतिलम् ॥ द्रोणमानंधान्यपुंजंगोधूमानांविशेषतः ॥ विधायपूरितंतत्रदध्नाशुभ्रेणभक्तितः ॥ दध्यमत्रकमासाद्यकृष्णलीलांमुहुर्मुहुः ॥ स्म

रंतीमंथयेत्तावद्यावत्सारोदयोभवेत् ॥ संसिद्धमथनेतस्मिन्सौवर्णींप्रतिमांततः ॥ स्थापयित्वायशोदायाःकृष्णस्यचसुशोनाम् ॥ संकं
ल्पादिविधायाशुसंपूज्यचयथाविधि ॥ हरिद्राकुंकुमाद्यैश्चदधिभांडंविलेपयेत् ॥ रक्तसूत्रेणसंवीतंरक्तवस्त्रेणवेष्टयेत् ॥ माल्यैरन्यैश्चसं
योज्यदेवीमावाहयेत्तथा ॥ सूर्यंचावाहयेदंडेदीपानष्टौप्रदीपयेत् ॥ लड्डुकान्पृथुकाँल्लाजानिक्षुखंडान्निवेतथा ॥ नानाविधानिखाद्यानि
समंतात्स्थापयेत्ततः ॥ क्षौमंवासःपृथुकटितटेबिभ्रतीसूत्रनद्धंपुत्रस्नेहस्नुतकुचयुगंजातकंपंचसुभ्रूः ॥ रज्ज्वाकर्षश्रमभुजचलत्कंकणौ
कुंडलेचस्विन्नंवक्त्रंकबरविगलन्मालतीनिर्ममंथ ॥ परिधीवस्त्रमासाद्यययाचेजननींहरिः ॥ गृहीत्वादधिमंथानंन्यषेधत्प्रीतिमावहन् ॥
नानाखाद्यैर्वारितोपिनचसुंचतिमाधवः ॥ अंकमारुह्यतत्स्तन्यंपिबन्मुखंव्यलोकयत् ॥ एवंयशोदांकृष्णंचध्यायंतीभक्तितत्परा ॥ विचि
त्रैःपट्टकूलैश्चगंधमाल्यैर्विशेषतः ॥ पूजयित्वाप्रार्थयीतयशोदांपुत्रसंयुताम् ॥ यशोदेत्वंमहाभागेसुतंदेहिमनोरमम् ॥ पूजितासिमयादेविदधिमं
थनभाजने ॥ श्रीकृष्णपरमानंदसंसारार्णवतारक ॥ पुत्रंदेहिमनोज्ञंमेऋणत्रयविमोक्षणम् ॥ ब्राह्मणंवेदवेत्तारमुपवेश्यसुखासने ॥ गंधमाल्यैश्चसं
पूज्यदानंतस्मैनिवेदयेत् ॥ गृहाणत्वंद्विजश्रेष्ठदधिमंथनभाजनम् ॥ नवनीतेनसहितंयशोदासहितंहरिम् ॥ प्रसादःक्रियतांमह्यंसूर्यरूपनमो
स्तुते ॥ कृष्णप्रीतिकरंह्येतद्धनधान्यसमृद्धिदम् ॥ दुर्वाससोपदिष्टासाद्रोणभार्यासुलोचना ॥ मकरस्थेयदासूर्येतिलोद्वर्तनपूर्वकम् ॥ स्नात्वाचजा
ह्नवीतोयेसंप्रार्थ्यमुनिपुंगवम् ॥ पूजयित्वातुतस्मैसाअददद्दधिमंथनम् ॥ अश्वत्थामानंचसुतंदधिमंथनदानतः ॥ कृपीलेभेसुयशसंऋणत्रयविमो
क्षणम् ॥ मुक्तादारिद्र्यचदुःखात्साबुभुजेभोगमुत्तमम् ॥ एवंपूर्वंकृपीकृत्वाआनंदंसमपद्यत ॥ एवंयाकुरुतेनारीवित्तशाठ्यविवर्जिता ॥ सर्वान्कामान

वाप्नोतिसूर्यलोकेमहीयते ॥ इतिश्रीब्रह्मांडपु० मकरसंक्रांतौदधिमथनदानंसमाप्तम् ॥ अथतांबूलदानव्रतंतदुद्यापनंच ॥ युधि
ष्ठिरउवाच ॥ तांबूलदानमाहात्म्यंकथयस्वममप्रभो ॥ उद्यापनविधिंतस्यसर्वकामार्थसिद्धये ॥ श्रीकृष्णउवाच ॥ सर्वेषामेवदानानांतांबूलंचो
त्तमंस्मृतम् ॥ आनंदोदीर्घमायुष्यंसौमनस्यंचपुष्टितः ॥ सौभाग्यंचधनादिभ्योविद्यालाभस्तथैवच ॥ एतत्तुपंचकंराजन्तांबूलाल्लभ्यतेनरैः ॥
द्वात्रिंशत्पत्रकैर्युक्तंपूगीफलसमन्वितम् ॥ एलालवंगकर्पूरैर्युक्तंतांबूलमुच्यते ॥ यथालाभंभवेद्वापिदेयंद्विजवरायच ॥ द्विजाभावेसुवासि
न्यैतदभावेकुमारिकाम्[1] ॥ उद्यापनंप्रकर्तव्यंयथाविभवसारतः ॥ शुभेह्निमासेकर्तव्यमृक्षेवैत्राहिकेततः ॥ पंचसप्तचसद्विप्रान्सपत्नीकान्प्र
पूजयेत् ॥ पूर्वरात्रौचसंपूज्यलक्ष्मीनारायणावुभौ ॥ उमामहेश्वरौपूज्यौसावित्रींब्रह्मणासह ॥ रतिंचपंचबाणंचपूजयेच्चयथाविधि ॥ ऋद्धिं
सिद्धिंविघ्नराजंलोकपालांश्चपूजयेत् ॥ तांबूलोपस्करांस्तत्रदेवतोत्तरतोन्यसेत् ॥ पुरुषोत्तमाय० शार्ङ्गपाणये० गरुडध्वजाय० अनन्ताय०
यज्ञपुरुषाय० पुण्डरीकाक्षाय० नित्याय० वेदगर्भाय० गोवर्धनाय० सुब्रह्मण्याय० शौरयेन० ईश्वराय० एतानिद्वादशनामानिपूजने
हवनेतथा ॥ घृतंवापायसंवापिपंचामृततिलौदनम् ॥ तत्तन्मंत्रैश्चहोतव्यमष्टाविंशतिसंख्यया ॥ पर्णस्थापनपात्रंचचूर्णपात्रंतथैवच ॥
स्वर्णरौप्यमयंवापिपैत्तलंसीससंभवम् ॥ सर्वशोभासमायुक्तालोहजापूगभाजिका ॥ तेषांपूजाप्रकर्तव्यागंधपुष्पादिभिस्तथा ॥ पूर्णाहुतिं
ततःकुर्याद्ब्राह्मणान्भोजयेत्ततः ॥ तांबूलंसुष्ठुयोदद्याद्ब्राह्मणेभ्योतिभक्तितः ॥ मेधावीसुभगःप्राज्ञोदर्शनीयश्चजायते ॥ फलेनतृप्यते

१ कुमार्यैइत्यर्थः । २ द्वादशेत्यर्थः ।

ब्रह्मापत्रेणभगवान्हरिः ॥ चूर्णमीश्वरतृप्त्यर्थंखदिरःकामतृप्तये ॥ कर्पूरैलालवंगादिजातीपत्रफलैस्तथा ॥ इंद्राद्यालोकपालाश्चसंतुष्टाश्चभ
वंतिहि ॥ वारिदःसुखमाप्नोतिराज्यंप्राप्नोतिचान्नदः ॥ दीपदश्चक्षुराप्नोतित्रयंतांबूलदानतः ॥ एवंकृतेविधानेनसर्वान्कामानवाप्नुयात् ॥
इतिवायुपु० तांबूलदानव्रतंतदुद्यापनंच ॥ अथमौनव्रतंतदुद्यापनंच ॥ ॥ नारदउवाच ॥ ब्रह्मन्ब्रूहिममत्वंवैमौनव्रतमनुत्त
मम् ॥ फलंकिमस्यदानंवाकथमुद्यापनंभवेत् ॥ब्रह्मोवाच॥ शृणुनारदयत्नेनसावधानेनचतसो ॥ चातुर्मास्येव्रतंकुर्यान्मौनाख्यंमुनिसत्तम ॥
यस्याचरणमात्रेणगम्यतेविष्णुमंदिरम् ॥ विधिंतस्यप्रवक्ष्यामिशृणुनारदमन्मुखात् ॥ व्रतमध्येव्रतस्यान्तेव्रतादौवायथाविधि ॥ उद्याप
नंप्रकुर्वीतव्रतसंपूर्तिहेतवे ॥ स्नात्वानित्यविधिंकृत्वाकुर्यात्संकल्पमादृतः ॥ सर्वतोभद्रमालिख्यतत्रविष्णुंप्रपूजयेत् ॥ लक्ष्म्यायुतंतुदेवेशंब्र
ह्माद्यादेवतास्तथा ॥ द्वारदेशेतुसंपज्यौपुण्यशीलसुशीलकौ ॥ जयंचविजयंचैवगदादीन्यायुधानिच ॥ मंडपंतोरणैर्युक्तंपट्टवस्त्रेणभूषितम् ॥
सुवर्णप्रतिमांकृत्वा घंटांगरुडलांछिताम् ॥ उपचारैःषोडशभिरर्चयित्वारमापतिम् ॥ रात्रौजागरणंकुर्याद्गीतवाद्यादिमंगलैः ॥ घृतेनाष्टोत्त
रशतंपावकेहवनंचरेत्॥अतोदेवेतिमंत्रेणब्राह्मणान्भोजयेत्ततः॥पीठदानंततःकुर्याद्घंटादानंतथैवच ॥ घंटादानस्यमाहात्म्यंवक्तुंकेनहिशक्यते ॥
दीपदानंततःकुर्याद्व्रतसंपूर्तिहेतवे ॥ इदंव्रतंमयापूर्वंकृतसृष्ट्युत्पत्तिहेतवे ॥ तेनव्रतप्रभावेणसृष्ट्युत्पत्तिर्मयाकृता ॥ कर्तव्यंतुप्रयत्नेनसर्वकामार्थ
सिद्धये ॥यइदंकुरुतेवत्ससससाक्षान्मामकीतनुः॥इतिश्री ब्र०पु०ब्रह्मनारदसंवादेमौनव्रतंतदुद्यापनंचसंपूर्णम् ॥ अथप्रपादानविधानम् ॥
युधिष्ठिरउवाच ॥ कथंकृष्णतरंत्यत्रसंसारगह्वरान्नराः ॥ स्वल्पेनैवतुकालेनतथादानेनमेवद ॥ कृष्णउवाच ॥ विधानमेकमतुलंसामान्यं

नरसेवितम् ॥ प्रपादानस्यराजेंद्रकथ्यमानंशृणुष्वतत् ॥ यस्मिन्पथिजलंनास्तिनास्तिग्रामःसमीपगः ॥ प्रपातत्रप्रकर्तव्यासर्वकामेप्सुभिर्न
रैः ॥ माघमासेऽसितेपक्षेशिवरात्रौविशेषतः ॥ कृत्वातुमंडपंरम्यंचतुर्द्वारंसुशोभितम् ॥ छायाशीतमयीकार्याद्दढैःस्तंभैर्विशेषतः ॥ एकव
क्राद्विवक्रावापूर्वोत्तरमुखाशुभा ॥ मार्गाणांयत्रबाहुल्यंतत्रकार्याविचक्षणैः ॥ दृढांस्ताम्रमयान्रम्यान्मृन्मयान्वासमाहितः ॥ प्रावृडायातियाव
द्वैजलैःकुंभान्प्रपूरयेत् ॥ यवागूंतक्रसंयुक्तांव्यंजनैस्तुसमन्विताम् ॥ अन्यैश्चबहुभिर्द्रव्यैःशर्करापानकैर्युताम् ॥ तक्रंलवणसंयुक्तंतांबूलंचय
थाविधि ॥ प्रपायांस्थापयेच्छक्त्याजलंवाकेवलंशुभम् ॥ ब्राह्मणार्थंपृथक्पात्रंब्रह्मचिह्नेनलक्षितम् ॥ स्वस्तिवाचनपूर्वंतुसर्वमेतत्प्र
कल्पयेत् ॥ एवंविधाप्रपाप्रोक्ताविद्वद्भिर्धर्मकोविदैः ॥ शिशूनांजननीयद्वत्क्षुत्तृडाहरणेक्षमा ॥ सर्वेषामपिवर्णानांप्रपावैपोषणेक्षमा ॥ नंदंतिपि
तरस्तस्यतुष्यंतिकुलदेवताः ॥ स्तुवंतिमनुजास्तंतुयेनाध्वानिकृताप्रपा ॥ क्रतुकोटिशतैर्यत्तुतत्पुण्यंलभतेनरः ॥ उद्यापनविधिंकुर्यात्प्र
पादानमनुत्तमम् ॥ तस्याःसर्वाणिपात्राणिब्राह्मणायनिवेदयेत् ॥ भोजयेच्चयथाशक्त्याब्राह्मणांस्तोषयेत्ततः ॥ प्रपामंदिरदानेनकृतकृत्यो
भवेन्नरः ॥ दुर्भिक्षेग्रासमात्रान्नंग्रीष्मेबिंदुसमंजलम् ॥ तत्तुल्यंक्रतुलक्षेणद्वयमेतत्ततोऽधिकम् ॥ एवंविधाप्रपाप्रोक्तामुनिभिस्तत्त्वदर्शिभिः ॥
॥ इतिश्रीभ० पु० प्रपादानंसोद्यापनंसं० ॥ ॥ अथलक्षपद्मविधिः ॥ ब्रूहिकृष्णव्रतंश्रेष्ठंमु
राजन्वरालघ्वीवापिसर्वकामाविवर्धिनी ॥ श्रीकृष्णउवाच ॥ शृणुराजन्प्रवक्ष्यामिव्रतानामाधिकंव्रतम् ॥ सर्वदुःखहरंस्त्रीणांस
क्तिदंदुःखनाशनम् ॥ पुत्रपौत्रप्रदंचैवकृपयामधुसूदन ॥ तंडुलैःपूजयेच्छ्वेतैःसूर्यस्थंजगदीश्वरम् ॥
र्वकामफलप्रदम् ॥ लक्षपद्मंरंगवल्याशुभेमासिसमारभेत् ॥ गुरुशुक्रास्तरहितेशुक्लपक्षेतुयत्नतः ॥

उद्यापनंसमाप्तौचकुर्याद्यत्नेनसिद्धये ॥ संपूर्णंजायतेयेनतच्छृणुष्वप्रयत्नतः ॥सूर्यस्यप्रतिमांकुर्यात्सुवर्णेनस्वशक्तितः ॥ वेदिकोयांप्रकर्तव्यंस्व
स्तिकंपद्मसंयुतम् ॥तन्मध्येकलशंस्थाप्यरक्तवस्त्रेणवेष्टितम् ॥ पंचामृतेनसंस्नाप्यदेवंतत्रप्रपूजयेत् ॥गंधपुष्पाक्षतैर्दिव्यैर्धूपदीपादिभिःशुभैः ॥
सुवर्णनिर्मितंपद्मंदेवायविनिवेदयेत् ॥आचार्यंवरयेत्तत्रवेदवेदांगपारगम् ॥ ततोहोमःप्रकर्तव्यस्तिलाज्यैःपायसैस्तथा ॥ अष्टोत्तरसहस्रंवाशत
त्रयमथापिवा ॥ गायत्रीमंत्रतोराजन्मूलमंत्रेणवाततः ॥ गोदानंचप्रकर्तव्यंसूर्यस्थहरितुष्टये ॥ ब्राह्मणान्भोजयेच्छक्त्याशर्कराघृतपायसैः ॥
तेभ्योपिदक्षिणांदद्याद्वित्तशाठ्यविवर्जितः ॥ प्रतिमांकलशंचैवपद्मंपूजादिकंतथा ॥ अतोदेवेतिमंत्रेणआचार्यायनिवेदयेत् ॥ प्रद
क्षिणांनमस्कारंकुर्यान्मूर्ध्निकृतांजलिः ॥ श्रीकृष्णउवाच ॥ एतत्तेव्रतमाख्यातंस्त्रीणांकामफलातये ॥ पुत्रपौत्रादिसंतानवृद्ध्यर्थंकुरुनं
दन ॥ यानारीकुरुतेभक्त्याहरिस्तस्याःप्रसीदति ॥ इतिश्रीसौरपु॰ लक्षपद्मव्रतंसोद्यापनंसंपूर्णम् ॥

## अथलक्षादिदीपदानविधिः ॥

स्कंदउवाच ॥ रुद्रसंख्याञ्छिवस्याग्रेदीपान्प्रत्यहमर्पयेत् ॥ वर्षमेकंतदर्धंवावर्षद्वयमथापिवा ॥ लक्षलंख्यांस्तदर्धान्वाद्विलक्षान्वास्व
शक्तितः ॥ दीपमालांयथाशक्त्याकार्तिकेश्रद्धयान्वितः ॥ घृतेनयेप्रकुर्वंतितेषांपुण्यंवदामिते ॥ यावत्कालंप्रज्वलंतिदीपास्तस्याशिवा
ग्रतः ॥ तावद्युगसहस्राणिस्वर्गलोकेमहीयते ॥ कौसुंभेनचतैलेनदीपान्दद्याच्छिवालये ॥ तेनपुण्येनकैलासेवसतेशिवसन्निधौ ॥ अत
सीतैलसंयुक्तान्दीपान्दद्याच्छिवालये ॥ दशपूर्वैर्दशपरैर्युक्तोगच्छेच्छिवालये ॥ ज्ञानिनोहिभविष्यंतिदीपदानप्रभावतः ॥ आर्तिक्यंच
सकर्पूरंयेकुर्वंतिदिनेदिने ॥ तिलतैलेनयेदीपान्ददतेचशिवालये ॥ तेजस्विनोमहाभागाःकुलेनचशतेनवै ॥ तेप्राप्नुवंतिसायुज्यंनात्रका

र्याविचारणा ॥ लक्षादिदीपदानस्यकार्यमुद्यापनंबुधैः ॥ उपवासंप्रकुर्वीतपूर्वस्मिन्दिवसेमुदा ॥ कर्षमात्रसुवर्णेनतदर्धार्धेनवा पुनः ॥ प्रतिमांशंकरस्याथउमयासहितस्यच ॥ आचार्यंवरयेत्तत्रअभिज्ञंवेदपारगम् ॥ कलशंस्थापयेद्रात्रौस्वस्तिवाचनपूर्वकम् ॥ उमामहेश्वरंहैमंस्थापयेत्कलशोपरि ॥ उपचारैःषोडशभिःपूजयेच्चपृथक्पृथक् ॥ रात्रौजागरणंकुर्यात्पुराणश्रवणादिभिः ॥ प्रातःस्नानंविधायाथहोमकर्मसमारभेत् ॥ तिलसर्पिर्यवैश्चापिचरुणाबिल्वपत्रकैः ॥ आज्यपूतैश्चप्रत्येकंसद्योजातादिमंत्रतः ॥ शतमष्टोत्तरं हुत्वाहोमशेषंसमापयेत् ॥ उमामहेश्वरंदेवंपूजयेत्तुपुनर्व्रती ॥ प्रतिमांवस्त्रसहितामाचार्यायनिवेदयेत् ॥ सहिरण्यांसवत्सांचधेनुंदद्यात्प्रयत्नतः ॥ अनेनविधिनायस्तुव्रतमेतत्समाचरेत् ॥ सभुक्त्वाविपुलान्भोगाञ्छिवसायुज्यमाप्नुयात् ॥ ब्राह्मणान्भोजयेत्पश्चाद्वस्त्रालंकारभूषणैः ॥ गुरोराज्ञांगृहीत्वातुभुंजीयाद्बंधुभिःसह ॥ एवंयःकुरुतेमर्त्योलक्षदीपादिदीपनम् ॥ नरोवाप्यथवानारीसोश्नुतेपदमव्ययम् ॥ ज्ञानमुत्पद्यतेतस्यसंसारभयनाशनम् ॥ सर्वपापंक्षयंयातिजन्मजन्मार्जितंचयत् ॥ बाल्येवयसियत्पापंयौवनेवापियत्कृतम् ॥ वार्धकेपिकृतंपापंतत्सर्वंनश्यातिध्रुवम् ॥ सर्वपापविनिर्मुक्तोभुक्त्वाभोगान्महीतले ॥ सर्वान्कामानवाप्याथसोश्नुतेपदमव्ययम् ॥ इतिश्रीस्कंदपुराणेलक्षादिदीपदानोद्यापनंसंपूर्णम् ॥ अथलक्षदूर्वापूजनाविधिः ॥ ( शूरसेनउवाच ॥ लक्षपूजाविधिंसम्यक्कथयस्वममाग्रतः ॥

१ अयंलक्षदूर्वापूजाविधित्वेनगणेशपुराणे नोक्तःपरंतुदूर्वामाहात्म्यंकथयितुमग्रिमःकथाभागउक्तः परंतुसन्यूनइतिकृत्वाकौंडिन्यउवाचेत्यादिर्गृहेचेदस्तिदीयतामित्यंतःपूरितः तस्यसंदर्भस्तु प्रथमंशूरसेनेंद्रसंवादस्तदंतर्गतोब्रह्मकृतवीर्यपितृसंवादस्तदंतर्गतोगणानांयोगिनांचसंवादस्तदंतर्गतःकौंडिन्यस्यस्तत्पत्न्याआश्रयायाश्चसंबादः ग्रंथकृताशूरसेनउवाचेत्यादिश्लोकद्वयमंतेचलक्षसंख्याकदूर्वाभिरित्याद्यर्धंतथोद्यापनविधिश्चकृत्योलिखितइतिसमूलोनोपलभ्यते ।

यंकृत्वाप्राणिनः सर्वेभवंतिसुखभागिनः ॥ इंद्रउवाच ॥ श्रावणेचचतुर्थ्यांतुभौमवारोयदाभवेत् ॥ शुभेह्निवासरेवापिपूजाकर्मसमारभेत् ॥ )
अथदूर्वामाहात्म्यं गणेशपुराणेउपासनाकांडे ॥ कौंडिन्यउवाच ॥ कस्मिंश्चित्समयेदेविसुखासीनंगजाननम् ॥ नारदोमुनिरभ्यागाद्द्रष्टुंतं
बहुवासरैः ॥ १ ॥ साष्टांगंप्रणिपत्यैनंप्राहनःसार्थकंजनुः ॥ यत्पुण्यनिचयैर्जातंदर्शनंतेगजानन ॥ २ ॥ इत्युक्त्वास्वांजलिबद्ध्वातस्थौतत्पुर
तोमुनिः ॥ धृत्वाकरेणतत्पाणिमुपवेशयदासने ॥ ३ ॥ गजाननोमहाभागोमहाभागंमहामुनिम् ॥ नारदोभगवांस्तेनसंतुष्टोमुनिपुंगवः ॥ ४॥
उवाचतंगणाधीशमाश्चर्यंहृदिमेस्तियत् ॥ तन्निवेदितुमायातोनत्वात्वांपुनराव्रजे ॥ ५ ॥ गजाननउवाच ॥ किमाश्चर्यंत्वयादृष्टंहृदिकिंते
ऽभिवर्तते ॥ वदसर्वविशेषेणततोव्रजनिजाश्रमम् ॥ ६ ॥ नारदउवाच ॥ मैथिलेविषयेदेवजनकोराजसत्तमः ॥ अतिमानीवदान्य
श्चवेदवेदांगपारगः ॥ ७ ॥ अन्नदानरतोनित्यंब्राह्मणान्पूजयत्यसौ ॥ नानालंकारवासोभिर्दक्षिणाभिरनेकशः ॥ ८ ॥ दीनां
धकृपणेभ्यश्चबहुद्रव्यंददात्यसौ ॥ याचकैर्याच्यतेयद्यत्तत्तेनप्रदीयते ॥ ९ ॥ तथापिनव्ययंयातिद्रव्यंतस्यमहात्मनः ॥ गजा
ननस्यसंतुष्ट्याद्रव्यंतद्वर्धतेनुकिम् ॥ १० ॥ इत्याश्चर्यंमहद्द्रष्टुंप्रयातस्तद्गृहानहम् ॥ ब्रह्मज्ञानाभिमानेनउपहासंममाकरोत् ॥ ११ ॥
अहंचतमुवाचेत्थंधन्योसिनृपसत्तम ॥ चिंतितंतेपिभक्त्यायंप्रयच्छतिगजाननः ॥ १२ ॥ सतुगर्वादुवाचेत्थमहमीशोजगत्त्रये ॥
अहंदाताचभोक्ताचपातादापयितातथा ॥ १३ ॥ मत्स्वरूपंविनानान्यद्विद्यतेभुवनत्रये ॥ कर्ताचकारणंचाहंकरणंमुनिसत्तम ॥ १४ ॥
नारदउवाच ॥ इतितद्वचनंश्रुत्वाक्रोधेनाहंजगादतम् ॥ ईश्वराज्जगतःकर्तानान्यःकश्चनविद्यते ॥ १५ ॥ त्वंतुधर्मंमिमंराजन्दंभेनैवकरो

षिकिम् ॥ दर्शयिष्येसाक्ष्यमस्यस्वल्पकालेनतेनघ ॥ १६ ॥ इत्युक्तातमहंयातस्त्वदंतिकमिभानन ॥ कौंडिन्यउवाच ॥ आकर्ण्यै
त्थंमुनेर्वाक्यंपूजयामासतंविभुः ॥ १७ ॥ अर्घ्यादिभिरलंकारैर्दिव्यैःपुष्पैःसचंदनैः ॥ मुनिराज्ञांप्रगृह्यैववैकुंठंविष्णुमभ्यगात् ॥ १८ ॥
गजाननोपिमिथिलांराजभक्तिपरीक्षितुम् ॥ कुत्सितंवेषमादायसर्वज्ञोपिसमाययौ ॥ १९ ॥ अनेकक्षतसंयुक्तंस्रवद्रक्तममंगलम् ॥
मक्षिकानिचयाक्रांतंरदहीनमिवातुरम् ॥ २० ॥ गच्छंतंतादृशंदृष्ट्वानरानासानिरोधनम् ॥ कुर्वंतिवाससाकेचित्ष्ठीवनंचयथातथा ॥
॥ २१ ॥ स्खलन्मूर्च्छन्पतन्गच्छन्नर्भकावलिसंयुतः ॥ नृपद्वारंसमागम्यद्वारपालानुवाचसः ॥ २२ ॥ राज्ञेनिवेद्यतांदूताअतिथिंमांसमाग
तम् ॥ ब्राह्मणंक्षुधितंवृद्धमिच्छाभोजनकांक्षिणम् ॥ २३ ॥ तेतद्वाक्यंतथाचख्युर्गत्वातंजनकंनृपम् ॥ आनीयतामितिप्राहदूतान्द्रष्टुंतुकौ
तुकम् ॥ २४ ॥ असृक्स्रवंतंवृद्धंतंब्राह्मणंश्रमवारिणम् ॥ तर्कयामासजनकईश्वरोरूपधृङ्नुकिम् ॥ २५ ॥ छलितुंमांसमायातोयदिपुण्यं
भवेन्मम ॥ समाधास्येमनोह्यस्यभविष्यंनान्यथाभवेत् ॥ २६ ॥ इत्येवंचिंतयत्येवजनकेनृपसत्तमे ॥ प्रवेशितोद्वारपालैर्ब्राह्मणःपर्यदृश्यत
॥ २७ ॥ ब्राह्मणउवाच ॥ चंद्रांशुधवलांकीर्तिंश्रुत्वातेहंसमागतः ॥ देहिमेभोजनंराजन्क्षुधितस्यचिराद्भृशम् ॥ २८ ॥ ममतृप्तिर्भ
वेद्यावत्तावदन्नंप्रदीयताम् ॥ तवक्रतुशतंपुण्यंभविष्यतिनरेश्वर ॥ २९ ॥ कौंडिन्यउवाच ॥ इतिवाचंनिशम्यासौगृहमभ्येनिनायतम् ॥
संपूज्यविधिवच्चैनंस्वाद्वन्नमुपवेशयत् ॥ ३० ॥ एकग्रासेनसर्वंसजग्रासाद्द्विजसत्तमः ॥ यावदन्नंस्थितंसिद्धंपर्याप्तमयुतस्ययत् ॥ ३१ ॥
तद्दत्तंपुरतस्तस्यबभक्षतत्क्षणेनसः ॥ असंख्यातेषुपात्रेषुपक्कांक्षिताःसुतंडुलाः ॥ ३२ ॥ आदीयतास्यपुरतोत्रासिद्धश्चौदनोभवत् ॥

सभक्षयतिसर्वंतंततऊचेजनोनृपम् ॥ ३३ ॥ राक्षसोयंभवेत्प्रायःकिमर्थंदीयतेबहु ॥ राक्षसेभ्यःप्रदानेननकिंचित्पुण्यमवाप्यते ॥ ३४ ॥
केचिदूचुस्त्रिभुवनेभक्षितेप्यस्यनोभवेत् ॥ तृप्तिःपरामिकाराजन्धान्यमस्मैप्रदीयताम् ॥ ३५ ॥ ततोधान्यानिसर्वाणिगृहेभूमौस्थिता
निच ॥ आनीयचिक्षिपुस्तस्यपुरोग्रामगतानिच ॥ ३६ ॥ पुंसोस्यद्विजरूपस्यसर्वभक्षस्यचातिथेः ॥ नतृप्तिमगमत्सोथभक्षितेषु
चतेषुच ॥ ३७ ॥ ततोदूतानृपंप्रोचुर्धान्यंक्वापिनलभ्यते ॥ इतिदूतवचःश्रुत्वाजनकेऽधोमुखेस्थिते ॥ ३८ ॥ स्वस्तीत्युक्त्वागमद्वि
प्रोनतृप्तोसौगृहंगृहम् ॥ दीयतामन्नमित्याहतेजनास्तंजगुस्तदा ॥ ३९ ॥ सर्वेषांगृहगंधान्यंसर्वंराज्ञासमाहृतम् ॥ जग्धंत्वयाखिलं
ब्रह्मन्गम्यतांयत्रतेरुचिः ॥ ४० ॥ द्विजउवाच ॥ कीर्तिरस्यश्रुतालोकान्नदाताजनकात्परः ॥ तृप्तिकामःसमायातोह्यतृप्तोहंकथंव्रजे ॥४१ ॥
तूष्णींभूतेषुलोकेषुबंभ्रमन्सददर्शह ॥ विरोचनात्त्रिशिरसोर्मंदिरंद्विजयोर्वरम् ॥ ४२ ॥ तन्मध्यंप्राविशत्सोपिगृहस्वामीवसत्तया ॥ सर्वोपस्क
ररहितंधातुपात्रविवर्जितम् ॥ ४३ ॥ इतिश्रीगणेशपु० उ० अध्यायः ॥ ६५ ॥ कौंडिन्यउवाच ॥ धारामात्रासनौतौतुनभःप्रावारसंयुतौ ॥
दिगंबरौसर्वधातुसंस्पर्शवर्जितावुभौ ॥ १ ॥ अयाचितभुजौनित्यंजलेनैवाखिलाःक्रियाः ॥ द्विजरूपधरोऽपश्यत्कुर्वाणौसत्त्वशुद्धये ॥ २ ॥
गृहंचमक्षिकापुंजैर्मशकैरभितोवृतम् ॥ मूर्तिंचगणनाथस्यपूजितांपुष्पपल्लवैः ॥ ३ ॥ अनन्यभक्त्यातांभ्यांयत्तत्पराभ्यांददर्शसः ॥
तावूचेश्रूयतांवाक्यंयन्मयाप्रोच्यतेनघौ ॥ ४ ॥ मिथिलाधिपतेःकीर्तिंश्रुत्वाहंक्षुधितोभृशम् ॥ तृप्तिकामःसमायातोनसतृप्तिंसमाक
रोत् ॥ ५ ॥ कर्मणादांभिकेनैवसत्त्वंनपरिरक्ष्यते ॥ ममतृप्तिकरंकिंचिद्गृहेचेदस्तिदीयताम् ॥ ६ ॥ दंपतीऊचतुः ॥ चक्रवर्तीनृ

पोयोसौतेनतृप्तिर्नतेकृता ॥ आवाभ्यांतुदरिद्राभ्यांकिंदेयंतृप्तिकारकम् ॥ ७ ॥ नदीनदजलैर्योब्धिरसंख्यैर्नापिपूर्यते ॥ बिंदुमात्रेण
सहसासकथंपूर्यतेवद ॥ ८ ॥ द्विजउवाच ॥ भक्त्यादत्तंस्वल्पमपिबहुतृप्तिकरंमम ॥ अभक्त्यायच्चदंभेनबहुदत्तंवृथाभवेत् ॥ ९ ॥
दंपतीऊचतुः ॥ आवयोर्नगृहेकिंचिच्छपथस्तेद्विजोत्तम ॥ पूजायैगणनाथस्यप्रातर्दूर्वांकुराहृताः ॥ १० ॥ पूजितोगणनाथस्तैस्ततएको
वशिष्यते ॥ द्विजउवाच ॥ भक्त्यादत्तःसएकोपितृप्तयेस्यात्प्रदीयताम् ॥ ११ ॥ कौंडिन्यउवाच ॥ विरोचनाददौतस्मैश्रुत्वावाक्यंतदीरितम् ॥
एकंदूर्वांकुरंभक्त्यातेनतृप्तोभवद्द्विजः ॥ १२ ॥ शाल्यन्नंपायसान्नंचनानापक्वान्नमेवच ॥ व्यंजनानिचसर्वाणिलेह्यचोष्याण्यनेकधा ॥ १३ ॥
भक्त्याविरोचनादत्तेजातंदूर्वांकुरोखिलम् ॥ गृहीत्वाब्राह्मणस्तंतुबभक्षपरयामुदा ॥ १४ ॥ तस्मिन्दूर्वांकुरेभक्त्यादत्तेतेनाथभक्षिते ॥ प्रश
शामद्विजस्यास्यतत्क्षणाज्जठरानलः ॥ १५ ॥ तृप्तिश्चपरमातेनप्राप्तातत्क्षणमात्रतः ॥ आलिलिंगत्रिशिरसंतृप्तोहर्षाद्द्विजस्तदा
॥ १६ ॥ तत्याजकुत्सितंरूपंप्रकटोभूद्गजाननः ॥ चतुर्भुजोरविंदाक्षःशुंडादंडविराजितः ॥ १७ ॥ कमलंपरशुंमालांदंतंकरतलेदध
त् ॥ महार्हमुकुटोराजन्कर्णकुंडलमंडितः ॥ १८ ॥ दिव्यवस्त्रपरीधानोदिव्यगंधानुलेपनः ॥ उवाचतौप्रसन्नात्मादंपतीसगजाननः
॥ १९ ॥ वृणीतंतंवरंशीघ्रंमनसायंयमिच्छथः ॥ तावूचतुः ॥ जन्मनीयत्रनौस्यातांतत्रतेदृढभक्तिता ॥ २० ॥ मुक्तिर्वादीयतांदेवदुस्त
राद्भवसागरात् ॥ नयाच्यंकिंचिदन्यद्धिपादपद्मादिभानन ॥ २१ ॥ कौंडिन्यउवाच ॥ इतितद्वाक्यमाकर्ण्यतथेत्युक्त्वागजाननः ॥
पुनरालिंग्यपिदधेभक्तंत्रिशिरसंमुदा ॥ २२ ॥ एतस्मात्कारणाद्दूर्वाभारोस्मैदीयतेमया ॥ असंख्यभक्षणाद्योनतृप्तिंदेवःसमाययौ ॥ २३ ॥

दूर्वांकुरेणचैकेनसतृप्तिंपरमांययौ ॥ इतितेकथितःसम्यगाश्रयेमहिमाशुभः ॥ २४ ॥ दूर्वासमर्पणभवःश्रवणात्सर्वकामदः ॥ इतिहासमिमंभक्त्याशृणुतेश्रावयेच्चयः ॥ २५ ॥ सपुत्रधनकामाढ्यःपरत्रेहचमोदते ॥ गजाननेलभेद्भक्तिंनिष्कामोमुक्तिमाप्नुयात् ॥ २६ ॥ गणाऊचुः ॥ श्रुत्वापीत्थमितिहासमाश्रयासंशयंपुनः ॥ प्रपेदेहृदितंज्ञात्वाकौंडिन्योमुनिरब्रवीत् ॥ २७ ॥ आश्रये शृणुमेवाक्यंसंशयस्यापनुत्तये ॥ यद्वदामिहृदिस्थस्यमयाज्ञातस्यतेनघे ॥ २८ ॥ एकंदूर्वांकुरंगृह्यगच्छशीघ्रंबिडौजसम् ॥ वदाशीर्वचनंपूर्वंपश्चाद्याचस्वकांचनम् ॥ २९ ॥ दूर्वांकुरेणतुलितंगृहीत्वातादिहानय ॥ नन्यूनंनाधिकंग्राह्यंतस्यभाराच्छुभानने ॥ ३० ॥ इतिश्रीगणेशपु० अध्यायः ॥ ६६ ॥ आज्ञप्तातेनमुनिनास्वाभिप्रेतार्थसिद्धये ॥ एकंदूर्वांकुरंगृह्यशक्रसन्निधिमाययौ ॥ १ ॥ तमुवाचाश्रयाशक्रदेहिमेकांचनंशुभम् ॥ याचितुंत्वांसमायाताभर्तृवाक्यात्सुरेश्वर ॥ २ ॥ इंद्रउवाच ॥ किमर्थंत्वमिहायातायद्वाज्ञाप्रेषिता भवता ॥ मयासंप्रेषितंस्यात्तेजातरूपंस्वशक्तितः ॥ ३ ॥ आश्रयोवाच ॥ दूर्वांकुरस्यतुलयायद्भवेत्कांचनंसुर ॥ तद्भद्रीष्येशचीभर्तर्न्यूनंनचवाधिकम् ॥ ४ ॥ इंद्रउवाच ॥ दूतैनांनयशीघ्रंत्वंकुबेरभवनंप्रति ॥ सदास्यतिसुवर्णंचदूर्वांकुरमितंशुभम् ॥ ५ ॥ गणाऊचुः[1] ॥ आज्ञयादेवराजस्यदेवदूतस्तयासह ॥ प्रायात्कुबेरभवनंशक्रस्यवचनात्तदा ॥ ६ ॥ अस्यैदूर्वांकुरमितंजातरूपंप्रदीयताम् ॥ इंद्रेणप्रेषितासाध्वीमुनिपत्नीमयासह ॥ ७ ॥ प्रापिताभवनंतेद्ययामिदेवनमोस्तुते ॥ कुबेरउवाच ॥ अत्याश्चर्यमहंमन्येमुनिःशक्रस्तथाश्रया ॥ ८ ॥ मोहाविष्टानजानंतिदूर्वांकुरमितंकिय

१ गणायोगिनःप्रत्यूचुः ।

त् ॥ कांचनंतेनकिंवास्याद्बहुलंकिंनयाचितम् ॥ ९ ॥ गणाऊचुः ॥ एवमेवददौतस्यैबहुलंकांचनंतुसः ॥ नजग्राहभयाद्भर्तुर्न्यूनाधिकविशं
कया ॥ १० ॥ स्वर्णकारतुलायांतंदूर्वांकुरमधारयत् ॥ नाभवत्तुलयातस्यपर्याप्तंतत्तुहाटकम् ॥ ११ ॥ वणिक्तुलासमानीतात
त्रापिनाभवत्समम् ॥ तैलकारतुलायांतुदूर्वांकुरसमंनच ॥ १२ ॥ घटोबद्धस्ततस्तत्रहाटकंदत्तमेकतः ॥ दूर्वांकुरोपरत्रापियातिपत्र
मधस्तदा ॥ १३ ॥ अन्यदन्यद्ददौतत्रकुबेरःकांचनंबहु ॥ तच्चापिनाभवत्तेनसमंदूर्वांकुरेणच ॥ १४ ॥ सर्वंकोशगतंद्रव्यंदत्तंतेनागिरींद्रवत्॥
तथापिनाभवत्तुल्यंतेनदूर्वांकुरेणतत् ॥ १५ ॥ पत्नीमाहूयतांप्राहकुबेरःकौतुकान्वितः ॥ कुरुमद्वाक्यतःसुभ्रूर्घटारोहणमग्रतः ॥ १६ ॥ नस
मंचेत्समारोक्ष्येनिजसत्त्वरिरक्षया ॥ पतिव्रताज्ञयातस्यघटमारुहेतदा ॥ १७ ॥ नसमासापितेनासीत्ततः सर्वांपुरींददौ ॥ घटमध्येकुबेरो
सौनचोर्ध्वंजायतेंकुरः ॥ १८ ॥ श्रुत्वादूतमुखादिंद्रोगजारूढः समाययौ ॥ स्वकीयद्रव्यसहितोघटमारुरुहेस्वयम् ॥ १९ ॥ दूर्वांकुरोनचो
र्ध्वंसतथापिसमजायत ॥ अधोमुखोगतश्चिंतांकिमेतादितिचिंतयन् ॥ २० ॥ विष्णुंहरंचसस्मारतत्रारोहणकाम्यया ॥ तत्रागतौसनगरौघट
मारुहतांतदा ॥ २१ ॥ तथापिनोर्ध्वमगमत्तदादूर्वांकुरःस्फुटम् ॥ ततस्तेततउत्तेरुःशिवविष्णुधनेश्वराः ॥ २२ ॥ वरुणेंद्राग्निमरुतःकौंडि
न्यमभितोययुः ॥ देवादेवर्षयश्चापिसिद्धविद्याधरोरगाः ॥ २३ ॥ दिनांतेसमनुप्रातेस्वंनीडमिवपक्षिणः ॥ नमस्कृत्यमुनिंसर्वेप्रोचुरुद्विग्न
चेतसः ॥ २४ ॥ सर्वेऊचुः ॥ वृजिनंविलयंयातंदर्शनात्तवभोमुने ॥ पूर्वपुण्यभवादग्रेकल्याणंनोभविष्यति ॥ २५ ॥ तवपत्न्याहृतंसत्त्वं
सर्वेषामद्यनःस्फुटम् ॥ महिमानंनजानीमोदूर्वांकुरसमुद्भवम् ॥ २६ ॥ एकदूर्वांकुरतुलांत्रैलोक्यमपिनालभत् ॥ गजाननशिरःस्थस्यत्व

याभक्त्यार्पितस्यच ॥ २७ ॥ जानीयान्महिमानंकःसम्यग्दूर्वांकुरस्यहि ॥ गजाननैकभक्तस्यजपतस्तपतोभृशम् ॥ २८ ॥ तवा
पिमहिमानंकोजानीयात्सर्वदेहिनाम् ॥ एवमुक्त्वामुनिंसर्वेपूर्वंपूज्यगजाननम् ॥ सर्वेसभार्यापुपुजुस्तुष्टुवुर्ननृतुर्जगुः ॥ २९ ॥ नब्रह्मानहरिः
शिवेंद्रमरुतोनाग्निर्विवस्वान्यमःशेषोशेषकलानिधिश्चवरुणोनोचंद्रमानाश्विनौ ॥ नोवाचामधिपोनचैवगरुडोनोयक्षराणूनांगिरामाहात्म्यंप
रिवेददेवनिगमैरज्ञातरूपस्यते ॥ ३० ॥ एवंसंतोष्यसर्वेतेदेवदेवंगजाननम् ॥ मुनिंचसमनुज्ञाप्यययुःस्वंस्वंनिकेतनम् ॥ ३१ ॥
आश्रयापिततोज्ञात्वादूर्वामाहात्म्यमुत्तमम् ॥ विश्वस्ताभर्तृवाक्येसादूर्वाभिःपर्यपूजयत् ॥ ३२ ॥ विघ्नेश्वरंसर्वदेवंसर्वैर्दूर्वाभिरर्चितम् ॥
प्रणनामचकौंडिन्यंभर्तारंसत्यवादिनम् ॥ ३३ ॥ उवाचसुप्रसन्नासास्वात्मानंनिंदतीभृशम् ॥ मादृशीनैवदुष्टास्तियातेवाक्येससंशया
॥ ३४ ॥ विशेषविदुषांस्वामिन्नविशेषविदुषात्वया ॥ सम्यक्कृतंममविभोसर्वभूतदयावता ॥ ३५ ॥ तत्क्षमस्वापराधं
मेत्वामहंशरणागता ॥ ततःप्रातःसमुत्थायदूर्वाआदायसत्वरौ ॥ ३६ ॥ स्नात्वादेवंसमभ्यर्च्यदूर्वार्पणमकुर्वताम् ॥ अनन्यभक्त्या
ज्ञात्वातौदूर्वामाहात्म्यमुत्तमम् ॥ ३७ ॥ सायंप्रातर्देवदेवंपूजयंतौनिरंतरम् ॥ त्यक्त्वायज्ञंव्रतंदानंज्ञात्वादेवोगजाननः ॥ ३८ ॥ कृपया
परयाविष्टःस्वधामप्रत्यपादयत् ॥ गणाऊचुः ॥ अगाधंवर्णितंदूर्वामाहत्म्यमिदमुत्तमम् ॥ ३९ ॥ अशेषवर्णनेशेषोनेशोनेशौहरी
श्वरौ ॥ त्रैलोक्यंतुलयाह्यस्याःपत्रेनैवसमंभवेत् ॥ ४० ॥ दूर्वेतिस्मरणात्पापंत्रिविधंविलयंव्रजेत् ॥ तत्स्मृतौस्मर्यतेदेवोयतःसोपिगजा
ननः ॥ ४१ ॥ इतिचिंतामणेःक्षेत्रमहिमावर्णितःस्फुटम् ॥ श्रवणात्कीर्तनाद्ध्यानाद्भुक्तिमुक्तिफलप्रदः ॥ ४२ ॥ एतस्मात्कारणा

द्यानंत्रयाणांप्रेषितंशुभम् ॥ रासभस्यमुखाद्दूर्वागतादेवेवृषस्यच ॥ ४३ ॥ चांडाल्याशीतनाशायत्वानीतातृणभारतः ॥ वायुनाप्रेरितासा
पिगतादूर्वागजानने ॥ ४४ ॥ यतस्तस्यप्रियादूर्वासंतुष्टोसौविनायकः ॥ निष्पापत्वात्त्रयाणांचसान्निध्यंदत्तवान्निजम् ॥ ४५ ॥ गंध
मात्रेणदूर्वायाःसंतुष्टोजायतेविभुः ॥ प्रसंगेनतुभावाच्चकिंपुनर्मस्तकार्पणात् ॥ ४६ ॥ ब्रह्मोवाच ॥ इतिदूतमुखाद्राज्ञासंश्रुतोमहिमातदा ॥
दूर्वायामुनिभिःसर्वैर्नदृष्टोनचसंश्रुतः ॥ ४७ ॥ स्नात्वादूर्वांकुरान्गृह्यपुपूजुस्तेविनायकम् ॥ सेवकाश्चापिदूर्वाभिरानर्चुःश्रीगजाननम् ॥
॥ ४८ ॥ आसन्सर्वेदिव्यदेहास्तेजसासूर्यवर्चसः ॥ शृण्वंतोदिव्यवाद्यानांनानारावान्समंततः ॥ ४९ ॥ विमानवरमारूढादिव्यव
स्त्रानुलेपनाः ॥ यातावैनायकंधामकेचिद्रूपंचधारिणः ॥ ५० ॥ नरानागरिकाःकेचिदागतास्तंमहोत्सवम् ॥ दृष्टंदूर्वाभिरानर्चुरेकविंशति
भिःपृथक् ॥ ५१ ॥ भुक्त्वाभोगांश्चतेसर्वेगाणेशंस्थानमागमन् ॥ विमानमपिचलितमूर्ध्वंतत्पुण्यपुंजतः ॥ ५२ ॥ तस्माद्गणेशभक्तेन
कार्यंदूर्वाभिरर्चनम् ॥ नकरोतिनरोयस्तुप्रमादात्ताभिरर्चनम् ॥ ५३ ॥ चांडालःसतुविज्ञेयोनरकान्प्राप्नुयाद्बहून् ॥ नतन्मुखंनिरीक्षेतकदा
चिदपिमानवः ॥ ५४ ॥ यस्तुदूर्वाभिरर्चेत्तंदेवदेवंगजाननम् ॥ तस्यदर्शनतोन्योपिपापीशुद्धिमवाप्नुयात ॥ ५५ ॥ अलाभेबहुदूर्वाणामे
कयैवाभिपूजयेत् ॥ ( लक्षसंख्याकदूर्वाभिःपूजयेद्योगजाननम् ॥ ) तेनापिकोटिगुणिताकृतापूजानसंशयः ॥५६॥ ब्रह्मोवाच॥इतिनानाविधो
राजन्महिमाकथितस्तव ॥ सेतिहासस्तुदूर्वाणांश्रवणात्पापनाशनः ॥ ५७ ॥ नाख्येयोदुष्टबुद्धेस्तुप्रियेपुत्रेनिवेदयेत् ॥ इंद्रउवाच ॥ इतिब्रह्म

१ रासभवृषभचांडालीवृत्तांतस्तुप्रथममेवदूर्वामाहात्म्यप्रसंगेसविस्तरोगणेशपुराणेवर्णितःसतुविस्तरभयादत्रनपूरितइतिबोध्यम् ।

मुखाच्छ्रुत्वापरमाख्यानमुत्तमम् ॥ ५८ ॥ ननंदपरमप्रीतोननामकमलासनम् ॥ तदाज्ञयार्यैर्यौस्थानंस्वकीयंविस्मयान्वितः ॥ ५९ ॥ इति श्रीगणेशपुराणेउपासनाखंडेदूर्वामाहात्म्यंसंपूर्णम् ॥ अ० ॥ ६७ ॥ अथोद्यापनम् ॥ उद्यापनंचकुर्यात्तुदेशकालानुसारतः ॥ माघेवाकार्तिके भाद्रे आषाढेश्रावणेपिवा ॥ अन्येषुपुण्यमासेषुव्रतमेतत्समाचरेत् ॥ प्रातःस्नानंविधायाथदंतधावनपूर्वकम् ॥ धौतवस्त्रधरोभूत्वानित्य कर्मसमाचरेत् ॥ देवपूजागृहंवापिदेवालयमथापिवा ॥ गोमयेनानुलिप्याशुधातुना[2]मृण्मयेनवा ॥ पंचभिर्ब्राह्मणैःसार्धंकृत्वाचस्वस्तिवाचनम्॥ नांदीश्राद्धंप्रकुर्वीतलक्षपूजाविधौद्विजः ॥ प्राणायामत्रयंकृत्वादेशकालौस्मरेत्सुधीः ॥ गजाननंचतुर्बाहुमेकदंतविपाटितम् ॥ वि धायहेम्नाविघ्नेशंहेमपीठासनस्थितम् ॥ तथाहेममयींदूर्वांतदाधारार्थमादरात् ॥ संस्थाप्यविघ्नहर्तारंकलशेताम्रभाजने ॥ वेष्टितंरक्तवस्त्रेणस र्वतोभद्रमंडले ॥ पूजयेदुक्तकुसुमैःशमीदूर्वाभिरर्चयेत् ॥ गंधपुष्पैश्चधूपैश्चदीपैर्नैवेद्यमोदकैः ॥ पश्चाद्गंधाढ्यदूर्वाभिरर्चयेद्गणनायकम्॥ भक्त्यानामसहस्रेणअथवाशतनामभिः ॥ ससंख्यासफलापूजासंख्याहीनातुनिष्फला ॥ एवंसंपूज्यविधिवत्पूजांतेहोममारभेत् ॥ आ चार्यंवरयेत्पूर्वमृत्विजश्चैकविंशतिः ॥ गणानांत्वेतिमंत्रेणअयुतंहोममाचरेत् ॥ अथवादूर्वामंत्रेणअयुतंतुसमाचरेत् ॥ दूर्वामंत्रः ॥ त्वंदूर्वेमृतजन्मासिवंदितासिसुरासुरैः ॥ सौभाग्यंसंततिंदेहिसर्वकार्यकरीभव ॥ यथाशाखाप्रशाखाभिर्विस्तृतासिमहीतले ॥ तथाममापिसं तानंदेहित्वमजरामरम् ॥ सहस्रनामभिर्होमंस्वाहाकारसमन्वितैः ॥ मधुमिश्रैस्तिलैर्लाजैःपृथुकैरिक्षुखंडकैः ॥ लड्डुकैःपायसान्नेनसघृतेनच

१ कृतवीर्यपिता ।  २ गैरिकादिनामृण्मयेनमृद्विकारेणवा ।

कारयेत् ॥ पूर्णाहुतिंततःकृत्वाबलिदानंततश्चरेत् ॥ होमशेषंसमाप्याथब्राह्मणान्भोजयेत्ततः ॥ आचार्यंपूजेत्पश्चाद्वस्त्रालंकारभूषणैः ॥ एवंमेब्रह्मणादिष्टंव्रतंलोकोपकारकम् ॥ तदेतत्कथितंतेद्यकुरुपुत्रार्थमादरात् ॥ यइदंशृणुयाद्भक्त्यावाजपेयफलंलभेत् ॥ इति लक्षदूर्वापूजनोद्यापनंसंपूर्णम् ॥ ७ ॥ ॥ ७ ॥ अथशिवलक्षप्रदक्षिणाविधिः ॥ पुरातुऋषयःसर्वेनैमिषारण्यवासिनः ॥ शौनकाद्यामहात्मानःसर्वशास्त्रविशारदाः ॥ १ ॥ तीर्थयात्राप्रसंगेनगंगाद्वारमुपागमन् ॥ तत्रस्नाताःकृतजपाविधिवद्दत्तदक्षिणाः ॥ २ ॥ यावत्सुखोपविष्टास्तेहर्षनिर्भरमानसाः ॥ तावत्तेददृशुस्तत्रसूतंशास्त्रार्थकोविदम् ॥ ३ ॥ ददर्शसोपितांस्तत्रऋषीन्विगतकल्मषान् ॥ ननामदंडवद्भक्त्यातैश्चापिप्रतिपूजितः ॥ ४ ॥ तेंचक्रुःपरमातिथ्यंकुशलप्रश्नमेवच ॥ सुखोपविष्टंतंसूतंपप्रच्छुरिदमादरात् ॥ ५ ॥ ऋषयऊचुः ॥ सूतसूतमहाप्राज्ञचिरंदृष्टोसिसुव्रत ॥ कस्मिंस्तीर्थेथवादेशेकालोऽतिवाहितस्त्वया ॥ ६ ॥ त्वद्दर्शनेनसौख्यंतुजातंनःपरमाद्भुतम् ॥ यंविधिंज्ञातुमिच्छामस्तच्छृणुष्वमहामते ॥ ७ ॥ त्वयोक्ताविविधाधर्मास्तथानानाविधाःकथाः ॥ व्रतानिचविचित्राणिमनोरथकराणिच ॥ ८ ॥ इदानींवददेवस्यव्रतंपरमपावनम् ॥ यत्कृत्वासर्वसिद्धिःस्यान्नराणांवांछितप्रदा ॥ ९ ॥ सूतउवाच ॥ सम्यक्पृष्टमृषिगणाव्रतंदेवस्यचाद्भुतम् ॥ ममापिकथितुंहर्षोजायतेनात्रसंशयः ॥ १० ॥ कृष्णेनधर्मराजायकथितंतद्वदामिवः ॥ युधिष्ठिरउवाच ॥ धर्माबहुविधाःप्रोक्तास्त्वयानंतफलप्रदाः ॥ ११ ॥ इदानींश्रोतुमिच्छामिव्रतंसंपत्करंशुभम् ॥ श्रीकृष्णउवाच ॥ शृणुराजन्प्रवक्ष्यामिशिवस्यव्रतमुत्तमम् ॥ १२ ॥ लक्षप्रदक्षिणानामयच्चलोकेसुदुर्लभम् ॥ ब्रह्मघ्नस्य

सुरापस्यगुरुदारावमर्शिनः ॥ १३ ॥ अपात्रीकरणान्येवंसंकलीकरणानिच ॥ प्रकीर्णकानिचरतोमलिनीकरणानिच ॥ १४ ॥ भ्रातृपत्नीसुतादीनांगामिनःकाममोहतः ॥ गुरौविश्वासहीनस्यव्रतभ्रष्टस्यपापिनः ॥ १५ ॥ संध्याकर्मविहीनस्यजगद्धुङ्मार्गवर्तिनः ॥ दासीवेश्यासंगिनश्चचांडालीगामिनस्तथा ॥ १६ ॥ परस्त्रहारिणश्चापिदेवद्रव्यापहारिणः ॥ ब्राह्मणद्वेषिणश्चापिवृत्तिच्छेदकरस्यच ॥१७ ॥ रहस्यभेदकस्यापिरहस्यकृतपापिनः ॥ ब्रह्मयज्ञविहीनस्यदुःशास्त्रनिरतस्यच ॥ १८ ॥ गुरुनिंदादिश्रोतुश्चगुरुद्रव्यापहारिणः ॥ सद्यःशुद्धिकरंह्येतज्जानीहित्वंयुधिष्ठिर ॥ १९ ॥ ब्रह्महत्यादिपापानांप्रायश्चित्तंयदीच्छति ॥ लक्षप्रदक्षिणानामव्रतंकुर्यान्महीपते॥२० ॥ वर्तनंसर्वभूतीनांसदाविजयकारणम् ॥ किमेभिर्बहुभिर्वाक्यैकथितैश्चपुनःपुनः ॥ २१॥ दारिद्र्यनाशनंपुण्यंसर्वैश्वर्यप्रदंशिवम् ॥ दुर्लभंसर्वमर्त्यानांपुत्रपौत्रप्रवर्धनम् ॥ २२ ॥ योयान्प्रार्थयतेकामान्सतानाप्नोतिमानवः ॥ ऋषयऊचुः ॥ सूतसूतमहाभागवेदविद्याविशारद ॥ २३ ॥ यथाप्रदक्षिणाःकार्यामनुजैस्तद्विधिंवद ॥ सूतउवाच ॥ एवमेवपुरापृष्टोभगवाञ्छिवयाशिवः ॥ २४ ॥ यमब्रवीन्मुनिश्रेष्ठाःशृण्वंतुविधिमुत्तमम् ॥ देव्युवाच ॥ भगवन्देवदेवेशप्रदक्षिणविधिंवद ॥ २५ ॥ कृतेनयेनमनुजोनिष्पापःपुण्यवान्भवेत् ॥ श्रीमहादेवउवाच ॥ श्रावणेमाधवेवोर्जेमाघेनियमपूर्वकम् ॥ २६ ॥ लिंगप्रदक्षिणाःकुर्याच्छ्रद्धयाविधिपूर्विकाः ॥ श्रीदेव्युवाच ॥ प्रदक्षिणासुलिंगस्यनियमाःकेभवंतितान् ॥ २७ ॥ वदस्वदेवदेवेशविश्वनाथकृपानिधे ॥ शिवउवाच ॥ प्रतिग्रहंपरान्नंचपरदाराभिभाषणम् ॥ २८ ॥ परस्वग्रहणंस्नेहादसद्वार्तांचवर्जयेत् ॥ असतांपापिनांसंगंनकुर्यात्प्रयतोनरः ॥ २९ ॥ असत्समागमात्सर्वंनिष्फलं

जायतेनृणाम् ॥ ममद्रोहकरैःसाकंनव्रजेद्विष्णुनिंदकैः ॥ ३० ॥ परापवादंनोकुर्यात्परद्रोहंनकारयेत् ॥ निंदांचगुरुशास्त्राणांशिवधर्मरता
त्मनाम् ॥ ३१ ॥ तीर्थलिंगतपोनिंदांनकुर्यात्तुकदाचन ॥ ब्रह्महत्यादिपापानांप्रायश्चित्तमिदंपरम् ॥ ३२ ॥ शिवलिंगेमहादेवियेकुर्वं
तिप्रदक्षिणाः ॥ अनंतकोटिगुणितंतेषांपुण्यंनसंशयः ॥ ३३ ॥ शिवापतेःप्रत्यहंचपूजाकार्याप्रयत्नतः ॥ उमेसम्यक्पूजनेनसिद्धिर्भवति
नान्यथा ॥ ३४ ॥ एवंयःकुरुतेमर्त्योव्रतमेतत्सुदुर्लभम् ॥ यंयंचिंतयतेकामंतंतंप्राप्नोत्यसंशयम् ॥ ३५ ॥ लक्षंसमाप्यपश्चात्तुकुर्यादुद्या
पनंव्रती ॥ व्रतपूर्त्यैतुविधिवच्छुभेमासेशुभेदिने ॥ ३६ ॥ देव्युवाच ॥ व्रतस्योद्यापनंकर्मकथंकार्यंचमानवैः ॥ कोविधिःकानिद्रव्याणिकथ
यस्वममप्रभो ॥ ३७ ॥ ईश्वरउवाच ॥ शृणुभद्रेप्रयत्नेनलोकानांहितकाम्यया ॥ उद्यापनविधिंचैवकथयामितवाग्रतः ॥ ३८ ॥ यदासंजायतेवित्तं
भक्तिश्रद्धासमन्विता ॥ सएवव्रतकालश्चयतोनित्यंहिजीवितम् ॥ ३९ ॥ कामक्रोधाद्यहंकारद्वेषपैशुन्यवर्जितः ॥ संपाद्यसर्वसंभारान्मंड
पंकारयेच्छुभम् ॥ ४० ॥ प्रातःस्नात्वाशुचिर्भूत्वाकुर्वन्नुद्यापनंबुधः ॥ मासतिथ्यादिसंकीर्त्यसंकल्पंकारयेत्ततः ॥ ४१ ॥ पुण्याहवाचनंकृत्वावे
दवेदांगपारगम् ॥ आचार्यंवरयेत्पूर्वमृत्विग्भीरुद्रसंख्यकैः ॥ ४२ ॥ देवागारेतथागोष्ठेशुद्धेवास्वीयमंदिरे ॥ पुष्पमंडपिकांकृत्वापट्टकूलादिवे
ष्टिताम् ॥ ४३ ॥ तन्मध्येलिंगतोभद्रंरचयेल्लक्षणान्वितम् ॥ अव्रणंसजलंकुंभंतस्योपरितुविन्यसेत् ॥ ४४ ॥ सौवर्णंराजतंताम्रंमृन्मयं
वास्वशक्तितः ॥ तस्योपरिन्यसेत्पात्रंताम्रंवैणवमृन्मयम् ॥ ४५ ॥ कुंभोपरिन्यसेद्देवमुमयासहितंशिवम् ॥ तयोर्मूर्तिंस्वर्णमयींविधायवृष
भेस्थिताम् ॥ ४६ ॥ ब्रह्माणंदक्षिणेभागेसावित्र्यासहसुप्रभम् ॥ कौबेर्यांस्थापयेद्विष्णुंलक्ष्म्यासहगरुत्मता ॥ ४७ ॥ महेशंस्थापये

न्मध्येशिवावृषसमन्वितम् ॥ ततःपूजांविनिर्वर्त्यमहासंभारविस्तरैः ॥ ४८ ॥ परमान्नंचनैवेद्यंभक्त्यादेवायदापयेत् ॥ उपोष्यजागरंकु
र्याद्रात्रौसत्कथयामुदा ॥ ४९ ॥ ततःप्रभातसमयेस्नात्वाशुद्धेजलेशुचिः ॥ मृदाचस्थंडिलंकार्यंकुर्यादग्निमुखंततः ॥ ५० ॥ प्रदक्षिणाद
शांशेनहवनंकारयेद्व्रती ॥ हवनस्यदशांशेनतर्पणंकारयेत्ततः ॥ ५१ ॥ तर्पणस्यदशांशेनमार्जनंकारयेत्ततः ॥ प्रदक्षिणाशतांशेन
ब्राह्मणान्भोजयेत्सुधीः ॥ ५२ ॥ स्वशाखोक्तेनविधिनाहोमयेद्रुद्रमंत्रकैः ॥ मूलमंत्रेणगायत्र्याशंभोःसहस्रनामभिः ॥ ५३ ॥ पलाश
स्यसमिद्भिश्चयवव्रीहितिलाज्यकैः ॥ पूर्णाहुतिंततोदद्यात्कृत्वास्विष्टकृदादिकम् ॥ ५४ ॥ होमांतेचगुरुंपूज्यसपत्नीकंसमाहितः ॥ प्रति
मांकुंभसहितामाचार्यायनिवेदयेत् ॥ ५५ ॥ शंभोप्रसीददेवेशसर्वलोकेश्वरप्रभो ॥ तवरूपप्रदानेनममसंतुमनोरथाः ॥ ५६ ॥ यद्भ
क्त्यादेवदेवेशमयाव्रतमिदंकृतम् ॥ न्यूनंवाथक्रियाहीनंपरिपूर्णंतदस्तुमे ॥ ५७ ॥ अनेनैवविधानेनयइदंव्रतमाचरेत् ॥ यंयंचिंतयते
कामंतंतंप्राप्नोतिमानवः ॥ ५८ ॥ इहलोकेसुखीभूत्वाभुक्त्वाभोगान्यथेप्सितान् ॥ अंतेविमानमारुह्यशिवलोकंसगच्छति ॥ ५९ ॥ सूत
उवाच ॥ इतिवःकथितंविप्राःशिवोक्तंव्रतमुत्तमम् ॥ प्रदक्षिणात्मकंसम्यक्किमन्यच्छ्रोतुमिच्छथ ॥ ६० ॥ इतिश्रीस्कंदपुराणेशिवप्रद
क्षिणाव्रतोद्यापनंसं० ॥ अथाश्वत्थप्रदक्षिणाविधिः ॥ पिप्पलाद्युवाच ॥ भगवन्सर्वधर्मज्ञसर्वशास्त्रविशारद ॥ स्त्रीणांपुत्रविहीनानांनराणां
सुखसंपदाम् ॥ उपायंचैवमेब्रूहिसुतसिद्धिःकथंभवेत् ॥ अथर्वणउवाच ॥ पुराब्रह्मादयोदेवाःसर्वेविष्णुंसमाश्रिताः ॥ अपृच्छन्देवदेवेशंरा
क्षसैःपीडितावयम् ॥ कथंभवेच्चतच्छांतिरस्माकंवदनिश्चितम् ॥ विष्णुरुवाच ॥ अहमश्वत्थरूपेणसंभवामिचभूतले ॥ तस्मात्सर्वप्रयत्नेन

कुरुध्वंतरुसेवनम्॥तेनसर्वाणिभद्राणिभविष्यंतिनसंशयः॥अथर्वणउवाच॥विष्णुर्यदुक्तवांस्तेभ्यस्तद्व्रतंतेवदाम्यहम्॥ नदानैर्नतपोभिश्चनाध्व
रैर्भूरिदक्षिणैः॥अश्वत्थसेवनादन्यत्कलौनास्त्यपराक्रिया॥तद्विधानंनिमित्तानिसंख्या[१]क्लृप्तिश्चपूजनम्॥हवनंतर्पणंविप्रभोजनंनियमंतथा ॥व्रता
धिकारिणस्तत्रविधानंचविशेषतः ॥एतत्सर्वंपिप्पलादिन्वक्ष्यामितवसुव्रत ॥ दारुणोविविधोत्पातोदिव्यभौमांतरिक्षजः ॥ परचक्रभयंदेशविप्ल
वोदेशविग्रहः॥दुःस्वप्नोदुर्निमित्तंचसंग्रामोद्भुतदर्शनः ॥ मारीभयंराजभयंतथाचोराग्निजंभयम् ॥क्षयापस्मारकुष्ठाद्याःप्रमेहोविषमज्वरः॥ उदरं
मूत्रकृच्छ्रंचग्रहपीडास्तथैवच ॥ अन्येचानुक्तरोगायेव्रणरोगास्तथैवच ॥ एतेषांचविनाशायकुर्यादश्वत्थसेवनम्॥ प्रातरुत्थायनद्यादौस्नात्वा
सम्यक्कृतक्रियः ॥ अश्वत्थदेशमाश्रित्यगोमयेनोपलेपयेत् ॥ तमश्वत्थमलंकृत्यसूत्रेणगैरिकादिना ॥ पूजाद्रव्याणिसंपाद्यपुण्याहंवाचयेत्तथा॥
ऋत्विजांवरणंकृत्वाततःपूजांसमाचरेत् ॥ आदावाराधयेद्विष्णुंध्यानावाहनपूर्वकम् ॥ तथैवपिप्पलतरुंनारायणमयंद्विज ॥ श्वेतगंधाक्षतैः
पुष्पैर्धूपदीपैर्निवेदनैः ॥ अर्चयेत्पुरुषसूक्तेनतथैवध्यानपूर्वकम् ॥ तेनैवहवनंकुर्यात्तर्पणंवानमस्क्रियाम् ॥ श्वेतवस्त्रंसलक्ष्मीकंचिंतयेत्पुरुषो
त्तमम् ॥ ततोऽश्वत्थमभिमंत्र्य ॥ आरात्तइत्यस्याग्निकांडांतःपातित्वादग्निर्ऋषिः ॥ वनस्पतिर्देवता ॥ अनुष्टुप्छंदः ॥ वनस्पत्य
भिमंत्रणेविनियोगः ॥ आरात्तेअग्निरस्त्वारात्परशुरस्तुते ॥ निवातेत्वाभिवर्षतुस्वस्तितेस्तुवनस्पते ॥ अक्षिस्पंदंभुजस्पंदंदुःस्वप्नं
दुर्विचिंतितम् ॥ शत्रूणां[२]चसमुत्पन्नमश्वत्थशमयस्वमे ॥ ततःप्रदक्षिणाःकुर्यात्तत्सर्वंसफलंभवेत् ॥ लक्षमेकंद्विलक्षंवात्रिचतुःपंचलक्ष

१ इतआरभ्यशमयस्वमेइत्यंतोग्रंथएकस्मिन्व्रतार्केवर्तते । २ शत्रुसंबंधिसमुत्पन्नंभयमित्यर्थः ।

कम् ॥ कार्यस्यगौरवंज्ञात्वाद्वादशांतंसमाचरेत् ॥ ब्रह्मचारीहविष्याशीह्यधःशायीजितेंद्रियः ॥ मौनीध्यानपरोभूत्वापिप्पलस्यस्तुतिंप
ठेत् ॥ विष्णोर्नामसहस्रंचपौरुषंवैष्णवंतथा[1] ॥ एवंसंपाद्यविधिवच्छुभेमासेशुभेदिने ॥ प्रातःस्नात्वाशुचिर्भूत्वाकुर्यादुद्यापनंबुधः ॥
गणेशपूजनंस्वस्तिवाच्यनांदींचकारयेत् ॥ आचार्यंवरयेत्पश्चात्सर्वलक्षणसंयुतम् ॥ देवागारेतथागोष्ठेअश्वत्थेस्वीयमंदिरे ॥ पुष्पमं
डपिकांकृत्वापट्टकूलादिवेष्टिताम् ॥ तन्मध्येसर्वतोभद्रंरचयेल्लक्षणान्वितम् ॥ तन्मध्येस्थापयेत्कुंभंसजलंवस्त्रसंयुतम् ॥ तस्योपरिन्यसे
त्पात्रंताम्रंमृन्मयवैणवम् ॥ अष्टपत्रान्वितंपद्मंकर्णिकाभिःसमन्वितम् ॥ पंचकृष्णलकादूर्ध्वंसुवर्णपरिनिर्मिताम् ॥ लक्ष्मीनारायणीं
मूर्तिमश्वत्थेनसमन्विताम् ॥ स्थापयेत्पद्ममध्येतुब्रह्माद्यावाहनंततः ॥ ततःपूजांविनिर्वर्त्यमहासंभारविस्तरैः ॥ परमान्नंचनैवेद्यं भक्त्या
देवायदापयेत् ॥ उपोष्यजागरंकुर्याद्रात्रौसत्कथयामुदा ॥ ततःप्रभातसमयेस्नात्वाशुद्धेजलेशुचिः ॥ मृदाचस्थंडिलंकार्यंकुर्यादग्निमुखं
ततः ॥ कृतलक्षदशांशेनहवनंकारयेद्व्रती ॥ हवनस्यदशांशेनतर्पणंकारयेत्ततः ॥ पुरुषसूक्तेनसमिधस्तिलाज्यंपायसंतथा ॥ स्वशाखोक्ते
नविधिनाजुहुयाद्विष्णुतत्परः ॥ उच्चैःषोडशऋत्विग्भिःकुर्याद्धोमंयथाविधि ॥ हवनस्यदशांशेनमिष्टान्नंभोजयेद्द्विजान् ॥ ब्राह्मणानांस्वयंकु[2]
र्याद्यथोक्तंनियमंतथा ॥ असामर्थ्येस्वयंकर्तुंसर्वमन्येनकारयेत् ॥ उक्तप्रमाणादधिकंफलंदशगुणंभवेत् ॥ ततश्चतुर्[3]गुणंपीठंराजतंचतुरस्रकम्॥

---

१ व्रतार्कपुस्तकेषु एतदग्रे वेदत्रयस्यपुण्यानिसूक्तानिचपठेत्पुनः ॥ ततोलक्षदशांशेनसघृतंपायसंचरुम् ॥ जुहुयात्प्रत्यृचंत्रह्मास्त्रगृह्योक्तविधानतः ॥ तत्संख्ययातर्पणंचकुर्याद्यत्नेनवारिणा ॥ उच्चैःषोडशऋत्विग्भिरित्येतावानेवपाठोदृश्यते ॥ एवमित्यारभ्यतत्परइत्यंतोग्रंथस्तुनोपलभ्यते । २ ब्राह्मणैर्यथोक्तंनियमंस्त्रयंकुर्यादित्यर्थः । ३ अश्वत्थापेक्षया ।

उपरिद्रोणमर्धंवातिलान्परिविनिःक्षिपेत् ॥ श्वेतवस्त्रेणसंछाद्यपूर्ववत्पूजयेत्तरुम् ॥ दरिद्रायसुशीलायश्रोत्रियायकुटुंबिने ॥ उदङ्मुखायवि
प्रायस्वयंपूर्वमुखःस्थितः ॥ सुवर्णवृक्षराजंचमंत्रेणप्रतिपादयेत् ॥ इहजन्मनिवान्यस्मिन्बाल्ययौवनवार्धके ॥ मनोवाक्कायजैर्दोषैर्मुच्यतेना
त्रसंशयः ॥ एवंकृत्वाव्रतीसम्यग्व्रतस्यपरिपूर्तये ॥ हेमाश्वत्थतरुंदद्याच्छुक्लांगांचपयस्विनीम् ॥ पलेनवातदर्धेनतदर्धार्धेनवापुनः ॥
हेम्नाश्वत्थतरुंकुर्यात्स्कंधशाखासमन्वितम् ॥ पिप्पलोवृक्षराजेंद्रह्यग्निगर्भस्त्वमेवहि ॥ प्रभुर्वनस्पतीनांचपूर्वजन्मनिमत्कृतम् ॥ अघौघंनाश
येः क्षिप्रंतवरूपप्रदानतः ॥ अमुंतरुंगृहाणत्वंविष्णुरूपद्विजोत्तम ॥ स्वीकृत्यदुष्करंघोरंक्षिप्रंशांतिंप्रयच्छमे ॥ एवंव्रतंयःकुरुतेपुत्रपौत्रप्रवर्ध
कम् ॥ भुक्त्वाभोगान्सुविपुलान्विष्णुसायुज्यमाप्नुयात् ॥ इत्यद्भुतसारेअश्वत्थप्रदक्षिणाव्रतंसोद्यापनंसं० ॥ अथप्रसंगाद्विष्णोरश्वत्थरूपे
णाविर्भावकारणमश्वत्थस्यलक्षप्रदक्षिणादिकरणंविधानंचकार्तिकमाहात्म्ये ॥ ऋषयऊचुः ॥ पलाशत्वंकथंजातंब्रह्मणःशंकरस्यच ॥
वटत्वंचतथाविष्णोःपिप्पलत्वंब्रुवंतुतत् ॥ १ ॥ वालखिल्याऊचुः ॥ ब्रह्मणातुपुरासृष्टाःसर्वेदेवाःसवासवाः ॥ मिलित्वासर्वएवैतेब्रह्माण
वाक्यमब्रुवन् ॥ २ ॥ ब्रह्मन्सर्वाधिकोरुद्रःसर्ववेदेषुदठ्यते ॥ कर्तुंतद्दर्शनंदेवगच्छामोभवतासह ॥ ३ ॥ इतींद्रादिवचःश्रुत्वासर्वदेवपुरो
गमः ॥ ब्रह्माकैलासमगमन्नानादेवसमावृतः ॥ ४ ॥ शिवद्वारंसमासाद्यदेवाःसर्वेपिसंस्थिताः ॥ नदृश्यतेद्वारपालःशिवश्चाभ्यंतरे
स्थितः ॥ ५ ॥ गंतव्यंवानगंतव्यमस्माभिःशिवसंन्निधौ ॥ परावृत्त्याथवास्वस्यस्थानंगंतव्यमेववा ॥ ६ ॥ एवंचिंतयमानैस्तैर्नारदो
मुनिसत्तमः ॥ पुरोदृष्टोदेववृंदैस्तमूचुःप्रणताश्चते ॥ ७ ॥ देवाऊचुः ॥ मुनेवेदविदांश्रेष्ठब्रूहिप्रश्नंसुशोभनम् ॥ किंकरोतिमहादेवोग

तव्यंवानवांतरे ॥ ८ ॥ नारदउवाच ॥ चंद्रनाशदशायांतुदेवाःसंप्रस्थितागृहात् ॥ तस्मात्कश्चिन्महाविघ्नोभवतांसंभविष्यति ॥ ९ ॥
किंकरोतिशिवश्चेतिप्रश्नोह्यंतेतथाविधोः ॥ तस्मात्संभोगकार्येचवर्ततेत्रिपुरांतकः ॥ १० ॥ इंद्रउवाच ॥ ॥ सर्वेषामेवदुःखानां
नाशकर्तादिवस्पतिः ॥ मय्यागतेकथंनाशोदेवतानांभविष्यति ॥ ११ ॥ विभीषणायदेवानांवलगनंकुरुतेमुनिः ॥ इतींद्रस्यवचःश्रु
त्वाव्याकुलोभून्मुनिस्तदा ॥ १२ ॥ कथंमद्वचनंसत्यंभविष्यत्यद्यवज्रिणि ॥ अद्यमद्वचनंसत्यंयदिशीघ्रंभविष्यति ॥ १३ ॥
राधादामोदरमुदेकरिष्येव्रतमुत्तमम् ॥ एवंसंचिंत्यमनसातूष्णींभूतोमुनीश्वरः ॥ १४ ॥ इंद्रोविचारयन्देवैःकिमिदानींविधीयताम् ॥
ततोवज्रीह्युवाचेदंवह्नेमद्वचनंशृणु ॥ १५ ॥ गृहीत्वाविप्ररूपंत्वंशिवस्याभ्यंतरंविश ॥ यदिप्रसंगोस्त्यस्माकंतदावार्तानिगद्यताम् ॥ १६ ॥
यदिनास्तिप्रसंगश्चेद्याचकत्वेनयाचहि ॥ अवध्यत्वादताडयत्वाद्भिक्षुकत्वेनतद्व्रज ॥ १७ ॥ इतिदेवेंद्रवचनंश्रुत्वावह्निस्तथाकरोत् ॥
अभ्यंतरेददर्शेशांशिवयासहसंगतम् ॥ १८ ॥ शिवयापिचदृष्टःसलज्जिताभोगमत्यजत् ॥ कोसिकोसीतिसंपृष्टोभिक्षुकोहंक्षुधायुतः ॥ १९ ॥
वृद्धोस्म्यंधोस्मिदीनोस्मिभोजनंममदीयताम् ॥ तेनादृष्टमितिज्ञात्वापार्वतीतमभोजयत् ॥ २० ॥ सोपिभुक्त्वासमाचारंवक्तुंसंप्रास्थि
तोबहिः ॥ तस्मिन्नेवक्षणेगुप्तोनारदःपार्वतींययौ ॥ २१ ॥ शिरोनिधायपार्वत्याःपादयोःसरुरोदह ॥ अहोबालककिंजातंतच्छीघ्रंमेभिधीय
ताम् ॥ २२ ॥ करोमिनिष्कृतिंतस्यसाध्यासाध्यस्यनान्यथा ॥ मातर्वक्तुंनशक्नोमिह्युपहासस्यकारणम् ॥ २३ ॥ कृतंयथेंद्रादिदेवैस्तथा
कोन्यःकरिष्यति ॥ इतितस्यवचःश्रुत्वापुनःपुनरपृच्छत ॥ २४ ॥ मुद्रयित्वाततोनेत्रेकराभ्यांसमुनीश्वरः ॥ उवाचवचनंनीचमुखोसौगद्
दाक्षरम् ॥ २५ ॥ नारदउवाच ॥ इंद्रोयंयुवयोर्भोगंदेवताभ्योह्यदर्शयत् ॥ युवयोश्चकृतानिंदातांश्रुत्वादुःखितोस्म्यहम् ॥ २६ ॥ भोगवि

